# राजनिघण्टुः ।

---

महामहोपाध्याय-

श्रीमन्नरहरिपण्डितविरचितः ।

---

"निघण्टुना विना वैद्यो विद्वान् व्याकरणं विना ।
अनभ्यासेन धानुष्कस्त्रयो हास्यस्य भाजनम् ॥"

---

पण्डितकुलपतिना, बि, ए, उपाधिधारिणा,
श्रीमज्जीवानन्द विद्यासागरभट्टाचार्य्यात्मजेन
श्रीआशुबोधविद्याभूषणभट्टाचार्य्येण
तथा
श्रीनित्यबोधविद्यारत्नभट्टाचार्य्येण च

देशान्तराभिधानेन संक्षिप्तटीकया च समलङ्कृतः संस्कृतः
संशोधितः प्रकाशितश्च ।

---

द्वितीयसंस्करणम् ।

---

कलिकातामहानगर्य्याम्
सिद्धेश्वरयन्त्रे
मुद्रितः ।

# अथ राजनिघण्टौ वर्गानुक्रमेण सूचीपत्रम् ।

## अथ करवीरादिवर्गः ।

## अथ सिंहादिवर्गः।

—

## राजनिघण्टौ साङ्केतिका: शब्दा: ।

| | | |
|---|---|---|
| उत्० | ... | उत्कल । |
| कं | ... | कर्णाट: । |
| कों | ... | कोङ्कण । |
| गुर्जं | ... | गुर्जर: । |
| गौ | ... | गौड़: । |
| तां | ... | तामिल: । |
| तैं | ... | तैलङ्ग: । |
| दा | ... | दाक्षिणात्य: । |
| नेपा० | ... | नेपाल: । |
| पञ्जा० | ... | पञ्जाब: । |
| फा | ... | फारसी । |
| मं | ... | महाराष्ट्र: । |
| वम्० | ... | वम्बइ । |
| हिं | ... | हिन्दी । |

—०*०—

# राजनिघण्टुः ।

## मङ्गलाचरणम् ।

श्रीकण्ठाचलमेखलापरिणमत्कुम्भीन्द्रबुद्ध्या रद-
प्रान्तोत्तम्भितसंभृताब्दगलितैः शीतैरपां शीकरैः ।
निर्वाणे मदसंज्वरे प्रमुदितस्तेनाऽऽतपत्रश्रियं
तन्वानेन निरन्तरं दिशतु वः श्रीविघ्नराजो मुदम् ॥ १ ॥

कर्पूरक्षोदगौरं धृतकपिलजटं त्र्यीक्षणं चन्द्रमौलिं
सौधं कुण्डं सुधांशुं वरयुतमभयं दोश्चतुष्के दधानम् ।
वामोत्सङ्गे वहन्तं विविधमणिगणालङ्कृतामुज्ज्वलाङ्गीं
शर्वाणीं स्वानुरूपां तमनिशममृतेशाख्यमीशं स्मरामि ॥ २ ॥

श्रीमन्महेशनलिनासननिर्जरेन्द्रा-
स्तत्राश्विनावथ ततो वितनूद्भवश्च ।
धन्वन्तरिश्चरकसुश्रुतसूरिमुख्या-
स्तेऽप्यायुरागमकृतः कृतिनो जयन्तु ॥ ३ ॥

शम्भुं प्रणम्य शिरसा स्वगुरूनुपास्य
पित्रोः पदाब्जयुगले प्रणिपत्य भक्त्या ।
विघ्नेशितारमधिगम्य सरस्वतीञ्च
प्रारम्भि भैषजहिताय निघण्टराजः ॥ ४ ॥

# अथ ग्रन्थप्रस्तावना

-०*०-

धन्वन्तरीय-मदनादिहलायुधादीन्
विश्वप्रकाश्यमरकोषसशेषराजौ* ।
आलोक्य लोकविदितांश्च विचिन्त्य शब्दान्
द्रव्याभिधानगणसंग्रह एष सृष्टः ॥ ५ ॥

आयुःश्रुतीनामतुलोपकारकं
धन्वन्तरिग्रन्थमतानुसारकम् ।
आचक्ष्महे लक्षणलक्ष्मधारकं
नामोच्चयं सर्वरुजापसारकम् ॥ ६ ॥

निर्देशलक्षणपरीक्षणनिर्णयेन
नानाविधौषधविचारपरायणो यः ।
सोऽधीत्य यत् सकलमेनमवैति सर्वं
तस्मादयं जयति सर्वनिघण्टुराजः ॥ ७ ॥

नानाविधौषधिरसाह्वयवीर्यपाक-
प्रस्तावनिस्तरणपण्डितचेतनोऽपि ।
मुह्यत्यवश्यमनवेक्ष्य निघण्टुमेनं
तस्मादयं विरचितो भिषजां हिताय ॥ ८ ॥

निघण्टुना विना वैद्यो विद्वान् व्याकरणं विना ।
अनभ्यासेन धानुष्कस्त्रयो हास्यस्य भाजनम् ॥ ९ ॥

---

*राजौ—भोजराज-शेषराजौ ।

नानादेशविशेषभाषितवशादयत् संस्कृतप्राकृता-
पभ्रंशादिकनाम्नि नैव गणना द्रव्योच्चयव्याहृतौ।
तस्मादत्र तु यावतास्त्युपकृतिस्तावन्मया गृह्यते
पाथोदैः परिपीयते किमखिलं तद्वारि वारां निधेः॥ १०

आभीरगोपालपुलिन्दतापसाः
पान्थास्तथाऽन्येऽपि च वन्यपारगाः।
परीक्ष्य तेभ्यो विविधौषधाभिधा-
रसादिलक्ष्माणि ततः प्रयोजयेत् ११॥

नानाभिधेयमथ यत्र शिवासमङ्गा-
श्यामादिनाम निगमेषु निवेशितं यत्।
प्रस्ताववीर्य्यरसयोगवशादमुष्य
बुद्ध्या विमृश्य भिषजां च धृतिर्विधेया॥ १२॥

नामानि क्वचिदिह रूढ़ितः स्वभावात्
देश्योक्त्या क्वचन च लाञ्छनोपमाभ्याम्।
वीर्य्येण क्वचिदितराह्वयादिदेशात्
द्रव्याणां ध्रुवमिति सप्तधोदितानि॥ १३॥

अत्रौषधीनिवहनामगुणाभिधान-
प्रस्तावतस्तदुपयुक्ततयेतराणि।
क्षेत्रावनीधरनदीनरतिर्य्यगादीन् *
व्याख्यागुणैरतिसविस्तरमीरितानि॥ १४॥

एकः कोऽपि सचेतसां यदि मुदे कल्पेत जल्पे गुण-
स्तत्रान्येऽपि विनार्थनां कृतमतिं सन्तः स्वयं तन्वते।

* तिर्य्यगादीन् इत्यत्र छन्दोऽनुरोधात् पुंस्त्वम्।

अप्यार्द्रीकृतशैलसानुगशिलामापीय चान्द्रीं सुधा-
मम्भोधिः कुमुदैर्दृशश्च जगतां नन्दन्ति केनार्दिताः ॥ १५ ॥

अप्रसिद्धाभिधं चात्र यदौषधमुदीरितम् ।
तस्याभिधाविवेकः स्यादेकार्थादिनिरूपणे ॥ १६ ॥
रम्भाश्यामादिनाम्नां ये स्वर्गस्त्रीतरुणीति च ।
अर्था नानार्थतन्त्रोक्तास्त्यक्तास्तेऽस्मिन्नपार्थकाः ॥ १७ ॥
व्यक्तिः कृताऽत्र कर्णाट-महाराष्ट्रीयभाषया ।
आन्ध्रलाटादिभाषास्तु ज्ञातव्यास्तद्व्याश्रयाः ॥ १८ ॥

एतत्त्रिनेत्रगुणनीयगुणानुविद्ध-
वर्णाढ्यवृत्तसितमौक्तिकवर्गसारम् ।
कण्ठे सतां सकलनिर्वृतिधामनाम-
चिन्तामणिप्रकरदाम करोतु केलिम् ॥ १९ ॥

अत्रानूपादिरस्मादवनिरथ गुडूचीशताह्वादिकौ द्वौ
तत्प्रान्ते पर्पटादिस्तदुपरि पठितौ पिप्पलीमूलकादिः ।
शाल्मल्यादिः प्रभद्रादिकमनु करवीरादिराम्रादिरन्य-
स्तस्याग्रे चन्दनादिस्तदनु निगदितः कोमलः काञ्चनादिः॥२०॥
पानीयः क्षीरशाल्यादिकमनु कथितो मांसमानुष्यकादिः
सिंहादिः स्याद्गदादिस्तदनु भवति सत्त्वाधिको मिश्रकोऽन्यः ।
एकार्थादिस्तदेतैस्त्रिकरपरिचितैः प्रातिभोन्मेषसर्गं
वर्गैरासाद्य वैद्यो निजमतहृदये निस्तरां निश्चिनोतु ॥ २१ ॥

काश्मीरेण कपर्दिपादकमलद्वन्द्वार्चनोपार्जित-
श्रीसौभाग्ययशःप्रतापपदवी धाम्ना प्रतिष्ठापिता ।

सेयं श्रीनरसिंहनामविदुषो स्ववैद्यविद्यास्थितिः
प्रीत्या प्राप्तसुवर्णराजिरचना चित्रोज्ज्वला पीठिका ॥ २२ ॥

अन्यत्र विद्यमानत्वादुपयोगानवेक्षणात् ।
वृथा विस्तरभीत्या च नोक्तो गुणगणो मया ॥ २३ ॥

इति ग्रन्थप्रस्तावना ।

## अथ आनूपादिवर्गः ।

अथ आनूपदेशः ।—

नानावृक्षौघजुष्टं जलचरखगनानाजलमृगसहितं निर्झरव्रातप्रोतं
शैलाकीर्णं कनीयः कुररमुखखगालङ्कृतं ताम्रभूमि ।
बिभ्रद्व्रीह्यादिकं यत् स्थलमतिविपुलं नीरसं यत्त्वनुष्णं
पित्तघ्नं श्लेष्मवातप्रदमुदररुजापामदं स्यादनूपम् ॥ १ ॥

तच्चोक्तकृत्स्ननिजलक्षणधारिभूरि-
च्छायावृतान्तरवहद्बहुवारिमुख्यम् ।
ईषत्प्रकाशसलिलं यदि मध्यमं तत्
एतच्च नातिबहुलाम्बु भवेत्कनीयः ॥ २ ॥

अथ जाङ्गलदेशः ।—

यत्रानूपविपर्ययस्तनुतृणास्तीर्णा धरा धूसरा
मुद्गव्रीहियवादिधान्यफलदा तीव्रोष्मवत्युत्तमा ।
प्रायः पित्तविवृद्धिसंहतबलाः स्युर्नीरजः प्राणिनो
गावोऽजाश्च पयः क्षरन्ति बहु तत्रापि जलं जाङ्गलम् ॥ ३ ॥

एतच्च मुख्यमुदितं स्वगुणैः समग्र-
मल्पाल्पभूरुहयुतं यदि मध्यमं तत् ।
तत्रापि कूपखनने सुलभाम्बु यत्तज्-
ज्ञेयं कनीय इति जाङ्गलकं त्रिरूपम् ॥ ४ ॥

अथ साधारणदेशः ।—

लक्ष्मीोन्मीलति यत्र किञ्चिदुभयोस्तज्जाङ्गलानूपयो-
र्गोधूमोत्थयवनालतिलसन्माषादिधान्योद्भवः ।
नानावर्णमशेषजन्तुसुखदं देशं बुधा मध्यमं
दोषोद्भूतिविकोपशान्तिसहितं साधारणं तं विदुः ॥ ५ ॥
तच्च साधारणं द्वेधाऽऽनूपजाङ्गलयोः परम् ।
यत्र यत्र गुणाधिक्यं तत्र तस्य गुणं भजेत् ॥ ६ ॥
मुख्यं तद्देशवैषम्यान्नास्ति साधारणं क्वचित् ।
सूक्ष्मत्वाल्लक्ष्म तत्त्वस्य तद्विधैर्वेदमिष्यते ॥ ७ ॥

अथ क्षेत्रभेदाः ।—

क्षेत्रभेदं प्रवक्ष्यामि शिवेनाख्यातमञ्जसा ।
ब्राह्मं क्षात्रं च वैश्यीयं शौद्रं चेति यथाक्रमात् ॥ ८ ॥
तत्र क्षेत्रे ब्रह्मभूमीरुहाढ्यं वारिस्फारं यत्कुशाङ्कुरकीर्णम् ।
रम्यं यच्च श्वेतमृत्स्नासमेतं तद्व्याचष्टे ब्राह्ममित्यष्टमूर्त्तिः ॥ ९ ॥
ताम्रभूमिवलयं विभूधरं यन्मृगेन्द्रमुखसङ्कुलं कुलम् ।
घोरघोषि खदिरादिदुर्गमं क्षात्रमेतदुदितं पिनाकिना ॥ १० ॥
शातकुम्भनिभभूमिभास्वरं स्वर्णरेणुनिचितं विधानवत् ।
सिद्धकिन्नरसुपर्वसेवितं वैश्यमाख्यदिदमिन्दुशेखरः ॥ ११ ॥

श्यामस्थलाढ्यं बहुशस्यभूतिदं लसत्तृणैः कुल[illegible]दम् ।
धान्योद्भवैः क[illegible]दं जगाद शौद्रं जगती वृषध्वजः ॥१२॥

द्रव्यं चैतादुदितमनघं ब्राह्म तत् सिद्धिदायि
क्षत्रादुत्थं बलिपलितजिद्दिव्यरोगापहारि ।
वैश्याज्जातं प्रभवतितरां धातुलोहादिसिद्धौ
शौद्रादेतज्जनितमखिलव्याधिविद्रावकं द्राक् ॥ १३ ॥

ब्रह्मा.शक्रः किन्नरेशस्तथा भूरित्येतेषां देवताः स्युः क्रमेण ।
प्रोक्तास्तत्र प्रागुमावल्लभेन प्रत्येकं ते पञ्च भूतानि वच्मे ॥१४॥

पीतस्फुरद्वलयशर्करिलाश्मरम्यं
पीतं यदुत्तममृगं चतुरस्रभूतम् ।
प्रायश्च पीतकुसुमान्वितवीरुदादि
तत्पार्थिवं कठिनमुद्यदशेषतस्तु ॥ १५ ॥

अर्द्धचन्द्राकृतिश्वेतं कमलाभं दृषच्चितम् ।
नदीनदजलाकीर्णमाप्यं तत् क्षेत्रमुच्यते ॥ १६ ॥
खदिरादिद्रुमाकीर्णं भूरिचित्रकवेणुकम् ।
त्रिकोणं रक्तपाषाणं क्षेत्रं तैजसमुत्तमम् ॥ १७ ॥

धूम्रस्थलं धूम्रदृषत्परीतं षट्कोणकं तूर्णमृगावकीर्णम् ।
शाकैस्तृणैरञ्चितरूक्षवृक्षकं प्रकारमेतत् खलु वायवीयम् ॥१८॥
नानावर्णं वर्त्तुलं तत्प्रशस्तं प्रायः शुभ्रं पर्वताकीर्णमुच्चैः ।
यत्र स्थानं पावनं देवतानां प्राह क्षेत्रं त्वीक्षणस्त्वान्तरिक्षम् ॥१९॥
द्रव्यं व्याधिहरं बलीतिशयकृत् स्वादु स्थिरं पार्थिवं
स्वादाप्यं कटुकं कषायमखिलं शीतं च पित्तापहम् ।

यत्तिक्तं लवणं च दीप्यमरुजिद्युष्णं च तत्तैजसं
वायव्यं तु हिमोष्णमम्लमबलं स्याम्नाभसं नीरसम् ॥ २० ॥

ब्रह्मा विष्णुश्च रुद्रोऽस्मादीश्वरोऽथ सदाशिवः ।
इत्येताः क्रमतः पञ्च क्षेत्रभूताधिदेवताः ॥ २१ ॥

जित्वा जवादजरसैन्यमिहाजहार
वीरः पुरा युधि सुधाकलशं गरुत्मान् ।
कीर्णैस्तदा भुवि सुधाशकलैः किलासी-
द्वृक्षादिकं सकलमस्य सुधांशुरोशः ॥ २२ ॥

तत्रोत्पन्नास्तूत्तमे क्षेत्रभागे विप्रोयादौ विप्रुषो यत्र यत्र ।
क्षोणीजादिद्रव्यभूयं प्रपन्नास्तास्ताः संज्ञा बिभ्रते तत्र भूयः ॥२३॥

एवं क्षेत्रानुगुण्येन तज्जा विप्रादिवर्णिनः ।
यदि वा लक्षणं वक्ष्याम्यमोहाय मनीषिणाम् ॥ २४ ॥

किसलयकुसुमे प्रकाण्डशाखादिषु विशदेषु वदन्ति विप्रमेतान् ।
नरपतिमतिलोहितेषु वैश्यं कनकनिभेषु सितेतरेषु शूद्रम् ॥२५॥

विप्रादिजातिसम्भूतान् विप्रादिष्वेव योजयेत् ।
गुणाढ्यानपि वृक्षादीन् प्रातिलोम्यं न चाचरेत् ॥२६॥

अपि च ।—

विप्रो विप्राद्येषु वर्णेषु राजा राजन्यादौ वैश्यमुख्येषु वैश्यः ।
शूद्रः शूद्राद्येषु शस्तं गुणाढ्यं द्रव्यं नैव प्रातिलोम्येन किञ्चित्॥२७

द्रव्यं यदङ्कुरजमाहुरार्य्यास्तत्ते पुनः पञ्चविधं वदन्ति ।
वनस्पतिश्चापि स एव वानस्पत्यः क्षुपो वीरुदथौषधीश्च ॥ २८ ॥

ज्ञेयः सोऽत्र वनस्पतिः फलति यः पुष्पैर्विना तैः फलं
वानस्पत्य इति स्मृतस्तनुरसौ ह्रस्वः क्षुपः कथ्यते ।

या वेल्लत्यगमादिसंश्रयवशादेषा तु वल्ली मता
शाल्यादिः पुनरोषधिः फलपरीपाकावसानान्विता ॥२९॥

स्त्रीपुंनपुंसकत्वेन त्रैविध्यं स्थावरेष्वपि ।
शृणु वक्ष्यामि तल्लक्ष्म व्यक्तमत्र यथाक्रमम् ॥ ३० ॥

इक्षुवेणुतरुवीरुदादयः स्कन्धकाण्डफलपुष्पपल्लवैः ।
स्निग्धदीर्घतनुतामनोरमास्ताः स्त्रियः खलु मता विपश्चिताम्॥३१॥

यत्र पुष्पप्रबालादि नातिदीर्घं न चाल्पकम् ।
स्थूलं परुषमित्येष पुमानुक्तो मनीषिभिः ॥ ३२ ॥

स्त्रीपुंसयोर्यत्र विभाति लक्ष्म द्वयोरपि स्कन्धफलादिकेषु ।
सन्देहदं नैकतरावधारि नपुंसकं तद्विबुधा वदन्ति ॥ ३३ ॥

द्रव्यं पुमान् स्यादखिलस्य जन्तोरारोग्यदं तद्बलवर्द्धनञ्च ।
स्त्री दुर्बला स्वल्पगुणा गुणाढ्या स्त्रीष्वेव न क्वापि नपुंसकः स्यात्३४

तथा च ।—

यदि स्त्रियः स्त्रीषु कृता गुणाढ्याः
क्लीवानि तु क्लीवशरीरभाजाम् ।
सदा च सर्वत्र पुमान् प्रयुक्तो
गुणावहस्त्वेति च केचिदाहुः ॥ ३५ ॥

क्षुत्पिपासा च निद्रा च वृक्षादिष्वपि लक्ष्यते ।
मृज्जलादानतस्त्वाद्ये पर्णसंकोचिताऽन्तिमा ॥ ३६ ॥

यत्काठिन्ये सा क्षितिर्योद्रवोऽम्भस्तेजस्तूष्मा वर्द्धते यत् स वातः ।
यद्यच्छिद्रं तन्नभः स्थावराणामित्येतेषां पञ्चभूतात्मकत्वम् ॥३७॥

इत्थं देशगुणस्वरूपकथनप्रक्रान्तकान्तारज-
नेकद्रव्यगुणान्वयक्रममिमं वर्गं पठित्वा नरः ।

प्राप्नोत्याशु भिषक् प्रयोगविषयप्रावीण्यपारीणता-
ऽलंकुर्वाणसुपर्वसंसदगदङ्कारक्रियाकौशलम् ॥ ३८ ॥
असूत सुतमीश्वरः श्रुतयशा यमष्टादश-
प्रभेदविधवाङ्मयाम्बुनिधिपारपारीणधीः ।
अमुष्य नृहरेर्गिरः कृतिवरस्य वर्गः कृता-
वसावगमदादिमः सदभिधानचूडामणौ ॥ ३९ ॥

इति श्रीनरहरिपण्डितविरचिते राजनिघंटौ
अ.नूपादिवर्गः प्रथमः ।

---

## अथ धरण्यादिवर्गः ।

-०*०-

अथ भूमिनाम ।—

अथ धरणि-धरित्री-भूतधात्री-धरा-भू-
क्षिति-महि-धरणीडा-क्ष्मा-वनी-मेदिनीज्या ।
अवनिरुदधिवस्त्रा गौः क्षमा क्षौणिरुर्वी
कुरपि वसुमतीरा काश्यपी रत्नगर्भा ॥ १ ॥
क्ष्माऽऽदिमा भूमिरिला वसुन्धरा
वरा च धात्री वसुधाऽचलोर्वरा ।
विश्वम्भराद्या जगती क्षिती रसा
पृथ्वी च गोत्रा पृथिवी पृथुर्मही ॥ २ ॥
क्षौणी सर्वंसहाऽनन्ता भूतमाता च निश्चला ।
भूमी बीजप्रसूः श्यामा क्रोडकान्ता च कीर्त्तिता ॥ ३ ॥

अथोर्वरभूमिः ।—

सा भूमिरुर्वराख्या या सर्वशस्योद्भवप्रदा ।
समस्तवस्तूद्भवनादुर्वरा नाम भूरियम् ॥ ४ ॥

अथ मृत्तिकानाम ।—

मृन्मृत्तिका प्रशस्ता सा मृत्सा मृत्स्नेति चेष्यते ॥ ५ ॥

अथ चारमरुभूमौ ।—

चारा मृदूषरो देशस्तद्वानिरणमूषरम् ।
खिलमप्रहतं प्रायुर्धन्वा तु मरुरुच्यते ॥ ६ ॥

( खड़सरादिकरम्रादिभूमिः । )

अथ जाङ्गलदेशः ।—

मरुप्रायस्तु यो देशः स चोक्तो जाङ्गलाभिधः ।

अथ कृष्णपाण्डुभूमौ ।—

कृष्णमृत् कृष्णभूमिः स्यात् पाण्डुभूमिस्तु पाण्डुमृत् ॥ ७ ॥

( मं पाण्ढरोभुंई । कं करियभूमि निलियभूमि । )

अथ शर्करा भूमिः ।—

स शार्करः शार्करिलो देशो यः शर्करान्वितः ।
सैकतः स्यात् सिकतिलः सिकतावांश्च यो भवेत् ॥ ८ ॥

( मं वालुवटभूमि । कं मळलभूमि । )

अथ देशनाम ।—

देशो जनपदो नीवृद्विषयश्चोपवर्त्तनम् ।
प्रदेशः स्थानमाख्या भूरवकाशः स्थितिः पदम् ॥ ९ ॥

अथ नदीमातृकभूमिः देवमातृकभूमिश्च ।—

नद्यम्बुजैर्भृतो धान्यैर्नदीमातृक उच्यते ।
वृष्ट्यम्बुजैस्तु तैरेष देशः स्याद्देवमातृकः ॥ १० ॥

द्वैमातृकभूमिः ।—

नदीवृष्टिजलोद्भूतैर्नानाधान्यैः समावृतः ।
देशो द्वयानुगमनात् स द्वैमातृक उच्यते ॥ ११ ॥

अथ मुद्गादीनां क्षेत्रम् ।—

मुद्गादीनां क्षेत्रमुद्गूतिदं यत्तन्मौद्गीनं कोद्रवीणं तथाऽन्यत् ।
व्रैहेयं स्यात् किञ्च शालेयमेवं बुद्गाणव्यञ्चाणवीनञ्च विद्यात् ॥१२॥

अथ माष्यं माषीणं भङ्ग्यं भाङ्गीनमुम्यमौमीनम् ।
तिल्यं तैलीनं स्यादिति षष्टिकयञ्च यव्यञ्च ॥ १३ ॥

शाकादेर्यत्र निष्पत्तिरेतत् स्याच्छाकशाकटम् ।
शाकशाकिनमित्येतत्तथा वास्तूकशाकटम् ॥ १४ ॥

अथ शैलनाम ।—

अथ गिरि-धरणीध्र-गोत्र-भूभृत्-
शिखरि-शिलोच्चय-शैल-सानुमन्तः ।
क्षितिभृदग-नगावनीधराद्रि-
स्थिर-कुधराश्च धराधरो धरश्च ॥ १५ ॥

अहार्य्यः पर्वतो ग्रावा कटको प्रस्थवानपि ।
शृङ्गी च वृक्षवांश्चेति शब्दाः शैलार्थवाचकाः ॥ १६ ॥

अथ पर्वतावयवनाम ।—

मध्यमस्तु नितम्बः स्यात् कटकं मेखला च सा ।
तटे तटी प्रपातश्च प्रस्थे स्नुः सानुसानुनी ॥ १७ ॥

( मं टेकुलियादि । कं किरुवेट्टादि । )

अथ शिखरनाम ।—

शृङ्गं तु शिखरं कूटं कन्दरे कन्दरा दरी ।

( मं डोङ्गराचेंशिखर । कं कोडुगल्लु । )

अथ गुहानाम ।—

बिलं गुहा शिलासन्धिर्देवखातश्च गह्वरम् ॥ १८ ॥

( मं पर्वतगुहा । कं बेट्टदगोहे । )

अथ प्रत्यन्तपर्वतादिः ।—

प्रत्यन्तगिरयः पादा गण्डशैलाश्च्युतोपलाः ।

आकरः खनिरित्युक्तो धातवो गैरिकादयः ॥ १९ ॥

अथ पाषाणनाम ।—

ग्रावा प्रस्तरपाषाणौ दृषदश्मोपलः शिला ।

लोहानि विविधानि स्युरश्मसारादिसंज्ञया ॥ २० ॥

( मं पाथर । कं कल्लु । )

अथ काननाम ।—

काननं गहनं सत्रं कान्तारं विपिनं वनम् ।

अरण्यमटवी दावो दवश्च वनवाचकाः ॥ २१ ॥

( मं राण । कं अटवि । )

अथोद्याननाम ।—

अन्यदुद्यानमाक्रीडो यत्र क्रीडन्ति रागिणः ।

नृपालयेषु प्रमदवनमन्तःपुरोचितम् ॥ २२ ॥

( मं वरापासिलमला । कं छित्तिलवनाकु । )

अथ महारण्यनाम ।—

महावनमरण्यानी महारण्यं महाटवी ।

( मं विन्ध्य । कं हेरडवि । )

अथ उपवननाम ।—

अथोपवनमारामः पुरप्रान्ते वनन्तु यत् ॥ २३ ॥

( मं मले । कं तोट । )

अथ वृक्षनाम ।—

कुजः क्षितिरुहोऽङ्घ्रिपः शिखरिपादपौ विष्टरः
कुठस्तरुरनोकहः कुरुह-भूरुह-द्रु-द्रुमाः ।
अगो नगवनस्पती विटपिशाखि-भूजागमा
महीज-धरणीरुह-क्षितिज-वृक्ष-शालादयः ॥ २४ ॥

अथ फलितवृक्षनाम ।—

फलितः फलवानेष फलिनश्च फली तथा ।
फलेग्रहिरवन्ध्यो यः स्यादमोघफलोदयः ॥ २५ ॥

अथ वन्ध्यवृक्षनाम ।—

अथावकेशी वन्ध्योऽयं विफलो निष्फलोऽफलः ।

( मं वाञ्झारूख । कं मक्षेमरः । )

अथ पुष्पादपुष्पाच्च-फलितवृक्षयोर्नाम ।—

उभौ प्रागात्मना भिन्नौ वानस्पत्यवनस्पती ॥ २६ ॥

अथ मूलनाम ।—

मूलन्तु नेत्रं पादः स्यादङ्घ्रिश्चरणमित्यपि ।

( मं वेक । )

अथ अङ्कुरनाम ।—

उद्भेदस्त्वङ्कुरो ज्ञेयः प्ररोहोऽङ्कुर इत्यपि ॥ २७ ॥

अथ वृक्षनितम्बनाम ।—

अर्वाग्भागोऽस्य बुध्नः स्यात् नितम्बः सपृथुर्भवेत् ।

( मं वृक्षबुड । कं मरनमोदलु । )

अथ स्कन्धनाम ।—

आस्कन्धात्तु प्रकाण्डः स्यात् काण्डो दण्डश्च कथ्यते ॥ २८ ॥

( मं थोरखान्धिया । कं ह्वयीगोम्ब । )

अथ शाखानाम ।—

स्कन्धप्रमाणास्य लतास्तु शाखाः
स्कन्धोत्थशाखास्तु भवन्ति शालाः ।
( मं साङ्कोस्वाधो । कं सयाकोम्बु । )

अथ जटादिनाम ।—

जटाः शिरास्तस्य किलावरोहाः
शाखा· शिफा मज्जनि सारमाहुः ॥ २८ ॥
( मं पारम्बे । कं बोललु । )

अथ वृक्षकोटरत्वचोर्नाम ।—

निष्कुहं कोटरं प्रोक्तं त्वचि वल्कन्तु वल्कलम् ।
( मं टोलाअनिकअन्तरसालि । कं होलु, मते जलसेक । )

अथ मञ्जरीनाम ।—

नवपुष्पाढ्यशाखाग्रे वल्लरी मञ्जरी तथा ॥ ३० ॥
( मं पल्लविया । कं तलिलु । )

अथ पर्णनाम ।-

पर्णं पत्रं दलं बर्हं पलाशं छदनं छदः ।
( गौ पाता । मं पान । कं एलि । )

अथ पल्लवनाम ।—

स्यात्पल्लवः किशलयः प्रवालः पल्लवं नवम् ॥ ३१ ॥
( मं लोहिते पल्लव । कं केन्दलिलु । )

अथ विस्तारनाम ।—

विस्तारी विटपः प्रोक्तः प्राग्रन्तु शिखरं शिरः ।
( मं विस्तारवृक्षाचा । कं मरनविस्तारम् । )

अथ पर्णशिरानाम ।—

माढिः पर्णशिरा ज्ञेया वृन्तं प्रसवबन्धनम् ॥ २२ ॥

( मं पर्णशिर । कं कोरकसु । )

अथ कलिकानाम ।—

कुलचारकजालककलिकास्तु कुडमले कथिताः ।

( मं मुकुले । कं मोगेयपेसरु । )

अथ पुष्पनाम ।—

कुसुमं सुमनः प्रसूनप्रसवसुमं सूनुफुल्लपुष्पं स्यात् ॥२३॥

( मं फूल । कं हविनयेसरु । )

अथ मकरन्दनाम ।—

मकरन्दो मरन्दश्च मधु पुष्परसाह्वयम् ।

अथ पुष्पसारः ।—

पौष्पं रजः परागः स्यान्मधुलो धूलिका च सा ॥२४॥

अथ पुष्पगुच्छनाम ।—

गुच्छो गुलुञ्छः स्तवको गुच्छकः कुसुमोच्चयः ।

( मं घोंस, थोवानाम । कं गोञ्चलुः । )

अथ परिमलनाम ।—

समं परिमलामोद-गन्धसौरभ्यसौरभम् ॥ २५ ॥

अथ प्रस्फुटननाम ।—

उज्जृम्भितमुज्जृम्भं स्मितमुन्मिषितं विनिद्रमुन्निद्रम् ।
उन्मीलितं विजृम्भितमुद्बुद्धोद्भिदुरभिन्नमुद्भिन्नम् ॥२६॥
विकसितहसितविकस्वरविकचव्याकोशफुल्लसम्फुल्लम् ।
स्फुटमुदितदलितदीर्णस्फुटितोत्फुल्लप्रफुल्लमेकार्थम् ॥२७॥

अथ मुकुलितनाम ।—

निद्राणं मुद्रितं सुप्तं मिलितं मीलितं नतम् ।
निकूणितं सङ्कुचितं सनिद्रमलसं समम् ॥ ३८ ॥

अथ शस्यादिनाम ।—

आहुस्तरूणां फलमत्र शस्यं तदाममुक्तं हि शलाटुसंज्ञम् ।
शुष्कन्तु वानं प्रवदन्ति गुल्मस्तम्बौ प्रकाण्डैरहितो महीजः ॥३९॥

अथ लतानाम ।—

उलपं गुल्मिनी वीरुल्लता वल्ली प्रतानिनी ।
व्रततिः प्रततिश्चैषा विस्तीर्णा वीरुदुच्यते ॥ ४० ॥
( मं वेलोनाम । कं वेल्लि । )

अथ नक्षत्रवृक्षनाम ।—

अथ वक्ष्यामि नक्षत्रवृक्षानागमलक्षितान् ।
पूज्यानायुष्यदांश्चैव वर्द्धनात्पालनादपि ॥ ४१ ॥
विषद्रु-धात्री-तरु-हेमदुग्धा जम्बूस्तथा खादिरकृष्णवंशाः ।
अश्वत्थनागौ च वटः पलाशः प्लक्षस्तथाऽम्बष्ठतरुः क्रमेण ॥ ४२ ॥
बिल्वार्जुनौ चैव विकङ्कतोऽथ सकेसराः शम्बरसर्जवञ्जुलाः ।
सपानसार्काश्च शमीकदम्बास्तथाऽऽम्रनिम्बौ मधुकद्रुमः क्रमात्॥४३
अमी नक्षत्रदैवत्या वृक्षाः स्युः सप्तविंशतिः ।
[illegible]देषामेषा नक्षत्रपद्धतिः ॥ ४४ ॥
तेषामात्मजन्मर्क्षभाजां मर्त्यः कुर्याद्भेषजादीन्मदान्धः ।
तस्यायुष्यं श्रीकलत्रञ्च पुत्रो नश्यत्येषा वर्द्धते वर्द्धनाद्यैः ॥ ४५ ॥
[illegible]र्य्योक्ता स्फुटमथ वृहत्सुस्मुते नारदीये
नारायण्यां क्वचिदपि तथाऽन्यत्र तन्त्रान्तरेषु ।

ज्ञात्वाऽपीह प्रथितभिषजां नातिदृष्टोपयोगं
नैवास्माभिर्विशदितमिदं गौरवाद्ग्रन्थभीतेः ॥ ४६ ॥

अथ तृणवृक्षनाम ।—

तालाद्या जातयः सर्वाः क्रमुकः केतकी तथा ।
खर्जूरीनारिकेलाद्यास्तृणवृक्षाः प्रकीर्त्तिताः ॥ ४७ ॥

सर्वाणि चार्द्राणि नवौषधानि
सुवीर्य्यवन्तीति वदन्ति धीराः ।
सर्वाणि शुष्काणि तु मध्यमानि
शुष्काणि जीर्णानि च निष्फलानि ॥ ४८ ॥

वास्तूककुटजगुडूचीवासाकुष्माण्डकादिशतपत्री ।
इत्यादि तु नित्यार्द्रं गुणवच्छुष्कं यदा तदा द्विगुणम् ॥ ४९

विडङ्गं मधु मण्डूरो दाड़िमं पिप्पली गुड़ः ।
नागवल्लीन्दु*शाल्याद्याः पुराणाः स्युर्गुणोत्तमाः ॥ ५० ॥

काठिन्यं मध्यकाठिन्यं मार्दवं चेति तु त्रिधा ।
द्रव्याणामिह सर्वेषां प्रकृतिः कथ्यते बुधैः ॥ ५१ ॥

द्रव्याणां सन्ति सर्वेषां पूर्वैरुक्तास्त्रयो गुणाः ।
रसो वीर्य्यं विपाकश्च ज्ञातव्यास्तेऽतियत्नतः ॥ ५२ ॥

रसस्तु मधुरादिः स्याद्वीर्य्यं कार्य्यसमर्थता ।
परिणामे गुणाढ्यत्वं विपाक इति संज्ञितम् ॥ ५३ ॥

शीतमुष्णञ्च रूक्षञ्च स्निग्धं तीक्ष्णं तथा मृदु ।
पिच्छिलं विशदं चेति वीर्य्यमष्टविधं स्मृतम् ॥ ५४ ॥

---

* इन्दु कर्पूरः ।

निष्कुटप्रमदकाननादिषु द्रव्यमेतदपि निर्गुणं भवेत्।
क्वाप्यलीकवचनोपकर्णनात् क्वाप्यसाधुवनितादिसेवनात्॥ ५५॥

जातं श्मशाने वल्मीके देशे मूत्रादिदूषिते।
द्रव्यं नैवोपयोगाय भिषजामुपजायते॥ ५६॥

कन्दं हिमर्त्तौ शिशिरे च मूलं पुष्पं वसन्ते गुणदं वदन्ति।
प्रवालपत्राणि निदाघकाले स्युः पङ्कजातानि शरत्प्रयोगे॥ ५७॥

निम्बोडुम्बरजम्ब्वाद्या यथाकालं गुणोत्तराः।
कन्दादिष्वथ सर्वेषां पृथगेव रसादयः॥ ५८॥

केचित् कन्दे केऽपि मूलेषु केचित् पत्रे पुष्पे केऽपि केचित् फलेषु।
त्वच्येवान्ये वल्कले केचिदित्थं द्रव्यस्तोमा भिन्नभिन्नं गुणाढ्याः॥५९
देशे देशे योजनद्वादशान्ते भिन्नान्याहुर्द्रव्यनामानि लोके।
किन्त्वामीषु प्राणिनां वर्णभाषाचेष्टाच्छाया भिन्नरूपा विभाति॥६०॥

अनिर्दिष्टप्रयोगेषु मूलं ग्राह्यं त्वगादिषु।
सामान्योक्तौ प्रयोक्तव्यं प्राहुस्तोयं तु नाभसम्॥ ६१॥
चूर्णकल्ककषायाणां प्रमाणं यत्र नोदितम्।
तत्र द्रव्यप्रमाणेन स्वयं बुद्ध्या प्रयोजयेत्॥ ६२॥
माध्वीकं सर्वमद्यानां मधूनां माक्षिकं तथा।
तैलं तु तिलसम्भूतं धातवो वस्तिसम्भवाः॥ ६३॥
शालीनां रक्तशालिः स्यात् सूप्यानां मुद्ग एव च।
मूलानां पिप्पलीमूलं फलानां मदनं फलम्॥ ६४॥
त्वचा तु गन्धद्रव्याणां पत्राणां गन्धपत्रकम्।
जीवन्तिशाकं शाकानां लवणानाञ्च सैन्धवम॥ ६५॥

सामान्यपुष्पनिर्देशात् मालतीकुसुमं क्षिपेत् ।
इत्थमन्येऽपि बोद्धव्याः प्रयोगा योगलक्षिताः ॥ ६६ ॥
द्रव्यं वातहरं यत्तत् सकलं दीपनं परम् ।
कफहारि समं प्रोक्तं पित्तघ्नं मन्ददीपनम् ॥ ६७ ॥
यच्छीतवीर्य्यं गुरु पित्तहारि द्रव्यं नृणां वातकरं तदुक्तम् ।
यदुष्णवीर्य्यं लघु वातहारि श्लेष्मापहं पित्तकरञ्च तत् स्यात् ॥६८॥

इति बहुविधदेशभूध्रभूमी-
रुहवनगुल्मलताभिधागुणानाम् ।
सविवरमभिधाय लक्ष्म साधा-
रणमथ तच्च विशेषतोऽभिधास्ये ॥ ६९ ॥

इत्यं भूमीविपिनविषयक्षेत्रगोत्रादिनाम-
स्तोमाख्यानप्रकरणगुणव्याकृतिप्रौढ़िमेनम् ।
वर्गं बुद्ध्वा भिषगुपचितानर्गलात्यन्तसूक्ष्म-
प्रज्ञालोकप्रकटितधियामाधिराज्ये भिषज्येत् ॥ ७० ॥

इत्येष वैद्यकविकल्पविधानिदान-
चूड़ामणौ मृड़परागमपारगेण ।
काश्मीरवंशतिलकेन कृतोपवर्गे
वर्गो नृसिंहकृतिना रचितो द्वितीयः ॥ ७१ ॥

इति श्रीनरहरिपण्डितविरचिते राजनिघण्टौ
धरण्यादिवर्गो द्वितीयः ।

## अथ गुडूच्यादिवर्गः



गुडूची चाथ मूर्वा च पटोलोऽरण्यजस्तथा ।
काकोली च द्विधा प्रोक्ता माषपर्णी तथाऽपरे ॥ १ ॥
मुद्गपर्णी च जीवन्ती त्रिविधा चाथ लिङ्गिनी ।
कटुकोशातकी चैव कपिकच्छुस्तथाऽपरे ॥ २ ॥
खलता कटुतुम्बी च देवदाली तथा स्मृता ।
वन्ध्याकर्कोटकी प्रोक्ता कटुतुण्ड्याखुकर्णिका ॥ ३ ॥
द्विधेन्द्रवारुणी चात्र यवतिक्तेश्वरी तथा ।
ज्योतिष्मती द्विधा चैव द्विधा च गिरिकर्णिका ॥ ४ ॥
मोरटश्चाथ चेदिन्दी-वरा वस्तान्त्रिका च सा ।
सोमवल्ली तथा वत्सा-दनी गोपालकर्कटी ॥ ५ ॥
काकतुण्डी द्विधा चाथ गुञ्जा द्विर्वृद्धदारु च ।
कैवर्त्ती ताम्रवल्ली च काण्डीरी चाथ जन्तुका ॥ ६ ॥
अम्लपर्णी तथा शङ्ख-पुष्पी चावर्त्तकी तथा ।
कर्णस्फोटा तथा कट्वी लता चैवामृतस्रवा ॥
पुत्रदा च पलाशी च विज्ञेयाऽत्र नवाभिधा ॥ ७ ॥
सुमतिभिरित्थमनुक्ता बोद्धव्या वीरुधः क्रमादेताः ।
अस्मिन् वीरुद्वर्गे नाम्ना च गुणैश्च कीर्त्यन्ते ॥ ८ ॥

आपानीयाल्पपरिगणनैर्येवाप्रसिद्धाभिधानां
नाम्नामुक्ताः परिमितिकथाऽप्यत्र सर्वौषधीनाम् ।

साऽपि क्वापि स्फुटमभिधया क्वापि च प्रौढिभङ्ग्या
प्रोक्ता नोक्ता प्रथितविषये साऽपि नष्टाङ्कवाक्ये ॥ ९ ॥

तस्मादिह न यत्रोक्ता नाम्नामङ्कादिनिर्मितिः ।
तत्र तत्राष्टसंख्यैव ज्ञेया सर्वत्र सूरिभिः ॥ १० ॥

यद्यपि क्वापि नष्टाङ्क-संख्यानियतिरोच्यते ।
तत्र स्फुटत्वबुद्ध्यैव नोक्ता संख्येति बुध्यताम् ॥ ११ ॥

द्रव्याणां गणशो नियोगवशतो वीर्यं परं प्रोचिरे
प्राचीनैर्न च तद्वशेन निगमेषूक्तश्चिकित्साक्रमः ।
तस्मान्नैगमयोगसंग्रहविदां संवादवाग्भिस्तथा
नैवास्माभिरभाणि किन्तु तदिह प्रत्येकशः कथ्यते ॥ १२ ॥

अथ गुडूची ।—

ज्ञेया गुडूच्यमृतवल्ल्यमृता ज्वरारिः
श्यामा वरा सुरकृता मधुपर्णिका च ।
छिन्नोद्भवाऽमृतलता च रसायनी च
छिन्ना च सोमलतिकाऽमृतसम्भवा च ॥ १३ ॥

वत्सादनी च्छिन्नरुहा विशल्या भिषक्प्रिया कुण्डलिनी वयःस्था ।
जीवन्तिका नागकुमारिका च स्याच्छिन्निका सैव च चण्डहासा १४

अन्या कन्दोद्भवा कन्दामृता पिण्डगुडूचिका ।
बहुच्छिन्ना बहुरुहा पिण्डालुः कन्दरोहिणी ॥ १५ ॥

पूर्वा वार्द्धिकराह्वा स्यादुत्तरा लोकसंज्ञिका ।
गुडूच्योरुभयोरित्थमेकत्रिंशदिहाभिधाः ॥ १६ ॥

ज्ञेया गुडूची गुरुरुष्णवीर्या तिक्ता कषाया ज्वरनाशिनी च ।
दाहार्त्तितृष्णावमिरक्तवातप्रमेहपाण्डुभ्रमहारिणी च ॥ १७ ॥

कन्दोद्भवा गुडूची च कटुष्णा सन्निपातहा ।
विषघ्नो ज्वरभूतघ्नी वलीपलितनाशिनी ॥ १८ ॥

( मं गुलवेलि । कं अमरदवेलि । गुरूचीति कान्यकुब्जाः ।
गलो इति गुर्जराः । गलाञ्च इति पाश्चात्याः ।
तें तिप्पतोगे । हिं गुडुच, चडुञ्च । गौ गुलुञ्च ।

अथ मूर्वा ।—

मूर्वा दिव्यलता मिरा मधुरसा देवी त्रिपर्णी मधु-
श्रेणी भिन्नदलामरी मधुमती तिक्ता पृथक्पर्णिका ।
गोकर्णी लघुपर्णिका च दृढ़नी तेजस्विनी मोरटा
देवश्रेणि-मधूलिका-मधुदलाः स्युः पोलुनी रक्तला ॥ १९ ॥
सुखोषिता स्निग्धपर्णी पीलुपर्णी मधुस्रवा ।
ज्वलनी गोपवल्ली चेत्यष्टविंशतिसंज्ञकाः ॥ २० ॥
मूर्वा तिक्तकषायोष्णा हृद्रोगकफवातहृत् ।
वमिप्रमेहकुष्ठादि-विषमज्वरहारिणी ॥ २१ ॥

( हिं चूर्णहार । मं गोनसफणा । तें चागचेट्टु, सग, चग ।
वं मोरवेल, मुहुरसि । तां मरूल । गौ मूर्वा,
मुर्गा, मुरहर, शोषमुखी, चोड़ाचक्र । )

अथ पटोलम् ।—

स्यात्पटोलः कटुफलः कुलकः कर्कशच्छदः ।
राजनामाऽमृतफलः पाण्डुः पाण्डुफलो मतः ॥ २२ ॥
बीजगर्भो नागफलः कुष्ठारिः कासमर्दनः ।
प[illegible]लो ज्योत्स्नी कुष्ठघ्नः षोड़शाह्वयः ॥ २३ ॥

पटोलः कटुतिक्तोष्णः रसपित्तबलासजित् ।
कफकण्डूतिकुष्ठास्त्रक्-ज्वरदाहार्त्तिनाशनः ॥ २४ ॥
( मोरडलीति कान्यकुब्जाः । हिं परवल । मं कांडुपडवल, कडु-
पडोल । तै' कोम्मुपोटल । ता कम्बुपुडल । गौ पटोल ।
कर्णाटे सोगवल्ली । चुरनिहारकपिलवर्णी इति गुर्जराः । )

अथ काकोली ।—

काकोली मधुरा काकी कालिका वायसोलिका ।
क्षीरा च ध्वांक्षिका वीरा शुक्ला धीरा च मेदुरा ॥ २५ ॥
ध्वांक्षोली स्वादुमांसी च वयःस्था चैव जीविनी ।
इत्येषा खलु काकोली ज्ञेया पञ्चदशाह्वया ॥ २६ ॥
काकोली मधुरा स्निग्धा क्षयपित्तानिलार्त्तिनुत् ।
रक्तदाहज्वरघ्नी च कफशुक्रविवर्द्धनी ॥ २७ ॥
( गौ कांकला । मं कं कट्टवतिगे, काउली ।
तै' तेलिमणिचेट्टु । उत् कांकोलि । )

अथ क्षीरकाकोली ।—

द्वितीया क्षीरकाकोली क्षीरशुक्ला पयस्विनी ।
पयस्या क्षीरमधुरा वीरा क्षीरविषाणिका ॥ २८ ॥
जीववल्ली जीवशुक्ला स्यादित्येषा नवाह्वया ।
रसवीर्य्यविपाकेषु काकोल्या सदृशी च सा ॥ २९ ॥
( हिं मं दुधकाउली । कं हसुगट्टवत्तिगे । गौ क्षीरकांकला ।

अथ माषपर्णी ।—

माषपर्णी तु काम्बोजी कृष्णवृन्ता महासहा ।
आर्द्रमाषा मांसमाषा मङ्गल्या हयपुच्छिका ॥ ३० ॥

हंसमाषाक्षपुच्छा च पाण्डुरा माषपत्रिका ।
कल्याणी वज्रमूली च शालिपर्णी विडालिका ॥ २१ ॥
आत्मोद्भवा बहुफला स्वयम्भूः सुलभा घना ।
इत्येषा माषपर्णी स्यादेकविंशतिनामका ॥ २२ ॥
माषपर्णी रसे तिक्ता वृष्या दाहज्वरापहा ।
शुक्रवृद्धिकरी बल्या शीतला पुष्टिवर्द्धिनी ॥ २३ ॥

( गौ माषाणी । हिं माषोणी, माषवणी । मं रानउड़दी ।
कं रानोडिगु, काउद्दु । )

अथ मुद्गपर्णी ।—

मुद्गपर्णी क्षुद्रसहा शिम्बी मार्जारगन्धिका ।
वनजा रिङ्गिणी ह्रस्वा सूर्पपर्णी कुरङ्गिका ॥ २४ ॥
कांसिका काकमुद्गा च वनमुद्गा वनोद्भवा ।
अरण्यमुद्गा वन्येति ज्ञेया पञ्चदशाह्वया ॥ २५ ॥
मुद्गपर्णी हिमा कास-वातरक्तक्षयापहा ।
पित्तदाहज्वरान् हन्ति चक्षुष्या शु[illegible]त् ॥ २६ ॥

( गौ मुगानी । हिं माठमुगानी । मं रानमुग । कं काहेसरु ।
तै' पिल्लपेसरचेट्टु । )

अथ जीवन्ती ।—

जीवन्ति स्याज्जीवनी जीवनीया
जीवा जीव्या जीवदा जीवदात्री ।
शाकश्रेष्ठा जीवभद्रा च भद्रा
मङ्गल्या च क्षुद्रजीवा यशस्या ॥ २७ ॥

शृङ्गाटी जीवपृष्ठा च काञ्जिका शशशिम्बिका ।
सुपिङ्गलेति जीवन्ती ज्ञेया चाष्टादशाभिधा ॥ ३८ ॥
जीवन्ती मधुरा शीता रक्तपित्तानिलापहा ।
क्षयदाहज्वरान् हन्ति कफवीर्य्यविवर्द्धिनी ॥ ३९ ॥
( कं मं लाहानिहरियावेलि. किरियहाले । गौ जीवन्ती,
जीवइ, जियाती । )

अथ वृहज्जीवन्ती ।—

जीवन्त्यन्या वृहत्पूर्वा पुत्रभद्रा प्रियङ्करी ।
मधुरा जीवपृष्ठा च वृहज्जीवा यशस्करी ॥ ४० ॥
एवमेव वृहत्पूर्वा रसवीर्य्यबलान्विता ।
भूतविद्रावणी ज्ञेया वेगाद्रसनियामिका ॥ ४१ ॥
( मं दोगृही हरियावेलि । कं किरियहाले । हिरियहाले । )

अथ स्वर्णजीवन्ती ।—

हेमा हेमवती सौम्या तृणग्रन्थिर्हिमाश्रया ।
स्वर्णपर्णी सुजीवन्ती स्वर्णजीवा सुवर्णिका ॥ ४२ ॥
हेमपुष्पी स्वर्णलता स्वर्णजीवन्तिका च सा ।
हेमवल्ली हेमलता नामान्यस्याश्चतुर्दश ॥ ४३ ॥
स्वर्णजीवन्तिका वृष्या चक्षुष्या मधुरा तथा ।
शिशिरा वातपित्तासृग्दाहजिद्बलवर्द्धिनी ॥ ४४ ॥
( मं हेमहरियावेलि । कं होमंगादहाले । हिं सोनाजीवइ ।
गौ स्वर्णजीवन्ती । )

अथ लिङ्गिनी ।—

लिङ्गिनी बहुपत्रा स्यादीश्वरी शैवमल्लिका ।

स्वयम्भूलिङ्गसम्भूता लिङ्गी चित्रफलाऽमृता ॥ ४५ ॥
पण्डोली लिङ्गजा देवी चण्डापस्तम्भिनी तथा ।
शिवजा शिववल्ली च विज्ञेया षोड़शाह्वया ॥ ४६ ॥
लिङ्गिनी कटुरुष्णा च दुर्गन्धा च रसायनी ।
सर्वसिद्धिकरी दिव्या वश्या रसनियामिनी ॥ ४७ ॥
( मं शाड्वली । कं हाकदोण्डे, पञ्चगुरिया, ईश्वरलिङ्गी ।
गौ पञ्चगुड़िका, शिवलिङ्गिनी । )

अथ कोषातकी ।—

कोषातकी क्षतच्छिद्रा जालिनी क्षतवेधना ।
क्ष्वेड़ा सुतिक्ता घण्टाली मृदङ्गफलिनी तथा ॥ ४८ ॥
कोशातकी तु शिशिरा कटुकाऽल्पकषायका ।
पित्तवातकफघ्नी च मलाध्मानविशोधिनी ॥ ४९ ॥
( गौ घोषालता । हिं करङ्गतरङ्ग । तै वीर, उत्तेरचि ।
मं कडुदोडकी, कं काह्वीरे । )

अथ कपिकच्छूः ।—

कपिकच्छूरात्मगुप्ता स्वयंगुप्ता महर्षभी ।
लाङ्गूली कुण्डली चण्डा मर्कटी दुरभिग्रहा ॥ ५० ॥
कपिरोमफला गुप्ता दुःस्पर्शा कच्छुरा जया ।
प्रावृषेण्या शूकशिम्बी वदरी शुकरार्षभी ॥ ५१ ॥
शिम्बी वराहिका तीक्ष्णा रोमालुर्वनशूकरी ।
कोशरोमा रोमवल्ली स्यात् षड्विंशतिनामका ॥ ५२ ॥
कपिकच्छूः स्वादुरसा वृष्या वातक्षयापहा ।
शीतपित्तास्रहन्त्री च विज्ञता व्रणनाशिनी ॥ ५३ ॥

( गौ आलकुशी, दया, धुनारगुड़, गुयाशिम्बी । हिं कौंच ।
मं कुहिरी । तें दुलगुण्डि । कं कपासकुहरी, नसुकुगुरि । )

अथ आकाशवल्ली ।—

खवल्ल्याकाशवल्ली स्यादस्पर्शा व्योमवल्लिका ।
आकाशनामपूर्वा सा वल्लीपर्य्यायगा स्मृता ॥ ५४ ॥
आकाशवल्ली कटुका मधुरा पित्तनाशिनी ।
वृष्या रसायनी बल्या दिव्यौषधिपरा स्मृता ॥ ५५ ॥
( मं अमरवेलि । कं आकाशवेलि । नलमुदवेलि इति पाश्चात्याः ।
गौ आलोकलता, आकाशवेल । कीं अमरवेल् । )

अथ कटुतुम्बी ।—

कटुतुम्बी कटुफला तुम्बिनी कटुतुम्बिनी ।
वृहत्फला राजपुत्री तिक्तवीजा च तुम्बिका ॥ ५६ ॥
कटुतुम्बी कटुस्तीक्ष्णा वान्तिकृत् श्वासवातजित् ।
कासघ्नी शोधनी शोफ-व्रणशूलविषापहा ॥ ५७ ॥
( गौ तितलाउ । हिं कडुटुभिया, तुम्बी, तितलौकी । मं कं
कडुभोंपला, कडुडुधी, कहिसोरे । तें चेतिआनव । )

अथ जीमूतकः ।—

जीमूतकः कण्टफला गरागरी
वेणी सहा कोशफला च कट्फला ।
घोरा कदम्बा विषहा च कर्कटी
स्याद्देवदाली खलु सारमूषिका ॥ ५८ ॥
वृत्तकोशा विषघ्नी च दाली लोमशपर्णिका ।
तुरङ्गिका च तर्कारी नाम्नामेकोनविंशतिः ॥ ५९ ॥

देवदाली तु तिक्तोष्णा कटुः पाण्डुकफापहा।
दुर्नामश्वासकासघ्नी कामलाभूतनाशनी॥ ६०॥
( गौ पीतघोषा, देयाताड़ा। हिं घघरबेल, सनैया। मं देवदाली।
कं देवडङ्गरी। तै' डानरगण्डि, लताविशेषमु, देबलि इति। )

अथ बन्ध्याकर्कोटकी।—

बन्ध्या देवी बन्ध्यकर्कोटका स्यान्नागारातिर्नागहन्त्री मनोज्ञा।
पथ्या दिव्या पुत्रदात्री सुकन्दा श्रीकन्दा सा कन्दवल्लीश्वरी च॥६१
सुगन्धा सर्पदमनी विषकण्टकिनी वरा।
कुमारी भूतहन्त्री च नाम्नामित्यूनविंशतिः॥ ६२॥
बन्ध्याकर्कोटकी तिक्ता कटूष्णा च कफापहा।
स्थावरादिविषघ्नी च शस्यते सा रसायने॥ ६३॥
( गौ तितकाँकड़ो, तित्काँकरोल। हिं बाँझखखासा, बाभूखसा,
बाँझ् काँकरोल। कं बञ्जेमडुवागलु। मं वं वंझाकण्टोली।)

अथ तिक्ततुण्डी।—

तिक्ततुण्डी तु तिक्ताख्या कटुका कटुतुण्डिका।
विम्बी च कटुतिक्तादि-तुण्डीपर्य्यायगा च सा॥ ६४॥
कटुतुण्डी कटुस्तिक्ता कफवान्तिविषापहा।
अरोचकास्रपित्तघ्नी सदा पथ्या च रोचनी॥ ६५॥
( मं कं कडुतोण्डली, कड्डितोडे, तोतकुन्दरु, वनटिण्डुराकडुआ।
हिं कटुतराइ। गौ तितकुन्दुरकी। )

अथ आखुकर्णी।—

स्यादाखुकर्णी कपिका द्रवन्ती
चित्रा सुकर्णोन्दुरुकर्णिका च।

न्यग्रोधिका मूषिकनागकर्णी
स्यादृश्विकर्णी बहुकर्णिका च ॥ ६६ ॥
माता भूमिचरी चण्डा शम्बरी बहुपादिका ।
प्रत्यक्श्रेणी वृषा चैव पुत्रश्रेण्यद्रिभूह्वया ॥ ६७ ॥
आखुकर्णी कटूष्णा च कफपित्तहरा सदा ।
आनाहज्वरशूलार्त्ति-नाशिनी पाचनी परा ॥ ६८ ॥
( हिं मं भोपली । क' वलिहरवे । गो इन्दुरकाणीपाना । )

अथ इन्द्रवारुणी ।—

ऐन्द्रीन्द्रवारुण्यरुणा मृगादनी
गवादनी क्षुद्रसहेन्द्रचिर्भिटा ।
सूर्य्या विषघ्नी गुणकर्णिकामरा
माता सुवर्णा सुफला च तारका ॥ ६९ ॥
वृषभाक्षी गवाक्षी च पीतपुष्पीन्द्रवल्लरी ।
हेमपुष्पी क्षुद्रफला वारुणी बालकप्रिया ॥ ७० ॥
रक्तैर्वारुर्विषलता शक्रवल्ली विषापहा ।
अमृता विषवल्ली च ज्ञेयोनत्रिंशदाह्वया ॥ ७१ ॥
इन्द्रवारुणिका तिक्ता कटुशीता च रेचनी ।
गुल्मपित्तोदरश्लेष्म-क्रिमिकुष्ठज्वरापहा ॥ ७२ ॥
( मं इन्द्रवारुणी । क' हामेके । गो राखालनाडु, राखालशशा.
कुन्दरुको, मामालाडु । हिं इन्द्रारुण, बड़ी इन्द्रफला । )

अथ महेन्द्रवारुणी ।—

महेन्द्रवारुणी रम्या चित्रवल्ली महाफला ।
सा माहेन्द्री चित्रफला त्रपुसी त्रपुसा च सा ॥ ७३ ॥

आत्मरक्षा विशाला च दीर्घवल्ली बृहत्फला।
स्याद् बृहद्वारुणी सौम्या नामान्यस्याश्चतुर्दश ॥ ७४ ॥
महेन्द्रवारुणी ज्ञेया पूर्वोक्तगुणभागिनी।
रसे वीर्य्ये विपाके च किञ्चिदेषा गुणाधिका ॥ ७५ ॥

( मं वड़िल इन्द्रवारुणि। क' ह्रिरियड्ढामेक्के। गौ वड़माकाल। राखालशसा वा। )

अथ यवतिक्ता।—

यवतिक्ता महातिक्ता दृढ़पादा विसर्पिणी।
नाकुली नेत्रमीला च शङ्खिनी पत्रतण्डुली ॥ ७६ ॥
तण्डुली चाक्षपीड़ा च सूक्ष्मपुष्पी यशस्विनी।
माहेश्वरी तिक्तयवा यावी तिक्तेति षोड़श ॥ ७७ ॥
यवतिक्ता सतिक्ताऽम्ला दीपनी रुचितत्परा।
क्रिमिकुष्ठविषघ्नाम-दोषघ्नी रेचनी च सा ॥ ७८ ॥

( मं यवीची। क' शङ्खिनी। यवेची इति लोके। )

अथ रुद्रजटा।—

रौद्री जटा रुद्रजटा च रुद्रा सौम्या सुगन्धा सुहृता घना च।
स्यादीश्वरी रुद्रलता सुपत्रा सुगन्धपत्रा सुरभिः शिवाह्वा ॥ ७९ ॥

पत्रवल्ली जटावल्ली रुद्राणी नेत्रपुष्करा।
महाजटा जटारुद्रा नाम्ना विंशतिरीरिता ॥ ८० ॥
जटा कटुरसा श्वास-कासहृद्रोगनाशिनी।
भूतविद्राविणी चैव रक्षसाञ्च निवर्हिणी ॥ ८१ ॥

( मं ईश्वरी। क' रुद्रजटा। गौ जटालक्का। )

अथ ज्योतिष्मती ।—

ज्योतिष्मती स्वर्णलताऽनलप्रभा
ज्योतिर्लता सा कटभी सुपिङ्गला ।
दीप्ता च मेध्या मतिदा च दुर्जरा
सरस्वती स्यादमृतार्कसंख्यया ॥ ८२ ॥

अथ तेजोवती ।—

तेजोवती बहुरसा कनकप्रभाऽन्या
तीक्ष्णा सुवर्णनकुली लवणाग्निदीप्ता ।
तेजस्विनी सुरलताऽग्निफलाऽग्निगर्भा
स्यात्कङ्गुणी तदनु शैलसुता सुतैला ॥ ८३ ॥
सुवेगा वायसी तीव्रा काकाण्डी वायसादनी ।
गोलता श्रीफली सौम्या ब्राह्मी लवणकिंशुका ॥ ८४ ॥
पारावतपदी पीता पीततैला यशस्विनी ।
मेध्या मेधाविनी धीरा स्यादेकत्रिंशदाह्वया ॥ ८५ ॥
ज्योतिष्मती तिक्तरसा च रूक्षा किञ्चित्कटुर्वातकफापहा च ।
दाहप्रदा दीपनकृच्च मेध्या प्रज्ञाञ्च पुष्णाति तथा द्वितीया ॥ ८६

( कं कङ्गुणी होनि । कौगुएरडु । गो लताफटकी, तें वेङ्कुडुतीगे ।
चिं मं मालकाङ्गोणी, काकुमर्दनिका । )

अथ अश्वखुरा ।—

अश्वखुराद्रिकर्णी च कटभी दधिपुष्पिका ।
गर्दभी सितपुष्पी च श्वेतस्यन्दापराजिता ॥ ८७ ॥
श्वेता भद्रा सुपुष्पी च विषहन्त्री गिरिकधा ।
नागपर्णीयकर्णी स्यादश्वाह्वादिखुरी स्मृता ॥ ८८

गिरिकर्णी हिमा तिक्ता पित्तोपद्रवनाशिनी ।
चक्षुष्या विषदोषघ्नी त्रिदोषशमनी च सा ॥ ८९ ॥

( मं वं पाकुरीसूपली । क' विलियगिरिकर्णिके । गौ श्वेतापराजिता ।
हिं विष्णुक्रान्ति । तें नल्लनेलगुम्मिरी । )

अथ नीलपुष्पी ।—

नीलपुष्पी महानीला स्यान्नीला गिरिकर्णिका ।
गवादनी व्यक्तगन्धा नीलस्यन्दा षडाह्वया ॥ ९० ॥
नीलाद्रिकर्णी शिशिरा सतिक्ता रक्तातिसारज्वरदाहहन्त्री ।
विच्छर्दिकोन्मादमदभ्रमार्त्तिश्वासातिकासामयहारिणी च ॥९१॥

( मं नीलसूपली । क' नीलगिरिकर्णिके । गौ नीलापराजिता । )

अथ मोरटः ।—

मोरटः क्षीरपुष्पश्च पीलुपत्रो मधुस्रवः ।
घनमूलो दीर्घमूलः पुरुषः क्षीरमोरटः ॥ ९२ ॥
मोरटः क्षीरबहुलो मधुरः सकषायकः ।
पित्तदाहज्वरान् हन्ति वृष्यो बलविवर्द्धनः ॥ ९३ ॥

( मं क्षीरमहुरसि । कं हालुसोगे । गौ लताकाड़ार । )

अथ इन्दीवरा ।—

इन्दीवरा युग्मफला दीर्घवृन्तोत्तमारणी ।
पुष्पमञ्जरिका द्रोणी करम्भा नलिका च सा ॥ ९४ ॥
इन्दीवरा कटुः शीता पित्तश्लेष्मापहारिका ।
चक्षुष्या कासदोषघ्नी व्रणक्रिमिहरा परा ॥ ९५ ॥

( मं उतरणि । कं कुरुटिगे । )

अथ वस्तान्त्री ।—

वस्तान्त्री वृषगन्धाख्या मेषान्त्री वृत्तपत्रिका ।
अजान्त्री बोकडी चैव स्यादित्येषा षड़ाह्वया ॥ ९६ ॥
वस्तान्त्री स्यात्कटुरसा कासदोषविनाशिनी ।
बीजदा गर्भजननी कीर्त्तिता भिषगुत्तमैः ॥ ९७ ॥

( मं बोकडी । कं कुरुटिगेयभेद । )

अथ सोमवल्ली ।—

सोमवल्ली महागुल्मा यज्ञश्रेष्ठा धनुर्लता ।
सोमार्हा गुल्मवल्ली च यज्ञवल्ली द्विजप्रिया ।
सोमक्षीरा च सोमा च यज्ञाङ्गा रुद्रसंख्यया ॥ ९८ ॥
सोमवल्ली कटुः शीता मधुरा पित्तदाहनुत् ।
तृष्णाविशोषशमनी पावनी यज्ञसाधनी ॥ ९९ ॥

( सोमवल्ली सर्वभाषा । )

अथ महिषवल्ली ।—

सौम्या महिषवल्ली च प्रतिसोमान्नवल्लिका ।
[illegible] प्रोक्ता काण्डशाखा षड़ाह्वया ।
रसवीर्य्यविपाके च सोमवल्लीसमा स्मृता ॥ १०० ॥

( हिं छि॰ छिट्टी । मं महिषवेलि । कं ग्राम्यवल्लि । )

अथ वत्सादनी ।—

वत्सादनी सोमवल्ली विक्रान्ता मेचकाभिधा ।
पातालगरुड़ी तार्क्षी सौपर्णी गारुड़ी तथा ॥ १०१ ॥
वासनी दीर्घकाण्डा च दृढ़काण्डा महाबला ।
दीर्घवल्ली दृढ़लता नामान्यस्याश्चतुर्दश ॥ १०२ ॥

वत्सादनी तु मधुरा पित्तदाहास्रदोषनुत्।
वृष्या सन्तर्पणी रुच्या विषदोषविनाशिनी ॥ १०३ ॥
( मं वासनि। कं दागुड़ि। )

अथ गोपालककर्कटी।—

गोपालककर्कटी वन्या गोपकर्कटिका तथा।
क्षुद्रेर्वारुः क्षुद्रफला गोपाली क्षुद्रचिर्भटा ॥ १०४ ॥
गोपालककर्कटी शीता मधुरा पित्तनाशनी।
मूत्रकृच्छ्राश्मरीमेह-दाहशोषनिकृन्तनी ॥ १०५ ॥
( गौ कुन्दरुकी, केडुड़ा। हिं गोरभा। मं गोवलकँ।कड़ी।
कं मूलसौते। )

अथ काकनासा।

काकनासा ध्वाङ्क्षनासा काकतुण्डा च वायसी।
सुरङ्गी तस्करस्नायुर्ध्वाङ्क्षतुण्डा सुनासिका ॥ १०६ ॥
वायसाह्वा ध्वाङ्क्षनखी काकाह्वा ध्वाङ्क्षनासिका।
काकप्राणा च विज्ञेया नामान्यस्यास्त्रयोदश ॥ १०७ ॥
काकनासा तु मधुरा शिशिरा पित्तहारिणी।
रसायनी दार्ढ्यकरी विशेषात् पलितापहा ॥ १०८ ॥
(गौ वड़श्वेतगुड़कांडली। हिं केउयाठँटो, केउयाढोँड़ो। मं वड़िलि-
कडुडलि। कं हिरियकागेदाखे। ते' वेलुमसन्दिचेट्ट, पुस-
गुर्लिविन्दचेट्टु, काकिदोखचेट्टु।)

अथ काकादनी।—

काकादनी काकपीलुः काकशिम्बी च रक्तला।
ध्वाङ्क्षादनी वक्रशल्या दुर्मोहा वायसादनी ॥ १०९ ॥

काकतुण्डी ध्वाङ्क्षनखी वायसी काकदन्तिका ।
ध्वाङ्क्षदन्तीति विज्ञेयास्तिस्रश्च दश चाभिधाः ॥ ११० ॥
काकादनी कटूष्णा च तिक्ता दिव्यरसायनी ।
वातदोषहरा रुच्या पलितस्तम्भिनी परा ॥ १११ ॥
( मं साङ्कीकत्तुडलि । कं किरियकागेदोड्ड ।
उत् ० काउड्ढ्यिटया । )

अथ गुञ्जा ।—

गुञ्जा चूड़ामणिः सौम्या शिखण्डी कृष्णलाऽरुणा ।
ताम्रिका शीतपाकी स्यादुच्चटा कृष्णचूड़िका ॥ ११२ ॥
रक्ता च रक्तिका चैव काम्भोजी भिल्लिभूषणा ।
वन्यास्या मानचूड़ा च विज्ञेया षोड़शाह्वया ॥ ११३ ॥

अथ श्वेतगुञ्जा ।—

द्वितीया श्वेतकाम्भोजी श्वेतगुञ्जा भिरिण्टिका ।
काकादनी काकपीलुर्वक्रशल्या षड़ाह्वया ॥ ११४ ॥
गुञ्जाद्वयन्तु तिक्तोष्णं वीजं वान्तिकरी शिफा ।
शूलघ्नं विषकृत् पत्रं वश्ये श्वेतञ्च शस्यते ॥ ११५ ॥
( हिं गुञ्जा दोनि । मं गुलुगुञ्जे । कं एरडु । उत् वड्ड ।
हिं सोयाकांरव । गौ कुंच । )

अथ वृद्धदारकः ।—

वृद्धदारक आवेगी जुङ्गको दीर्घवालुकः ।
वृद्धः कोटरपुष्पी स्यादजान्त्री छागलान्त्रिका ॥ ११६ ॥
जीर्णदारु द्वितीया स्याज्जीर्णा फञ्जी सुपुष्पिका ।
अजरा सूक्ष्मपत्रा च विज्ञेया च षड़ाह्वया ॥ ११७ ॥

वृद्धदारुद्वयं गौल्यं पिच्छिलं कफवातहृत्।
बल्यं कासामदोषघ्नं द्वितीयं स्वल्पवीर्य्यदम्॥ ११८ ॥
( मं दांनि फाश्चि। कं एरवुसुष्टे। गौ वीजताड़क। हिं विधारा। )

अथ कैवर्त्तिका।—

कैवर्त्तिका सुरङ्गा च लता वल्ली द्रुमारुहा।
रिङ्गिणी वस्त्ररङ्गा च भगा चेत्यष्टधाऽभिधा॥ ११९ ॥
कैवर्त्तिका लघुर्वृष्या कषाया कफनाशनी।
कासश्वासहरा चैव सैव मन्दाग्निदोषनुत्॥ १२० ॥
( गौ केश्रोटासुता, केशुरसुता। कैवर्त्तिका मालवे प्रसिद्धा। )

अथ ताली।—

ताली तमाली ताम्रा च ताम्रवल्ली तमालिका।
सूक्ष्मवल्ली सुलोमा च शोधनी तालिका नव॥ १२१ ॥
ताम्रवल्ली कषाया स्यात् कफदोषविनाशनी।
मुखकण्ठोत्थदोषघ्नी श्लेष्मशुद्धिकरी परा॥ १२२ ॥
( ताम्रवल्लीति चित्रकूटदेशे प्रसिद्धा। )

अथ काण्डीरः।—

काण्डीरः काण्डकटुको नासासंवेदनः पटुः।
उग्रकाण्डस्तोयवल्ली कारवल्ली सुकाण्डकः॥ १२३ ॥
काण्डीरः कटुतिक्तोष्णः सरो दुष्टव्रणार्त्तिनुत्।
लूतागुल्मोदरप्लीह-शूलमन्दाग्निनाशनः॥ १२४ ॥
( मं काण्डवेलि। कं मशिगुरवल्लि। गौ आरता, उबै। )

अथ जन्तुका ।—

जन्तुका जन्तुकारी च जननी चक्रवर्त्तिनी ।
तिर्य्यक्फला निशान्धा च बहुपत्रा सुपत्रिका ॥ १२५ ॥
राजकृष्णा जनेष्टा च कपिकच्छुफलोपमा ।
रञ्जनी सूक्ष्मवल्ली च भ्रमरी कृष्णवल्लिका ॥ १२६ ॥
विज्जुल्लिका वृक्षरुहा ग्रन्थिपर्णी सुवल्लिका ।
तरुवल्ली दीर्घफला एकविंशतिसंज्ञका ॥ १२७ ॥
जन्तुका शिशिरा तिक्ता रक्तपित्तकफापहा ।
दाहतृष्णावमिघ्नी च रुचिकृद्दीपनी परा ॥ १२८ ॥
( जन्तुका नालवे प्रसिद्धा । हिं पापड़ी । )

अथ अत्यम्लपर्णी ।—

अत्यम्लपर्णी तीक्ष्णा च कण्डुला वल्लिसूरणा ।
वल्ली करवडादिश्च वनस्थाऽरण्यवासिनी ॥ १२९ ॥
अत्यम्लपर्णी तीक्ष्णाम्ला श्लीहशूलविनाशनी ।
वातघ्नदीपनी रुच्या गुल्मश्लेष्मामयापहा ॥ १३० ॥
( मं कर ्डवेलि । क' हेग्गोलि । गो आमरुल । )

अथ शङ्खपुष्पी ।—

शङ्खपुष्पी सुपुष्पी च शङ्खाह्वा कम्बुमालिनी ।
सितपुष्पी कम्बुपुष्पी मेध्या वनविलासिनी ॥ १३१ ॥
चिरिण्टी शङ्खकुसुमा भूलग्ना शङ्खमालिनी ।
इत्येषा शङ्खपुष्पी स्यादुक्ता द्वादशनामभिः ॥ १३२ ॥

शङ्खपुष्पी हिमा तिक्ता मेधाकृत् स्वरकारिणी ।
ग्रहभूतादिदोषघ्नी वशीकरणसिद्धिदा ॥ १३३ ॥

( मं शङ्खुली । क' शङ्खपुष्पी । वं शङ्खीनी । )

अथ आवर्त्तकी ।—

आवर्त्तकी तिन्दुकिनी विभाण्डी विषाणिका रङ्गलता मनोज्ञा ।
सा रक्तपुष्पी महदादिजाली सा पीतकीलाऽपि च चर्मरङ्गा ॥१३४॥

वामावर्त्ता च संयुक्ता भूसंख्या शशिसंयुता ।
आवर्त्तकी कषायाम्ला शीतला पित्तहारिणी ॥ १३५ ॥

( आहुली तल।ड्वल्लि, भगतवल्लीति च कोङ्कणे प्रसिद्धा ।
गौ सोणामुखी । )

अथ कर्णस्फोटा ।—

कर्णस्फोटा श्रुतिस्फोटा त्रिपुटा कृष्णतण्डुला ।
चित्रपर्णी स्फोटलता चन्द्रिका चार्द्धचन्द्रिका ॥ १३६ ॥
कर्णस्फोटा कटुस्तिक्ता हिमा सर्वविषापहा ।
ग्रहभूतादिदोषघ्नी सर्वव्याधिविनाशिनी ॥ १३७ ॥

( मं कानफोड़ी । क' हिविविडिके । गौ काणछिड़ा । )

अथ कट्वी ।—

कट्वी कटुकवल्ली च सुकाष्ठा काष्ठवल्लिका ।
सुवल्ली च महावल्ली पशुमोहनिका कटुः ॥ १३८ ॥
कट्वी तु कटुका शीता कफश्वासार्त्तिनाशनी ।
नानाज्वरहरा रुच्या राजयक्ष्मनिवारिणी ॥ १३९ ॥

( मं कटुकी । तें रेमट्टु । )

अथ अमृतस्रवा ।—

ज्ञेयाऽमृतस्रवा हृद्याऽरुहाख्या तोयवल्लिका ।
वनवल्ली सितलता नामभिः शरसम्मिता ॥ १४० ॥
उक्ताऽमृतस्रवा पथ्या ईषत्तिक्ता रसायनी ।
विषघ्नी व्रणकुष्ठादीन् कामलां श्वयथुं जयेत् ॥ १४१ ॥

( मं अमृतवल्लि । अमृतस्रवा चित्रकूटदेशे प्रसिद्धा ।
गौ बदन्तीलता । )

अथ पुत्रदात्री :—

पुत्रदात्री तु वातारिर्भ्रामरी श्वेतपुष्पिका ।
हृत्तपत्राऽतिगन्धालुर्वैशिजाता सुवल्लरी ॥ १४२ ॥
पुत्रदात्री तु वातघ्नी कटुरुष्णा कफापहा ।
सुरभिः सर्वदा पथ्या वन्ध्यादोषविनाशनी ॥ १४३ ॥

( पुत्रदायि मालवे प्रसिद्धा । )

अथ पलाशी ।—

पलाशी पत्रवल्ली च पर्णवल्ली पलाशिका ।
खुरपर्णी सुपर्णी च दीर्घवल्ली विषादनी ॥ १४४ ॥
अम्लपत्री दीर्घपत्री रसाम्ला चाम्लका च सा ।
अम्लातकी काञ्जिका च स्याच्चतुर्दशधाऽभिधा ॥ १४५ ॥
पलाशी लघुरम्या च मुखदोषविनाशनी ।
अरोचकहरा पथ्या पित्तकोपकरी च सा ॥ १४६ ॥

( पलाशी नागरदेशे प्रसिद्धा । काश्मीरे शटीति ख्याता । )

इति बहुविधवल्लीस्तोम-नामाभिधान-
प्रगुणगुणयथावद्वर्णनापूर्णभिन- ।

सुललितपदसर्गं वर्गनाम्ना च वैद्यः
सदसि बहुविलासं व्यासवद्व्यातनोतु ॥ १४७ ॥

दीप्ता दीधितयस्तथाऽन्धतमसध्वंसाय भानोरिव
व्यातन्वन्ति निजं रुजां विजयते वीर्य्यं विरुद्धौ च याः । *
तासामेव विलासभूमिरसमो वर्गः स्तुतो वीरुधां
वीरुद्वर्ग इति प्रतीतमहिमा नैसर्गिकैर्यो गुणैः ॥ १४८ ॥

प्राप्ता यस्य परिग्रहं त्रिविधसद्वीरैकचूड़ामणे-
स्तीव्राण्योषधयः स्रवन्ति सहसा वीर्य्याण्यजर्य्याणि च ।
तस्यायं नृहरेः कृतौ स्थितिमगाद्वर्गो गुडूच्यादिक-
स्तार्त्तीयीकतयाऽभिधानरचनाचूड़ामणौ कीर्त्तितः ॥ १४९ ॥

इति श्रीनरहरिपण्डितविरचिते राजनिघण्टौ
गुडूच्यादिवर्गस्तृतीयः ।

---

* दीप्ता इत्यादि ।—तथा याः ( वीरुधः ) भानोः दीप्ता दीधितय इव अन्धतमसध्वंसाय रुजां रोगाणां विरुद्धौ निजं ( यत् ) वीर्य्यं व्यातन्वन्ति (तच्च वीर्य्यमिति शेषः) विजयते सर्वोत्कर्षेण वर्त्तते इत्यन्वयः । यद्वा,—तथा याः (वीरुधः) भानोः दीप्ता दीधितय इव अन्धतमसध्वंसाय विरुद्धौ निजं वीर्य्यं व्यातन्वन्ति ( तद्वीर्य्यं ) रुजां रोगं विजयते विनाशयतीत्यन्वयः ।

# अथ शताह्वादिवर्गः ।

शताह्वा चैव मिश्रेया शालिपर्णी समष्ठिला ।
बृहती कण्टकारी च द्विधा स्यात् पृश्निपर्णिका ॥ १ ॥
द्विधा गोक्षुरकश्चैव यासो वासा शितावरी ।
धन्वयासद्वयं चाग्नि-दमनो वाकुची तथा ॥ २ ॥
शणपुष्पी द्विधा चैव त्रिविधा शरपुङ्खिका ।
शणोऽम्बष्ठा द्विधा नीली द्विधा गोजिह्विका स्मृता ॥ ३ ॥
अपामार्गद्वयं पञ्च-बला राष्ट्री महादि च ।*
हयगन्धा च हपुषा शतावर्य्यौ द्विधा मते ॥ ४ ॥
एलवालुकतैरण्यौ कलिकारी जयन्तिका ।
काकमाची श्रुतश्रेणी भृङ्गराजस्त्रिधा मतः ॥ ५ ॥
काकजङ्घा त्रिधा चुञ्चुः त्रिविधः सिन्दुवारकः ।
भेण्डा स्यात् पुत्रदा चैव तक्रा स्वर्णुलिकाह्वया ॥ ६ ॥
खस्खसः सिम्डी चैव ज्ञेयो वन्यकुसुम्भकः ।
द्वग्राङ्गुल्यः कासमर्दश्च रविपत्री द्विधाऽम्लिका ॥ ७ ॥
अजगन्धाऽऽदित्यभक्ता विषमुष्टिर्द्विधा परा ।
कालाञ्जनी द्विकार्पासी द्विविधः कोकिलाक्षकः ॥ ८ ॥

---

*महादि चेति ।—कृतसमासान्तः महा इति शब्द आदिर्यस्मिन् तद् यथा तथा, क्रियाविशेषणमेतत्; तेन महाराष्ट्रीति शब्दो लभ्यते इत्यर्थः ।

सातला कामवृद्धिश्च चक्रमर्दोऽथ भिञ्भिरा ।
शताह्वाद्याः क्रमेणैव क्षुपाः प्रोक्ता यथागुणाः ॥ ९ ॥

अथ शताह्वानाम ।—

शताह्वा शतपुष्पा च मिसिर्घोषा च पोतिका ।
अहिच्छत्राऽप्यवाक्पुष्पी माधवी कारवी शिफा ॥ १० ॥
सङ्घातपत्रिका छत्रा वज्रपुष्पा सुपुष्पिका ।
शतप्रसूना बहला पुष्पाह्वा शतपत्रिका ॥ ११ ॥
वनपुष्पा भूरिपुष्पा सुगन्धा सूक्ष्मपत्रिका ।
गन्धारिकाऽतिच्छत्रा च चतुर्विंशतिनामका ॥ १२ ॥
शताह्वा तु कटुस्तिक्ता स्निग्धा श्लेष्मातिसारनुत् ।
ज्वरनेत्रव्रणघ्नी च वस्तिकर्मणि शस्यते ॥ १३ ॥

( गौ शुल्फाशाक । हिं सोफो । म सोफ । वं वाँड़ सोफ ।
क सब्बसिगे । )

अथ मिश्रेयानाम ।—

मिश्रेया तालपर्णी च तालपत्रा मिशिस्तथा ।
शालेया स्याच्छीतशिवा शालीना वनजा च सा ॥ १४ ॥
अवाक्पुष्पी मधुरिका छत्रा संहितपुष्पिका ।
सुपुष्पा सुरसा वन्या ज्ञेया पञ्चदशाह्वया ॥ १५ ॥
मिश्रेया मधुरा स्निग्धा कटुः कफहरा परा ।
वातपित्तोत्थदोषघ्नी प्लीहजन्तुविनाशनी ॥ १६ ॥

( मं वनसउफ । क कासब्बसिगे । गौ वनशुलफा । हिं सोँया,
वड़ि सोँफ । तें पेद्दजिलकुरु । तां सोम्बिकिरै । )

अथ शालिपर्णीनाम ।—

स्याच्छालिपर्णी सुदला सुपत्रिका
स्थिरा च सौम्या कुमुदा गुहा ध्रुवा ।
विदारिगन्धाऽंशुमती सुपर्णिका
स्याद्दीर्घमूलाऽपि च दीर्घपत्रिका ॥ १७ ॥
वातघ्नी पीतिनी तन्वी सुधा सर्वानुकारिणी ।
शोफघ्नी सुभगा देवी निश्चला व्रीहिपर्णिका ॥ १८ ॥
सुमूला च सुरूपा च सुपत्रा शुभपत्रिका ।
शालिपर्णी शालिदला स्यादूनत्रिंशदाह्वया ॥ १९ ॥
शालिपर्णी रसे तिक्ता गुरूष्णा वातदोषनुत् ।
विषमज्वरमेहार्शः-शोफसन्तापनाशनी ॥ २० ॥

( मं भूइसेवरा, सालवन् । तें सप्पाकुपोव । क' सुकलुम्बोने ।
चिं सरिवन् । गौ शालपाणि, छालानि । उत् शाल्पणि । )

अथ समष्ठिलानाम ।—

समष्ठिला च भण्डीरो नद्याम्रश्चाम्रगन्धधृक् ।
काकाम्रः कण्टकिफलोऽप्युपदंशो मुनिह्वयः ॥ २१ ॥
नद्याम्रः कटुरुष्णश्च रुच्यो मुखविशोधनः ।
कफवातप्रशमनो दाहकृद्दीपनः परः ॥ २२ ॥

( मं काकुम्बा । क' तोरेमाउ । चिं कक्रुंभा । )

अथ बृहतीनाम ।—

बृहती महतिक्रान्ता वार्त्ताकी सिंहिकाकुली ।
राष्ट्रिका स्थलकण्टा च भण्टाकी तु महोटिका ॥ २३ ॥

बहुपत्रो कण्टतनुः कण्टालुः कट्फला तथा।
डोरली वनवृन्ताकी नामान्यस्याश्चतुर्दश ॥ २४ ॥
वृहती कटुतिक्तोष्णा वातजिज्ज्वरहारिणी।
अरोचकामकासघ्नी श्वासहृद्रोगनाशनी ॥ २५ ॥
( मं डोरलो पाण्डरी। कं वनभण्टी, हेग्गुलु। )

अथ सर्पतनुनाम।—

वृहत्यन्या सर्पतनुः चविका पीततण्डुला।
पुत्रप्रदा बहुफला गोधिनीति षडाह्वया ॥ २६ ॥
चविका वृहती तिक्ता कटुरुष्णा च तत्समा।
युक्त्या द्रव्यविशेषेण धारासंस्तम्भसिद्धिदा ॥ २७ ॥

अथ श्वेतवृहतीनाम।—

श्वेताऽन्या श्वेतवृहती ज्ञेया श्वेतमहोटिका।
श्वेतसिंही श्वेतफला श्वेतवार्त्ताकिनी च षट् ॥ २८ ॥
विज्ञेया श्वेतवृहती वातश्लेष्मविनाशनी।
रुच्या चाञ्जनयोगेन नानानेत्रामयापहा ॥ २९ ॥
( हिं बाईंगटा। वं डोरलिविङ्गनी। तें कुक्नाचो। तां चेरचुण्ट।
मं पाण्ढरीडोरली। कं बिलियगुल्लु। गौ व्याकुड़। )

अथ कण्टकारीनाम।—

कण्टकारी कुण्टकिनी दुःस्पर्शा दुष्प्रधर्षिणी।
क्षुद्रा व्याघ्री निदिग्धा च धाविनी क्षुद्रकण्टिका ॥ ३० ॥
बहुकण्टा क्षुद्रकण्टी ज्ञेया क्षुद्रफला च सा।
कण्टारिका चित्रफला स्याच्चतुर्दशसंज्ञका ॥ ३१ ॥

कण्टकारी कटूष्णा च दीपनी श्वासकासजित् ।
प्रतिश्यायार्त्तिदोषघ्नी कफवातज्वरार्त्तिनुत् ॥ ३२ ॥
( मं रिङ्गणी । कं भटकटैया, नेलगुल्ल । हिं कण्टेली, रिङ्गिनी ।
तें प्राकुड़ोचेट्टु । उत् कण्टमारिष । गौ कण्टिकारि । )

अथ सितकण्टारिकानाम ।—

सितकण्टारिका श्वेता चेत्रदूती च लक्ष्मणा ।
सितसिंही सितक्षुद्रा क्षुद्रवार्त्ताकिनी सिता ॥ ३३ ॥
क्षिप्ता च कटुवार्त्ताकी चेत्रजा कपटेश्वरी ।
स्यान्निःस्नेहफला रामा सितकण्टा महौषधी ॥ ३४ ॥
गर्दभी चन्द्रिका चान्द्री चन्द्रपुष्पा प्रियङ्करी ।
नाकुली दुर्लभा रास्ना द्विरेषा द्वादशाह्वया ॥ ३५ ॥
श्वेतकण्टारिका रुच्या कटूष्णा कफवातनुत् ।
चक्षुष्या दीपनी ज्ञेया प्रोक्ता रसनियामिका ॥ ३६ ॥
( मं श्वेतरिङ्गणी । कं श्वेतभटकटैया, बिलियनेलगुल्ल । )

अथ पृश्निपर्णीनाम ।—

स्यात् पृश्निपर्णी कलसी महागुहा
शृगालविन्ना धमनी च मेखला ।
लाङ्गलिका क्रोष्टुकपुच्छिका गुहा
शृगालिका सैव च सिंहपुच्छिका ॥ ३७ ॥
पृथक्पर्णी दीर्घपर्णी दीर्घा क्रोष्टुकमेखला ।
चित्रपर्ण्युपचित्रा च श्वपुच्छाऽष्टादशाह्वया ॥ ३८ ॥
पृश्निपर्णी कटूष्णाम्ला तिक्ताऽतीसारकासजित् ।
वातरोगज्वरोन्माद-व्रणदाहविनाशनी ॥ ३९ ॥

( गौ चाकुलिया। हिं पोठवन, पीतवन। पठोनी। मं सेवरा। क' नवियलगोनि, पिटोनी। तें कोलाकुपोचा। उत् क्रष्टपर्णि। )

अथ गोक्षुरनाम।—

स्याद्गोक्षुरो गोक्षुरकः क्षुराङ्गः श्वदंष्ट्रकः कण्टक-भद्रकण्टकौ।
स्याद् व्यालदंष्ट्रः क्षुरको महाङ्गो दुश्चक्रमश्च क्रमशो दशाह्वः॥४०॥

( गौ गोखरी। हिं गोक्षुरशूल। उ१ गोखुरा। मं वेडिलो-सराटो। क' दोडुनेग्गलु, गोखरु। )

अथ क्षुद्रगोक्षुरनाम।—

क्षुद्रोऽपरो गोक्षुरकस्त्रिकण्टकः कण्टो षड़ङ्गो बहुकण्टकः क्षुरः।
गोकण्टकः कण्टफलः पलङ्कषः क्षुद्रक्षुरो भक्षटकश्चणद्रुमः॥४१॥

स्थलशृङ्गाटकश्चैव वनशृङ्गाटकस्तथा।
इक्षुगन्धः स्वादुकण्टः पर्य्यायाः षोड़श स्मृताः॥ ४२॥

स्यातांसुभौ गोक्षुरकौ सुशीतलौ बलप्रदौ तौ मधुरौ च बृंहणौ।
कृच्छ्राश्मरीमेहविदाहनाशनौ रसायनौ तत्र बृहद्गुणोत्तरः॥४३॥

( मं दोक्षि सराटिया।चेगुण। क' एरडुनेग्गिलगुण। )

अथ यासनाम।—

यासो यवासो बहुकण्टकोऽल्पकः
क्षुद्रेङ्गुदी रोदनिका च कच्छुरा।
स्याद् बालपत्रोऽधिककण्टकः खरः
स्थूलमूलो विषकण्टकोऽपि सः॥ ४४॥

अनन्तस्तीक्ष्णकण्टश्च समुद्रान्तो मरुद्भवः।
दीर्घमूलः सूक्ष्मपत्रो विषघ्नः कण्टकालुकः।

त्रिपर्णिका च गान्धारी चैकविंशतिनामभिः ॥ ४५ ॥ *
यासो मधुरतिक्तोऽसौ शीतः पित्तास्रदाहजित् ।
बलदीपनकृत्तृष्णा-कफच्छर्दिविसर्पजित् ॥ ४६ ॥

( तें वं धमासा, पिवरेगटोटुलगोरिख । गौ दुरालभा । हिं जवासा, दुराला । मं वेलिकासुलो । कं वल्लिदुरबे । तां तोरेद्दूलु । )

अथ वासकनाम ।—

वासकः सिंहिका वासा भिषङ्माता वसादनी ।
आटरूषः सिंहमुखी सिंही कण्ठीरवी वृषः ॥ ४७ ॥
शितपर्णी वाजिदन्ता नासा पञ्चमुखी तथा ।
सिंहपर्णी मृगेन्द्राणी नामान्यस्यास्तु षोड़श ॥ ४८ ॥
वासा तिक्ता कटुः शीता कासघ्नी रक्तपित्तजित् ।
कामलाकफवैकल्य-ज्वरश्वासक्षयापहा ॥ ४९ ॥

( तें अडुसर । तां अधड़ोड़े । गौ वासक । हिं अडुलसा । मं अडूसा, आडुलिसा । कं अड्डूसा, अडूसा, आडसोगे । )

अथ शितावरीनाम ।—

शितावरी शितावरः सूच्याह्वः सूचिपत्रकः ।
श्रीवारकः शिखी बभ्रुः स्वस्तिकः सुनिषण्णकः ॥ ५० ॥
कुरटः कुक्कुटः सूची-दलः क्षेत्राम्बरोऽपि सः ।
मेधाकृद्ग्राहकश्चेति ज्ञेयः पञ्चदशाह्वयः ॥ ५१ ॥

---

* एतत्र यासं विहाय यवासादयः शब्दा यासपर्य्यायवाचका इति बोध्यम्, अन्यथा द्वाविंशतिसंख्या स्यादित्यर्थः।

शितावरस्तु संग्राही कषायोष्णस्त्रिदोषजित् ।
मेधाऽरुचिप्रदो दाह-ज्वरहारी रसायनः ॥ ५२ ॥
( गौ शुशुनिशाक । हिं चत्रपत्ता, शिरोशारी । मं कुरडाहूके ।
कं खडकतिरा । तें सुनिषण्णमनेशाकमु । उं छुन्छुनिया । )

अथ धन्वयासनाम ।—

धन्वयासो दुरालम्भा ताम्रमूली च कच्छुरा ।
दुरालभा च दुःस्पर्शा धन्वी धन्वयवासकः ॥ ५३ ॥
प्रबोधनी सूक्ष्मदला विरूपा दुरभिग्रहा ।
दुर्लभा दुष्प्रधर्षा च स्याच्चतुर्दशसंज्ञका ॥ ५४ ॥
दुरालम्भा कटुस्तिक्ता सोष्णा चीराम्लिका तथा ।
मधुरा वातपित्तघ्नी ज्वरगुल्मप्रमेहजित् ॥ ५५ ॥
( गौ दुरालभा । हिं यवासा, दुराला । वं धमासा । मं
वेलिकासुली । कं वल्लिदुरवे । तें पिचरेगटीटुलगोच्चि ) ।

अथ क्षुद्रदुरालम्भानाम ।—

अन्या क्षुद्रदुरालम्भा मरुस्था मरुसम्भवा ।
विशारदाऽजभक्षा स्यादजादन्युष्ट्रभक्षिका ॥ ५६ ॥
कषाया कफहृच्चैव ग्राहिणी करभप्रिया ।
करभादनिका चेति विज्ञेया द्वादशाभिधा ॥ ५७ ॥
दुरालम्भा द्वितीया च गौल्याम्लज्वरकुष्ठनुत् ।
श्वासकासभ्रमघ्नी च पारदे शु[illegible] ॥ ५८ ॥
( मं साक्रोवेलिकासुली । कं किरुवल्लिदुरवे । )

अथ अग्निदमनीनाम ।—

अथाग्निदमनी वह्नि-दमनी बहुकण्टका ।
वह्निकण्टारिका गुच्छ-फला क्षुद्रफला च सा ॥ ५९ ॥
विज्ञेया क्षुद्रदुःस्पर्शा क्षुद्रकण्टारिका तथा ।
मत्स्येन्द्रमाता दमनी स्यादित्येषा दशाह्वया ॥ ६० ॥
कटूष्णा चाग्निदमनी रूक्षा वातकफापहा ।
रुचिकृद्दीपनी हृद्या गुल्मप्लीहापहा भवेत् ॥ ६१ ॥

( मं अग्निदवणा, धमासाभेद । कं चित्तण्टे । गौ दुरालभा-भेद, "थोला" इति मतान्तरम् । )

अथ वाकुचीनाम ।—

वाकुची सोमराजी च सोमवल्ली सुवल्लिका ।
सिता सितावरी चन्द्र-लेखा चान्द्री च सुप्रभा ॥ ६२ ॥
कुष्ठहन्त्री च काम्बोजी प्रतिगन्धा च वल्गुजा ।
स्मृता चन्द्राभिधा राजी कालमाषी च तथैन्दवी ॥ ६३ ॥
कुष्ठदोषापहा चैव कान्तिदाऽवल्गुजा तथा ।
चन्द्राभिधा प्रभायुक्ता विंशतिः स्यात्तु नामतः ॥ ६४ ॥
वाकुची कटुतिक्तोष्णा क्रिमिकुष्ठकफापहा ।
त्वग्दोषविषकण्डूति-खर्जुप्रशमनी च सा ॥ ६५ ॥

( हिं वावची, बुकची । मं बावची । कं वाउचिगे । वं वाम्बची । तां बोगिविट्ठलु । गौ सोमराज, हाकुच । )

अथ शणपुष्पीनाम ।—

शणपुष्पी बृहत्पुष्पी शणिका शणघण्टिका ।
पीतपुष्पी स्थूलफला लोमशा माल्यपुष्पिका ॥ ६६ ॥

शणपुष्पी रसे तिक्ता कषाया कफवातजित्
अजीर्णज्वरदोषघ्नी वमनी रक्तदोषनुत् ॥ ६७ ॥
( गौ वनशण, झनझनिया । हिं घागरी, वनशणाइ, शणहुली ।
( मं खिलिहिला । कं शणबीज, गिलुगिश्चि । )

अथ क्षुद्रशणपुष्पीनाम ।—

द्वितीयाऽन्या सूक्ष्मपुष्पा स्यात् क्षुद्रशणपुष्पिका ।
विष्टिका सूक्ष्मपर्णी च बाणाह्वा सूक्ष्मघण्टिका ।
शणपुष्पी क्षुद्रतिक्ता वम्या रसनियामिका ॥ ६८ ॥
तृतीयाऽन्या वृत्तपर्णी श्वेतपुष्पा महासिता ।
सा महाश्वेतघण्टी च सा महाशणपुष्पिका ॥ ६९ ॥
महाश्वेता कषायोष्णा शस्ता रसनियामिका ।
कुतूहलेषु च प्रोक्ता मोहनस्तम्भनादिषु ॥ ७० ॥
( मं साझीकिलिहिला, पाण्ढरीखिलिहिला । हिं फुणफुणा ।
कं पिक्कगिलुगुचि, मते काडविट्टि । गौ श्वेत अरण्यशण । )

अथ शरपुङ्खानाम् ।—

शरपुङ्खा काण्डपुङ्खा बाणपुङ्खेषुपुङ्खिका ।
ज्ञेया सायकपुङ्खा च इषुपुङ्खा च षड्विधा । ७१ ॥
शराभिधा च पुङ्खा स्याच्छ्वेताख्या सितसायका ।
सितपुङ्खा श्वेतपुङ्खा शुभ्रपुङ्खा च पञ्चधा ॥ ७२ ॥
शरपुङ्खा कटूष्णा च क्रिमिवातरुजापहा ।
श्वेता त्वेषा गुणाढ्या स्यात् प्रशस्ता च रसायने ॥ ७३ ॥
( हिं शरफोंका । वं दां जङ्गलीकुलथी । तें तेल्लवेंपल्लिचेट्टु ।
तां कोलुंकयवेल्लयि । मं दोनिडनिलिया, उङ्गलि ।
कं येरछुकोंगि । गौ शरपुङ्खा । )

अथ कण्टपुङ्खानाम।—

अन्या तु कण्टपुङ्खा स्यात् कण्टालुः कण्टपुङ्खिका।
कण्टपुङ्खा कटूष्णा च क्रमिशूलविनाशनी ॥ ७४ ॥
( मं कण्टउङ्खली। कं मुल्लुगोग्गि। )

अथ शणानाम।—

शणस्तु माल्यपुष्पः स्याद्वमनः कटुतिक्तकः।
निशावनो दीर्घशाखस्त्वक्सारो दीर्घपल्लवः ॥ ७५ ॥
शणस्त्वम्लः कषायश्च मलगर्भास्रपातनः।
वान्तिकृद्वातकफनुज्-श्रेयस्तीव्राङ्गमर्दजित् ॥ ७६ ॥
( हिं शण। तें शनमनुवेल्ल,.जेनपनर, वेल्लचेट्टु। तां जेनप्पनर्।
दां जनत्रकनर्। मं गौ शण। कं शणबु। )

अथ अम्बष्ठानाम।—

अम्बष्ठाऽम्बालिकाऽम्बाला शठाम्बाऽम्बष्ठिकाऽम्बिका।
अम्बा च माचिका चैव दृढवल्का मयूरिका ॥ ७७ ॥
गन्धपत्री चित्रपुष्पी श्रेयसी मुखवाचिका।
छिन्नपत्रा भूरिमल्ली विज्ञेया षोडशाह्वया ॥ ७८ ॥
अम्बष्ठा सा कषायाम्ला कफकण्ठरुजापहा।
वातामयबलासघ्नी रुचिकृद्दीपनी परा ॥ ७९ ॥
( गौ आमड़ा। अम्बाड़ा, अम्बरीति च दक्षिणापथे। हिं मङ्गुया।
माचिका, साकुरुण्ड इति च पश्चिमदेशे ख्याता।
मं आंबाडा। कं पुडीन। )

अथ नीलीनाम ।—

नीली नीला नीलिनी नीलपत्री
तुत्था राज्ञी नीलिका नीलपुष्पी ।
काली श्यामा शोधनी श्रीफला च
ग्राम्या भद्रा भारवाही च मोचा ॥ ८० ॥
कृष्णा व्यञ्जनकेशी च रञ्जनी च महाफला ।
असिता क्लीतनी नील-केशी चारटिका मता ॥ ८१ ॥
गन्धपुष्पा श्यामलिका रङ्गपत्री महाबला ।
स्थिररङ्गा रङ्गपुष्पी स्यादेषा त्रिंशदाह्वया ॥ ८२ ॥
नीली तु कटुतिक्तोष्णा केश्या कासकफामनुत् ।
मरुद्विष-व्याधि-गुल्मजन्तुज्वरापहा ॥ ८३ ॥

( मं नीलीचे झाड़ । तें नल्लपेट्टगेरिट, पेट्टनीलिचेट्टु ।
गौ नीलगाछ । कं हिं नीली । )

अथ महानीलीनाम ।—

अन्या चैव महानीली अमला राजनीलिका ।
तुत्था श्रीफलिका मेला केशार्हा भृशपत्रिका ॥ ८४ ॥
महानीली गुणाढ्या स्याद्रङ्गश्रेष्ठा सुवीर्य्यदा ।
पूर्वोक्तनीलिकादेषा सगुणा सर्वकर्मसु ॥ ८५ ॥

( मं वडिलनीली । कं हिरियनीली । )

अथ गोजिह्वानाम ।—

गोजिह्वा खरपत्री स्यात् प्रतना दार्विका तथा ।
अधोमुखा धेनुजिह्वा अधःपुष्पी च सप्तधा ॥ ८६ ॥

गोजिह्वा कटुका तीव्रा शीतला पित्तनाशनी।
व्रणसंरोपणी चैव सर्वदन्तविषार्त्तिजित्॥ ८७॥
( हिं पाथरी, गोभी, गोजियालता, दाड़ीशाक। तें येट्टुना-
लुकचेट्ट, भरिलिकचेट्टु। गौ दाड़िशाक। मं वाउना।
कं यलुनालगे, पथरी, गोजिह्वा। )

अथ अपामार्गनाम।—

अपामार्गस्तु शिखरी किणिही खरमञ्जरी।
दुर्ग्रहश्चाप्यधःशल्यः प्रत्यक्पुष्पी मयूरकः॥ ८८॥
काण्डकण्टः शैखरिको मर्कटी दुरभिग्रहः।
वशिरश्च पराक्पुष्पी कण्टी मर्कटपिप्पली॥ ८९॥
कटुर्माञ्जरिको नन्दी क्षवकः पंक्तिकण्टकः।
मालाकण्टश्च कुब्जश्च त्रयोविंशतिनामकः॥ ९०॥
अपामार्गस्तु तिक्तोष्णः कटुश्च कफनाशनः।
अर्शःकण्डूदरामघ्नो रक्तहृद् ग्राहि वान्तिकृत्॥ ९१॥
( हिं लटजीरा, चिरचिरा। तें उत्तरेणी। मं आघाडा।
कं उत्तरणे, चिचिरा। गौ आपाङ्। )

अथ रक्तापामार्ग-क्षुद्रापामार्गनाम।—

अन्यो रक्तो ह्यपामार्गः क्षुद्रापामार्गकस्तथा।
आघट्को दुग्धनिका रक्तविन्दुदलपत्रिका॥ ९२॥
रक्तोऽपामार्गकः शीतः कटुकः कफवातनुत्।
व्रणकण्डूविषघ्नश्च संग्राही वान्तिकृत् परः॥ ९३॥
( हिं लालचिरचिरा। मं कं तांबडा, आघाडा। तें कंपि-
गुत्तरणी। गौ लाल आपाङ्। )

अथ बलानाम।—

बला समङ्गोदकिका च भद्रा भद्रोदनी स्यात् खरकाष्ठिका च।
कल्याणिनी भद्रबला च मोटा वाटी बलाख्येति च रुद्रसंज्ञा ॥८४॥*

बलाऽतितिक्ता मधुरा पित्तातीसारनाशनी।
बलवीर्य्यप्रदा पुष्टि-कफरोगविशोधनी ॥ ८५ ॥

( हिं बीजबन्द। मं वं चिकणा। कं बेणेंगरग, वरियारा। तें पाचितीगे, मुत्तवपुलगमु, करिवेपचेट्टु। गो बेड़ेला। )

अथ महासमङ्गानाम।—

महासमङ्गोदनिका बलाह्वया
वृषारुहा वृद्धिबलाऽस्ततण्डुला।
भुजङ्गजिह्वाऽपि च शीतपाकिनी
शीता बला शीतवरा बलोत्तरा ॥ ८६ ॥

खिरिंहिट्टी च वल्या च ललज्जिह्वा त्रिपत्रधा।
महासमङ्गा मधुरा अम्ला चैव त्रिदोषहा।
युक्त्या बुधैः प्रयोक्तव्या ज्वरदाहविनाशनी ॥ ८७ ॥

( हिं कगाहिया, खिरिंहिटोरा। वं घोरचिकणाभेद। मं चिक्कणाभेद। कं खिरिंहिटिवा, बेणेंगरगभेद। )

अथ महाबलानाम।—

महाबला ज्येष्ठबला कटम्भरा केशारुहा केसरिका मृगादनी।
स्याद्दर्षपुष्पाऽपि च केशवर्द्धनी पुरासणी देवसहा च सारिणी ॥८८॥

सहदेवी शीतपुष्पी देवार्हा गन्धवल्लरी।
मृगा मृगरसा चेति ज्ञेया सप्त-दशाह्वया ॥ ८९ ॥

---

* रुद्रसंज्ञा एकादशाभिधा बला स्यादित्यर्थः।

महाबला तु हृद्रोग-वातार्शःशोफनाशनी ।
शुक्रवृद्धिकरी बल्या विषमज्वरहारिणी ॥ १०० ॥

( मं पेटारी । कं सहदेवी, बेखुदुरवे । )

अथ अतिबलानाम ।—

बलिकाऽतिबला बल्या विकङ्कता वाट्यपुष्पिका घण्टा ।
शीता च शीतपुष्पा भूरिबला वृष्यगन्धिका दशधा ॥ १०१ ॥
तिक्ता कटुस्वातिबला वातघ्नी क्रिमिनाशनी ।
दाहतृष्णाविषच्छर्दि-क्लेदोपशमनी परा ॥ १०२ ॥

( गौ श्वेतवेड़ेला । हिं ककहिया । मं पिटारिणी, कांसुली । कं सुब्बदुरवें । )

अथ भद्रोदनीनाम ।—

भद्रोदनी नागबला खरगन्धा चतुष्फला ।
महोदया महाशाखा महापत्रा महाफला ॥ १०३ ॥
विश्वदेवा तथाऽरिष्टा खर्वा हस्वा गवेधुका ।
देवदण्डा महादण्डा घाटेत्याह्वास्तु षोड़श ॥ १०४ ॥
मधुराम्ला नागबला कषायोष्णा गुरुः स्मृता ।
कण्डूतिकुष्ठवातघ्नी व्रणपित्तविकारजित् ॥ १०५ ॥

( गौ गोरक्षचाकुलिया । हिं गुलशकरी, ककही । मं तुप्पट्टी । कं नागबला, बहगरके । )

अथ महाराष्ट्रीनाम ।—

महाराष्ट्री तु सम्शोक्ता शारदी तोयपिप्पली ।
मत्स्यादनी मत्स्यगन्धा लाङ्गली शकुलादनी ॥ १०६ ॥

अग्निज्वाला चित्रपत्री प्राणदा जलपिप्पली ।
तृणशीता बहुशिखा स्यादित्येषा त्रयोदश ॥ १०७ ॥
महाराष्ट्री कटुस्तीक्ष्णा कषाया मुखशोधनी ।
व्रणकीटादिदोषघ्नी रसदोषनिवर्हणी ॥ १०८ ॥

( गौ काँचड़ा, पानसगा । मं पिम्पलकार्थी । क ं होमुगुलु, पनिसङ्गा । )

अथ अश्वगन्धानाम ।—

अश्वगन्धा वाजिगन्धा कम्बुकाष्ठा वराहिका ।
वराहकर्णी तुरगी वनजा वाजिनी हयी ॥ १०९ ॥
पुष्टिदा बलदा पुण्या हयगन्धा च पीवरा ।
पलाशपर्णी वातघ्नी श्यामला कामरूपिणी ॥ ११० ॥
कालप्रियकरी बल्या गन्धपत्री हयप्रिया ।
वराहपत्री विज्ञेया त्रयोविंशतिनामका ॥ १११ ॥
अश्वगन्धा कटूष्णा स्यात्तिक्ता च मदगन्धिका ।
बल्या वातहरा हन्ति कासश्वासक्षयव्रणान् ॥ ११२ ॥

( हिं असगन्ध, वाराहीगेठी । मं आसन्ध, आसान्दु, अङ्कुर, आसन्धिका । )

अथ हपुषानाम ।—

हपुषा विपुषा विस्रा विस्रगन्धा विगन्धिका ।
अन्या चासौ स्वल्पफला कच्छूघ्नी ध्वांक्षनाशनी ॥ ११३ ॥
प्लीहशत्रुर्विषघ्नी च कफघ्नी चापराजिता ।
पूर्वा तु पञ्चनाम्नी स्यादपरा सप्तधाऽभिधा ॥ ११४ ॥

हपुषा कटुतिक्तोष्णा गुरुः श्लेष्मबलासजित्।
प्रदरोदरविड्बन्ध-शूलगुल्मार्शसां हरा ॥ ११५ ॥
( हिं हौहवेर। मं सेरगोवा दोनो, यरडुहळ्वे। कं होवेर। )

अथ शतावरीनाम।—

शतावरी शतपदी पीवरीन्दीवरी वरी।
भीरुर्द्वीप्या द्वीपिशत्रुर्दीपिकाऽमरकण्टिका ॥ ११६ ॥
सूक्ष्मपत्रा सुपत्रा च बहुमूला शताह्वया।
नारायणी स्वादुरसा शताह्वा लघुपर्णिका ॥ ११७ ॥
आत्मशल्या जटामूला शतवीर्य्या महौदनी।
मधुरा शतमूला च केशिका शतनेत्रिका ॥ ११८ ॥
विश्वाख्या वैष्णवी कार्ष्णी वासुदेवी वरीयसी।
दुर्मरा तेजवल्ली च स्यात्त्रयस्त्रिंशदाह्वया ॥ ११९ ॥
( गौ शतमूली। हिं सफेदमुशली, छोटोशतावरी। मं सानी-काराटेसिक। कं किरियखासडि। तें चल्ल, चल्लगड्डलु। )

अथ महाशतावरीनाम।—

महाशतावरी वीरा तुङ्गिनी बहुपत्रिका।
सहस्रवीर्य्या सुरसा महापुरुषदन्तिका ॥ १२० ॥
ऊर्द्ध्वकण्टा महावीर्य्या फणिजिह्वा महाशता।
शतवीर्य्या सुवीर्य्या च नामान्यस्यास्त्रयोदश ॥ १२१ ॥
शतावर्य्यौ हिमे वृष्ये मधुरे पित्तजित्वरे।
कफवातहरे तिक्ते महाश्रेष्ठे रसायने ॥ १२२ ॥
शताह्वरीद्वयं वृष्यं मधुरं पित्तजिद्धिम- ।

महती कफवातघ्नी तिक्ता श्रेष्ठा रसायने।
कफपित्तहरास्तिक्तास्तस्या एवाङ्कुराः स्मृताः ॥ १२३ ॥
( हिं कङ्घीमूल। मं दोनृद्दो कांटिमेरगुग। क यरडु श्रासडियगुच। )

अथ एलवालुकनाम।—

एलवालुकमालूकं वालुकं हरिवालुकम्।
एलवालुकं कपित्थं च दुर्वर्णं प्रसरं दृढम् ॥ १२४ ॥
एलागन्धिकमेलाह्वं गुप्तगन्धि सुगन्धिकम्।
एलाफलं च विज्ञेयं द्विःसप्ताह्वयमुच्यते ॥ १२५ ॥
एलवालुकमत्युग्रं कषायं कफवातनुत्।
मूर्च्छार्त्तिज्वरदाहांश्च नाशयेद्रोचनं परम् ॥ १२६ ॥
( हिं एलुवा। तें कुतुरबुडुमचेट्टु। गो एलबालुक। मं कलञ्जडले। )

अथ तेरिणीनाम।—

तेरिणी तेरणस्तेरः कुनोली नामतश्चतुः।
तेरणः शिशिरस्तिक्तो व्रणघ्नोऽरुणरङ्गदः ॥ १२७ ॥
( मं तेरणा। क बेवत्तिगे। गौ तेरड़ागाछ। )

अथ कलिकारीनाम।—

कलिकारी लाङ्गलिनी हलिनी गर्भपातिनी।
दीप्तिर्विशल्याऽग्निमुखी हली नक्तेन्दुपुष्पिका ॥ १२८ ॥*
विद्युज्ज्वालाऽग्निजिह्वा च व्रणहृत् पुष्पसौरभा।
स्वर्णपुष्पा वह्निशिखा स्यादेषा षोड़शाह्वया ॥ १२९ ॥

---

* नक्तेन्दुपुष्पिकेति—नक्ता इन्दुपुष्पिकेति च द्वयम् ; तेन मिलित्वा षोड़शसंख्या स्यादित्यर्थः।

कलिकारी कटूष्णा च कफवातनिकृन्तनी ।
गर्भान्तःशल्यनिष्कास-कारिणी सारिणी परा ॥ १३० ॥

( मं लाङ्गलिलाङ्गुलिके । कं करिह्मारी, राङागारि ।
गो विषलाङ्गलिया । )

अथ जयन्तीनाम ।—

जयन्ती तु बलामोटा हरिता च जया तथा ।
विजया सूक्ष्ममूला च विक्रान्ता चापराजिता ॥ १३१ ॥
ज्ञेया जयन्ती गलगण्डहारी तिक्ता कटूष्णाऽनिलनाशनी च ।
भूतापहा कण्ठविशोधनी च कृष्णा तु सा तत्र रसायनी स्यात्
॥ १३२ ॥

( मं सोरेरि । कं तोगरसे । गो अन्तोगाछ, धन्नेगाछ । )

अथ काकमाचीनाम ।—

काकमाची ध्वाङ्क्षमाची वायसाह्वा च वायसी ।
सर्वतिक्ता बहुफला कट्फला च रसायनी ॥ १३३ ॥
गुच्छफला काकमाता स्वादुपाका च सुन्दरी ।
वरा चन्द्राविणी * चैव मत्स्याक्षी कुष्ठनाशनी ।
तिक्तिका बहुतिक्ता च नाम्नामष्टादश स्मृताः ॥ १३४ ॥
काकमाची कटुस्तिक्ता रसोष्णा कफनाशनी ।
शूलार्शःशोफदोषघ्नी कुष्ठकण्डूतिहारिणी ॥ १३५ ॥

( हिं कवैआ, कावइ, काकी । मं कं कवय्या ।
गो गुड़कांवली । )

---

* अत्र विद्रावणीति पाठस्तु सुगम एव । वस्तुतस्तु "वरा च द्राविणी चैव" इत्येवं पाठ एव लिपिकरप्रमादात् "द्राविण्याः" पूर्वं चकारस्य निवेशितत्वादीदृशः पाठप्रमादः सम्भवत्येवेत्यर्थः ।

अथ स्नुतश्रेणीनाम ।—

स्नुतश्रेणी द्रवन्ती च न्यग्रोधी मूषिकाह्वया ।
चित्रा मूषकमारी च प्रत्यक्श्रेणी च शम्बरी ॥ १३६ ॥
स्नुतश्रेणी च चक्षुष्या कटुरा कुष्ठशोषणा ।
व्रणदोषहरा चैव नेत्रामयनिकृन्तनी ॥ १३७ ॥

( मं भोम्यणी, उन्दिरविगोवा । कं वह्वोइर्दं, इलुवालु । तां इन्द्रवालुक । तें एलुकचेविचेट्टु । गौ मूषाकाणी । )

अथ मार्कवनाम ।—

मार्कवो भृङ्गराजश्च भृङ्गाह्वः केशरञ्जनः ।
पितृप्रियो रङ्गकश्च केश्यः कुन्तलवर्द्धनः ॥ १३८ ॥
पीतोऽन्यः * स्वर्णभृङ्गारो हरिवासो हरिप्रियः ।
देवप्रियो वन्दनीयः पवनश्च षडाह्वयः ॥ १३९ ॥
नीलस्तु † भृङ्गराजोऽन्यो महानीलस्तु नीलकः ।
महाभृङ्गो नीलपुष्पः श्यामलश्च षडाह्वयः ॥ १४० ॥
भृङ्गराजास्तु चक्षुष्यास्तिक्तोष्णाः केशरञ्जनाः ।
कफशोफविषघ्नाश्च तत्र नीलो रसायनः ॥ १४१ ॥

( हिं भङ्गरा । मं गडगमूरु । वं माका । गौ भीमराज । कं भङ्गरैया । )

* अत्र पीतशब्दो विशेषणवाचकः न तु पर्य्यायवाची

† अत्र नीलशब्दः पर्य्यायवाची न तु भृङ्गराजस्य विशेषणमिति ज्ञेयम्

अथ काकजङ्घानाम ।—

काकजङ्घा ध्वांक्षजङ्घा काकाह्वा साऽथ वायसी ।
पारावतपदी दासी नदीकान्ता सुलोमशा ॥ १४२ ॥
काकजङ्घा तु तिक्तोष्णा क्रिमिव्रणकफापहा ।
बाधिर्य्यजीर्णजित् जीर्ण-विषमज्वरहारिणी ॥ १४३ ॥
गौ केउयाठेँङा । मसीति पाश्चात्ये । म' जीरी । क' षौलिच । )

अथ चुञ्चुनाम ।—

चुञ्चुश्च विजला चञ्चुः कलभी वीरपत्रिका ।
चुञ्चुरश्चुञ्चुपत्रश्च सुशाकः क्षेत्रसम्भवः ॥ १४४ ॥
चुञ्चुस्तु मधुरा तीक्ष्णा कषाया मलशोषणी ।
गुल्मोदरविबन्धार्शो-ग्रहणीरोगहारिणी ॥ १४५ ॥

( म' महाचुञ्च् । क' चिरियचुञ्चु । हिं चेंवुना । तें चिन्तचेट्टु ।
गौ चेँचको । )

अथ वृहच्चुञ्चुनाम ।—

वृहच्चुञ्चुर्विषारिः स्यान्महाचुञ्चुः सुचुञ्चुका ।
स्थूलचुञ्चुर्दीर्घपत्री दिव्यगन्धा च सप्तधा ॥ १४६ ॥
महाचुञ्चुः कटूष्णा च कषाया मलरोधनी ।
गुल्मशूलोदरार्शोऽर्त्ति-विषघ्नी च रसायनी ॥ १४७ ॥

अथ क्षुद्रचुञ्चुनाम ।—

क्षुद्रचुञ्चुः सुचुञ्चुः स्याच्चुञ्चुः शुनकचुञ्चुका ।
त्वक्सारभेदिनी क्षुद्रा कटुका चिरपत्रिका ॥ १४८ ॥

क्षुद्रचुञ्चुस्तु मधुरा कटूष्णा च कषायिका।
दीपनी शूलगुल्मार्शः-शमनी च विबन्धकृत् ॥ १४९ ॥

( मं लाङ्गानुचुञ्चु, नाड़चुञ्चु। क' छोटिचेच। )

अथ महाचुञ्चुवीजगुणाः।—

चुञ्चुवीजं कटूष्णञ्च गुल्मशूलोदरार्त्तिजित्।
विषत्वग्दोषकण्डूति-खर्जूकुष्ठविषापहम् ॥ १५० ॥

अथ सिन्दुवारनाम।—

सिन्दुवारः श्वेतपुष्पः सिन्दुकः सिन्दुवारकः।
सूरसाधनको नेता सिद्धकस्वार्थसिद्धकः ॥ १५१ ॥
सिन्दुवारः कटुस्तिक्तः कफवातक्षयापहः।
कुष्ठकण्डूतिशमनः शूलहृत्काससिद्धिदः ॥ १५२ ॥

( हिं शम्भालु। मं लिङ्गुर। तें वोविल्लि। तां निर्गोञ्चि।
गौ शादा निशिन्दा। )

अथ नीलनिर्गुण्डीनाम :—

सुगन्धाऽन्या शीतसहा निर्गुण्डी नीलसिन्दुकः।
सिन्दूकश्चपिका भूत-केशीन्द्राणी च नीलिका ॥ १५३ ॥
कटूष्णा नीलनिर्गुण्डी तिक्ता रूक्षा च कासजित्।
श्लेष्मशोफसमीरार्त्ति-प्रदराध्मानहारिणी ॥ १५४ ॥

( मं करियल्लोक्कि। क' भेउडी। तें नल्लवविले। वं कलअङुलसा।
दां कालिसुम्बालि। गौ नील निशिन्दा, जगत्मादन। )

अथ शेफालिनाम।—

शेफालिका तु सुवहा शुक्लाङ्गी शीतमञ्जरी प्रोक्ता।
अपराजिता च विजया वातारिर्भूतकेशी च ॥ १५५ ॥

शेफालिः कटुतिक्तोष्णा रूक्षा वातक्षयापहा ।
स्यादङ्गसन्धिवातघ्नी गुदवातादिदोषनुत् ॥ १५६ ॥

( हिं सिहरु, सिओलि । मं पाढरीनिर्गुण्डि । कं बिलियलोके । वं हरसिङ्गर । तां मनूजप । गौ शिउलि । लहरौति पञ्जावे प्रसिद्धा । )

अथ भेण्डानाम ।—

भेण्डा भिण्डातिका भिण्डो भिण्डकः चेत्रसम्भवः ।
चतुष्पदश्चतुष्पुण्ड्रः सुशाकश्चाम्लपत्रकः ॥ १५७ ॥
करपर्णो वृत्तबीजो भवेदेकादशाह्वयः ।
भेण्डा त्वम्लरसा सोष्णा ग्राहिका रुचिकारिका ॥ १५८ ॥

( मं भेण्डु । कं बेंडे । तां भेण्डोरञ्जुसम्भव । )

अथ पुत्रदानाम ।—

पुत्रदा गर्भदात्री च प्रजादाऽपत्यदा च सा ।
सृष्टिप्रदा प्राणिमाता तापसद्रुमसन्निभा ॥ १५९ ॥
पुत्रदा मधुरा शीता नारीपुष्पादिदोषहा ।
पित्तदाहश्रमहरा गर्भसम्भूतिदायिका ॥ १६० ॥

( मं गर्भदा । कं वेदनकस । )

अथ तक्राह्वानाम ।—

तक्राह्वा तक्रभक्षा तु तक्रपर्य्यायवाचका ।
पञ्चाङ्गुली सिताभा स्यादेषा पञ्चाभिधा स्मृता ।
तक्रा कटुः क्रिमिघ्नी स्याद् व्रणनिर्मूलिनी च सा ॥ १६१ ॥

( मं ताका । कं छिट्टशिके । )

अथ स्वर्णुलीनाम।—

स्वर्णुली हेमपुष्पी स्यात् स्वर्णपुष्पध्वजा तथा ।
स्वर्णुली कटुका शीता कषाया च व्रणापहा ॥ १६२ ॥

( वं सोनुली । कं सट्टकनकस । तां सनाय । हिं श्रानल् टस् ।
मं गुड्मलवर । तें येश्लु । पञ्जा० कनिश्रार । गो सोनालुगाछ । )

अथ खस्खस(खाखस)नाम ।—

खस्खसः सूक्ष्मबीजः स्यात् सुबीजः सूक्ष्मतण्डुलः ।
खस्खसो मधुरः पाके कान्तिवीर्य्यबलप्रदः ॥ १६३ ॥

( खस्खस मालवे प्रसिद्धः । गो खाकसी, पोस्तदानार गाछ । )

अथ शिम्ब(ग)डीनाम ।—

शिम्बडी मतिदा प्रोक्ता बल्या पङ्गुत्वहारिणी ।
द्रवत्पत्री च वातघ्नी गुच्छपुष्पी च सप्तधा ॥ १६४ ॥
शिम्बडी कटुरुष्णा च वातहृत् पृष्ठशूलहा ।
युक्त्या रसायने योज्या देहदार्ढ्यंकरी च सा ॥ १६५ ॥

( मं सेबुडितो । कं सेगुडित । हिं पङ्गोनो । )

अथ अरण्यकुसुम्भनाम ।—

ज्ञेयोऽरण्यकुसुम्भः स्यात् कौसुम्भश्चाग्निसम्भवः ।
कौसुम्भः कटुकः पाके श्लेष्महृद्दीपनश्च सः ॥ १६६ ॥

( मं रानकसुम्भे । कं कालुकुसुम्भे । तां अडविकुसुमे ।
गो वनकुसुम । )

अथ आहुल्यनाम ।—

आहुल्यं हलुराख्यं च करं तरवटं तथा ।
शिम्बीफलं सुपुष्पं स्यादलर्कं दन्तकाष्ठकम् ॥ १६७ ॥

हेमपुष्पं तथा पात-पुष्पं काञ्चनपुष्पकम् ।
नृपमङ्गल्यकं चैव शरत्पुष्पं त्रिरेकधा ॥ १६८ ॥
आहुल्यं तिक्तशीतं स्याच्चक्षुष्यं पित्तदोषनुत् ।
मुखरुक्कुष्ठकण्डूति-जन्तुशूलव्रणापहम् ॥ १६९ ॥

( हिं भुञ्जितवड़ । मं तरवडु, आवेर । कं भूईतरवडु ।
तां नेलांवरे । )

अथ भूम्याहुल्यनाम ।—

भूम्याहुल्यं कुष्ठकेतुर्मार्कण्डीयं महौषधम् ।
भूम्याहुल्यं तिक्तरसं ज्वरकुष्टामसिध्मनुत् ॥ १७० ॥

( मं कासवदा । कं एलहुरि । हिं भूइतखड़ । )

अथ कासमर्दनाम ।—

कासमर्दोऽरिमर्दश्च कासारिः कासमर्दकः ।
कालः कनक इत्युक्तो जारणो दीपकश्च सः ॥ १७१ ॥
कासमर्दः सतिक्तोष्णो मधुरः कफवातनुत् ।
अजीर्णकासपित्तघ्नः पाचनः कण्ठशोधनः ॥ १७२ ॥

( हिं कसौदी, कासिन्दा । मं कं कासविन्दा । तें कसिविन्दचेट्टु ।
गौ कालकासन्दा । कासवदीफरहुल् कसादश्च इति
देशविशेषे ख्यातः । )

अथ आदित्यपत्रनाम ।—

आदित्यपत्रोऽर्कदलार्कपत्रः स्यात् सूक्ष्मपत्रस्तपनच्छदश्च ।
कुष्ठारिरर्को विटपः सुपत्रो रविप्रियो रश्मिपतिश्च रुद्रः ॥१७३॥
आदित्यपत्रः कटुरुष्णवीर्यः कफापहो वातरुजापहश्च ।

सन्दीपनो जाठरगुल्महारो ज्ञेयः स चारोचननाशकश्च ॥१७४॥
( मं आदित्याचाभेड़ । कं आदित्यभक्तियभेडु । )

अथ श्वेताम्लीनाम ।—

श्वेताम्ली त्वम्बिका प्रोक्ता पिष्टौण्डिः पिण्डिका च सा ।
श्वेताम्ली मधुरा वृष्या पित्तघ्नी बलदायिनी ॥ १७५॥
( मं पीठौण्डि । कं बिलियहुलि । तें कालीपिटौण्डि ।
तां करियहुलि । )

अथ नीलाम्लीनाम ।—

नीलाम्ली नीलपिष्टौण्डी श्यामाम्ली दीर्घशाखिका ।
नीलाम्ली मधुरा रुच्या कफवातहरा परा ॥ १७६ ॥
( हिं कालीपिठोली । मं अजगन्धि । कं वेलैयगिडु ।
तां नल्लनुलगुड़ । )

अथ अजगन्धानाम ।—

अजगन्धा वस्तगन्धा सुरपुष्पाऽविगन्धिका ।
उग्रगन्धा ब्रह्मगर्भा ब्राह्मी पूतिमयूरिका ॥ १७७ ॥
अजगन्धा कटूष्णा स्याद्वातगुल्मोदरापहा ।
कर्णव्रणार्त्तिशूलघ्नी पीता चेदञ्जने हिता ॥ १७८ ॥
( नीलवर्योति सर्वत्र प्रसिद्धा । तिलोणी, वर्वरीति लोधी । )

अथ आदित्यभक्तानाम ।—

आदित्यभक्ता वरदाऽर्कभक्ता सुवर्चला सूर्यलताऽर्ककान्ता ।
मण्डूकपर्णी सुरसम्भवा च सौरिः सुतेजोऽर्कहिता रवीष्टा ॥१७९॥
मण्डूकी सत्यनाम्नी स्याद्देवी मार्त्तण्डवल्लभा ।
विक्रान्ता भास्करेष्टा च भवेदष्टादशाह्वया ॥ १८० ॥

आदित्यभक्ता शिशिरा सतिक्ता कटुस्तथोग्रा कफहारिणी च ।
त्वग्दोषकण्डूव्रणकुष्ठभूत-ग्रहोग्रशीतज्वरनाशिनी च ॥ १८१ ॥

( क॑ आदिता । तां आदित्यभक्ति । हिं हुलहुल, हुरहुज ।
मं सूर्य्यफुलवल्लि । गौ शुवटे, वनशलुते, हुड़हुड़े । )

अथ विषमुष्टिनाम ।—

विषमुष्टिः केशमुष्टिः सुमुष्टिरणुमुष्टिकः ।
क्षुपडोडिसमायुक्तो मुष्टिः पञ्चाभिधः स्मृतः ॥ १८२ ॥
विषमुष्टिः कटुस्तिक्तो दीपनः कफवातहृत् ।
कण्ठामयहरो रुच्यो रक्तपित्तार्त्तिदाहकृत् ॥ १८३ ॥

( हिं विषदोड़ी । मं दोडो । क॑ कडसिगे । गौ वांड़ानिम । )

अथ डोडीनाम ।—

अन्या डोडी तु जीवन्ती शाकश्रेष्ठा सुखालुका ।
बहुपर्णी दीर्घपत्रा सूक्ष्मपत्रा च जीवनी ॥ १८४ ॥
डोडी तु कटुतिक्तोष्णा दीपनी कफवातजित् ।
कण्ठामयहरा रुच्या रक्तपित्तार्त्तिदाहनुत् ॥ १८५ ॥

( मं वेलिदोडी । कं वल्लिकडसिगे । )

अथ कालाञ्जनीनाम ।—

कालाञ्जनी चाञ्जनी च रेचनी चासिताञ्जनी ।
नीलाञ्जनी च कृष्णाभा काली कृष्णाञ्जनी च सा ॥ १८६ ॥
कालाञ्जनी कटूष्णा स्यादस्रामाग्निमिर्योवनी ।
अपानावर्त्तशमनी जठरामयहारिणी ॥ १८७ ॥

( कालाञ्जनी सर्वत्र प्रसिद्धा । गौ कालकापास । )

अथ कार्पासीनाम । –

कार्पासी सारिणी चैव चव्या स्थूला पिचुस्तथा ।
बदरी बादरश्चैव गुणसूसुश्चिकेरिका ।
मरूद्भवा समुद्रान्ता ज्ञेया एकादशाभिधा ॥ १८८ ॥
कार्पासी मधुरा शीता स्तन्या पित्तकफापहा ।
तृष्णादाहश्रमभ्रान्ति-मूर्च्छाहृद्बलकारिणी ॥ १८९ ॥

( म' रक्तकापुसी । क' हत्ति । तें पत्ति । )

अथ अरण्यकार्पासीनाम ।—

वनजाऽरण्यकार्पासी भारद्वाजी वनोद्भवा ।
भारद्वाजी हिमा रुच्या व्रणशस्त्रक्षतापहा ॥ १९० ॥

( म' रानकापुसी । क' काडहत्ति । )

अथ कोकिलाक्षनाम ।— *

कोकिलाक्षः शृगाली च शृङ्खला रक्तणस्तथा ।
शृङ्गालघण्टी वज्रास्थि-शृङ्खला वज्रकण्टकः ॥ १९१ ॥
इक्षुरः क्षुरको वज्रः शृङ्खलिका पिक्षेक्षणः ।
पिच्छिला चेक्षुगन्धा च ज्ञेया भुवनसम्मिता ॥ १९२ ॥
कोकिलाक्षस्तु मधुरः शीतः पित्तातिसारनुत् ।
वृष्यः कफहरो बल्यो रुच्यः सन्तर्पणः परः ॥ १९३ ॥

( म' कोलिसा । क' कुलुगोलिके । चिं कोलिस्ताविखड्, कैलया। तद्बीजं तालमाखना । तें गोलिमिडिचेट्टु, गोब्बिचेट्ट । उत् कुइलिरखा, माखुरेया । गो कुलेखाड़ा, कुलेकाँटा, शूलमर्दन । )

* उद्देशे "द्विविधः कोकिलाक्षकः" इति ग्रन्थकारेणोक्तम्, अत्र विवरणे पुनः एकविधस्यैव उल्लेखो दृश्यते इति सुधीभिर्द्रष्टव्यम् ।

अथ सातलानाम ।—

सातला सप्तला सारी विदुला विमलाऽमला ।
बहुफेना चर्मकषा फेना दीप्ता विषाणिका ।
स्वर्णपुष्पी चित्रघना स्यात्त्रयोदशनामका ॥ १९४ ॥
सातला कफपित्तघ्नी लघुतिक्तकषायिका ।
विसर्पकुष्ठविस्फोट-व्रणशोफनिकृन्तनी ॥ १९५ ॥

( धं वडिलसोनुली । कं छिरियघटकनख । तां पीतदुग्ध-
स्नेहुण्डभेद । गौ मनसाभेद । )

अथ कामवृद्धिनाम ।—

स्यात् कामवृद्धिः स्मरवृद्धिसंज्ञो मनोजवृद्धिर्मदनायुधश्च ।
कन्दर्पजीवश्च जितेन्द्रियाह्वः कामोपजीवोऽपि च जीवसंज्ञः॥१९६
कामवृद्धेस्तु बीजं स्यान्मधुरं बलवर्द्धनम् ।
कामवृद्धिकरं रुच्यं बहुलेन्द्रियवृद्धिदम् ॥ १९७ ॥

( कामजा षण्डितेन्द्रिया कर्णाटदेशे प्रसिद्धा । )

अथ चक्रमर्दनाम ।—

स्याच्चक्रमर्दोऽण्डगजो गजाख्यो मेषाह्वयश्चैडगजोऽण्डहस्ती ।
व्यावर्त्तकश्चक्रगजश्च चक्री पुन्नाडपुन्नाटविमर्दकाश्च ॥ १९८ ।
दद्रुघ्नस्तर्वटश्च स्याच्चक्राह्वः शुकनाशनः ।
दृढबीजः प्रपुन्नाटः खर्जूघ्नश्चोनविंशतिः ॥ १९९ ॥
चक्रमर्दः कटुस्तीव्रो मेदोवातकफापहः ।
व्रणकण्डूतिकुष्ठार्त्ति-दद्रुपामादिदोषनुत् ॥ २०० ॥

( मं तरवटा । कं चगचे । हिं चक्वड । गौ चाकुन्दा,
चाटकाटा, एड़ाञ्चौ । )

अथ झिञ्झिरीटानाम।—

झिञ्झिरीटा कण्टफली पीतपुष्पाऽपि झिञ्झिरा।
हुड़रोमाश्रयफला वृत्ता चैव षड़ाह्वया॥ २०१॥
झिञ्झिरीटा कटुः शीता कषाया चातिसारजित्।
वृष्या सन्तर्पणी बल्या महिषीक्षीरवर्द्धनी॥ २०२॥

( म॰ झिञ्झिरिडा। क॰ जोट्टाट्टे। ता॰ अण्टरीट। )

इत्थं पृथुक्षुपकदम्बकनामकाण्ड-
निर्वर्णनागुणनिरूपणपूर्वमेतम्।
वर्गं वटुः स्फुटमधीत्य दधीत सद्यः
सौवर्गवैद्यकविचारसुचातुरीं सः॥ २०३॥ *

येन स्वेन नृणां क्षणेन महता वीर्य्येण सूर्य्योपमा
व्यत्यस्याङ्गविकारमुद्धततया दूरं क्षिपन्त्यामयान्।
स्वस्मिन्नाम्न्यपि संस्तवादिवशतस्तेषां विकारोदय-
व्यत्यासं दधतां नितान्तगहनो वर्गः क्षुपाणामयम्॥ २०४॥ †

* इत्थमित्यादि।—इत्थं पृथुक्षुपादीनां निर्वर्णनाया गुणनिरूपण-पूर्वकम् एतं वर्गं स्फुटमधीत्य सः (शिक्षार्थी) वटुः (माणवकः) सौवर्गस्य सुवर्गसम्बन्धिनः वैद्यकग्रन्थस्य विचारविषये सम्यक् चातुरीं कौशलं सद्यस्तत्क्षणात् दधीत कुर्य्यादित्यन्वयमुखी व्याख्या।

† येनेत्यादि।—येन स्वेन महता वीर्य्येण सूर्य्योपमास्तेजस्विनः, ये क्षुपा इति शेषः, क्षणेन नृणाम् अङ्गविकारं देहरोगं व्यत्यस्य विनाश्य उद्धततया वीर्य्यातिशयादिति भावः, आमयान् नृणां रोगान् दूरं क्षिपन्ति ताड़यन्ति। तथा स्वस्मिन् स्वकीये नाम्नि नामधेयेऽपि, का कथा सेवनादौ इत्यपेरर्थः, संस्तवादिवशतः परिचयादिवशात् विकारो-

सन्तापं विदुषां प्रसह्य समितौ स्फीतं प्रतापं द्विषां
यस्मिन् विस्मयतेऽवनञ्च निधनं दृष्ट्वाऽधुना तेजसा।
धुन्वन्त्यौषधयः स्वयं किल गदान् येनार्पिताः स्पर्द्धया
तुर्य्यस्तस्य कृतौ स्थितो नरहरेर्वर्गः शताह्वादिकः॥ २०५ ॥*

इति श्रीनरहरिपण्डितविरचिते राजनिघण्टौ
शताह्वादिवर्गश्चतुर्थः।

दयस्य रोगोत्पत्तेः व्यत्यासं नाशं दधतां कुर्वतां तेषां चुपाणां नितान्त-गहनः दुर्ज्ञेयत्वादतीव दुरूहः अयं वर्गः समाप्तो भवतीति शेषः।

* सन्तापमित्यादि।—विदुषां सन्तापं संज्वरं प्रसह्य अभिभूय नाशयित्वेति तावत्, तथा समितौ सदसि स्फीतं वर्द्धितं द्विषां शत्रूणां प्रतापं प्रभावं तेज इति यावत् प्रसह्य, अधुना इदानीं तेजसा यस्य प्रभावेणेत्यर्थः, अवनं विदुषामिति शेषः, निधनं द्विषामिति शेषः, दृष्ट्वा यस्मिन् यत्समीपे इति सामीप्याधिकरणम्; विस्मयते विस्मया-पन्नो भवति लोक इति शेषः। तथा येन नरहरिणा स्वयम् आत्मना स्पर्द्धया गर्वेण अर्पिता औषधयः गदान् रोगान् धुन्वन्ति नाशयन्ति तस्य नरहरेः कृतौ ग्रन्थे अयं तुर्य्यः चतुर्थः शताह्वादिकः वर्गः स्थितः।

---

## अथ पर्पटादिवर्गः ।

---

पर्पटो जीवकश्चैवर्षभकः श्रावणी द्विधा ।
मेदाद्वयं ऋद्धिवृद्धी धूम्रपत्रा प्रसारणी ॥ १ ॥
चतुष्पाषाणभेदः स्यात् कन्या वह्निशिखा तथा ।
क्षीरिणीद्वितयं चैव त्रायमाणा रुदन्तिका ॥ २ ॥
ब्राह्मी द्विधा च वन्दाकः कुलत्था तण्डुलीयकः ।
चिचिल्ली नागशुण्डी च कुटुम्बी स्थलपद्मिनी ॥ ३ ॥
जम्बूश्च नागदन्ती च विष्णुक्रान्ता कुणञ्जरः ।
भूम्यामली च गोरक्षी गोलोमी दुग्धफेनिका ॥ ४ ॥
क्षुद्राम्लिका च लज्जाह्वा हंसपादी च कातरा ।
पुनर्नवात्रयं प्रोक्तं वसुको द्विविधः स्मृतः ॥ ५ ॥
सर्पिणी चालिमत्स्याक्षी गुण्डालाऽवनिपाटली ।
स्यात् पाण्डुरफली श्वेता ब्रह्मदण्डी द्रवन्तिका ॥ ६ ॥
द्रोणपुष्पीद्वयं चैव भण्डगीरक्षदुग्धिका ।
नवबाणमिताः क्षुद्र-क्षुपाः प्रोक्ता यथाक्रमात् ॥ ७ ॥*

* नवबाणमिता इति।—अत्र पर्पटमारभ्य गोरक्षदुग्धिकां यावत् नववेदमिता संख्या भवति। तत एषां भेदान् धृत्वा, ऋद्धिवृद्ध्योरैक्यञ्च गृहीत्वा पुनर्दशसंख्या अधिका; ततो मिलित्वा एकोन[illegible] संख्या स्यादित्यर्थः ।

अथ पर्पटनाम ।—

पर्पटश्चरको रेणुस्तृष्णारिः खरको रजः ।
शीतः शीतप्रियः पांशुः कल्पाङ्गो वर्मकण्टकः ॥ ८ ॥
क्षमशाखः पर्पटकः सुतिक्तो रक्तपुष्पकः ।
पित्तारिः कटुपत्रश्च कवचोऽष्टादशाभिधः ॥ ९ ॥
पर्पटः शीतलस्तिक्तः पित्तश्लेष्मज्वरापहः ।
रक्तदाहारुचिग्लानि-मदविभ्रमनाशनः ॥ १० ॥

( म' वं पित्तपापड़ा । क' पर्पाटक । हिं दवनपापड़ा । उत् जड़पापड़ा । गो खेतपापड़ा । )

अथ जीवकनाम ।—

जीवको जीवनो जीव्यः शृङ्गाह्वः प्राणदः प्रियः ।
चिरजीवी च मधुरो मङ्गल्यः कूर्चशीर्षकः ॥ ११ ॥
ह्रस्वाङ्गो वृद्धिदश्चोक्तो ह्यायुष्मान् जीवदस्तथा ।
दीर्घायुर्बलदश्चैव नामान्येतानि षोड़श ॥ १२ ॥
जीवको मधुरः शीतो रक्तपित्तानिलार्त्तिजित् ।
क्षयदाहज्वरान् हन्ति शुक्रश्लेष्मविवर्द्धनः ॥ १३ ॥

( जीवक इति गौड़े प्रसिद्धः । तें वेगिसपुचेट्टु । )

अथ ऋषभनाम ।—

ऋषभो गोपतिर्धीरो विषाणी धूर्द्धरो वृषः ।
ककुद्मान् पुङ्गवो वोढ़ा शृङ्गो धुर्य्यश्च भूपतिः ॥ १४ ॥
कामी ऋक्षप्रियश्चोक्षा लाङ्गुली गौश्च बन्धुरः ।
गोरक्षो वनवासी च ज्ञेयो विंशतिनामकः ॥ १५ ॥

ऋषभो मधुरः शीतः पित्तरक्तविरेकनुत्।
शुक्रश्लेष्मकरो दाह-क्षयज्वरहरश्च सः ॥ १६ ॥
( ऋषभक इति काश्मीरे गौड़े च प्रसिद्ध । )

अथ श्रावणीनाम।—

श्रावणी स्यान्मुण्डितिका भिक्षुः श्रवणशीर्षिका ।
श्रवणा च प्रव्रजिता परिव्राजी तपोधना ॥ १७ ॥
श्रावणी तु कषाया स्यात् कटूष्णा कफपित्तनुत्।
आमातीसारकासघ्नी विषच्छर्दिविनाशिनी ॥ १८ ॥
( म' छोटीमुण्डी। क' कोयीबोडतर। गौ मुण्डीरी। )

अथ महाश्रावणीनाम।—

महाश्रावणिकाऽन्या सा महामुण्डी च लोचनी।
कदम्बपुष्पी विकचा क्रोड़चड़ा पलङ्कषा ॥ १९. ॥
नदीकदम्बी मुण्डाख्या महामुण्डतिका च सा।
छिन्ना ग्रन्थिनिका माता स्थविरा लोभनी तथा।
भूकदम्बोऽलम्बुषा स्यादिति सप्तदशाह्वया ॥ २० ॥
महामुण्डुग्रणातिक्ता च ईषद्गौल्या मरुच्छिदा।
स्वरक्तद्रोचनी चैव मेहघ्नश्च रसायनी ॥ २१ ॥
( म'वडीमुण्डी। क' हिरिय बोलतर। गौ वड़थुलकुड़ि,
गोरक्षमुण्डी। )

अथ मेदानाम।—

मेदा वसा मणिच्छिद्रा जीवनी शल्यपर्णिका।
नखच्छेद्या हिमा दृङ्गा मध्यदेशे प्रजायते ॥ २२ ॥
मेदःसारा स्नेहवती मेदिनी मधुरा वरा।

स्निग्धा मेदोद्भवा साध्वी शल्यदा बहुरन्ध्रिका ।
जनविंशत्याह्वया सा मता पुरुषदन्तिका ॥ २३ ॥
मेदा तु मधुरा शीता पित्तदाहार्त्तिकासनुत् ।
राजयक्ष्मज्वरहरा वातदोषकरी च सा ॥ २४ ॥
( लघुमेदा इति गौड़े प्रसिद्धा । क° महामेदा । तें ज्योतिष्मती-चेट्टु, शङ्खपुष्पचेट्टु । )

अथ महामेदानाम ।—

महामेदा वसुच्छिद्रा जीवनी पांशुरागिणी ।
देवेष्टा सुरमेदा च दिव्या देवमणिस्तथा ॥ २५ ॥
देवगन्धा महाच्छिद्रा ऋच्चार्हा रुद्रसम्मिता ।
महामेदाऽभिधः कन्दो लताजातः सुपाण्डुरः ।
मेदाऽपि शुक्लकन्दः स्यान्मेदोधातुमिव स्रवेत् ॥ २६ ॥
महामेदा हिमा रुच्या कफशुक्रप्रवृद्धिकृत् ।
हन्ति दाहास्रपित्तानि क्षयं वातज्वरं च सा ॥ २७ ॥
( महामेदेति गौड़े प्रसिद्धा । तें महामेदयनेचेट्टु । )

अथ ऋद्धिनाम ।—

ऋद्धिः सिद्धिः प्राणदा जीवदात्री सिद्धा योग्या चेतनीया रथाङ्गी ।
मङ्गल्या स्याल्लोककान्ता यशस्या जीवश्रेष्ठा द्वादशाह्वा क्रमेण॥२८॥

अथ वृद्धिनाम ।—

वृद्धिस्तुष्टिः पुष्टिदा वृद्धिदात्री मङ्गल्या श्रीः सम्पदाशीर्जनेष्टा ।
लक्ष्मीर्भूतिर्मुत् सुखं जीवभद्रा स्यादित्येषा लोकसंज्ञा क्रमेण॥२९॥
ऋद्धिर्वृद्धिश्च कन्दौ द्वौ भवतः कोशयामले ।
श्वेतरोमान्वितः कन्दो लताजातः सरन्ध्रकः ॥ ३० ॥

तूलग्रन्थिसमा ऋद्धिर्वामावर्त्तफला च सा।
वृद्धिस्तु दक्षिणावर्त्त-फला प्रोक्ता महर्षिभिः ॥ ३१ ॥
ऋद्धिर्वृद्धिश्च मधुरा सुस्निग्धा तिक्तशीतला।
रुचिमेधाकरी श्लेष्म-क्रिमिकुष्ठहरा परा ॥ ३२ ॥
प्रयोगेष्वनयोरेकं यथालाभं प्रयोजयेत्।
यत्र द्वयानुसृष्टिः स्याद्द्वयमप्यत्र योजयेत् ॥ ३३ ॥
( कौशयामले. ऋद्धिवृद्धीति च गौड़े प्रसिद्धं। )

अथ धूम्रपत्रानाम।—

धूम्रपत्रा तु धूम्राह्वा सुलभा तु स्वयम्भुवा।
गृध्रपत्रा च गृध्राणी क्रिमिघ्नी स्त्रीमलापहा ॥ ३४ ॥
धूम्रपत्रा रसे तिक्ता शोफघ्नी क्रिमिनाशिनी।
उष्णा कासहरा चैव रुच्या दीपनकारिणी ॥ ३५ ॥
( मं॰ गान्धाथि। कं॰ कत्तगिरि। उत् धूयापतर। गो तामाक। )

अथ प्रसारणीनाम।—

प्रसारणी सुप्रसरा सारणी सरणी सरा।
चारुपर्णी राजबला भद्रपर्णी प्रतानिका ॥ ३६ ॥
प्रबला राजपर्णी च बल्या भद्रबला तथा।
चन्द्रवल्ली प्रभद्रा च ज्ञेया पञ्चदशाह्वया ॥ ३७ ॥
प्रसारणी गुरूष्णा च तिक्ता वातविनाशिनी।
अर्शःश्वयथुहन्त्री च मलविष्टम्भहारिणी ॥ ३८ ॥
( मं॰ चान्दवेलि। कं॰ हेसरणे। हिं गान्धालि, गन्धालि,
गन्धप्रसारणी। तें॰ गोन्तेमगोरुचेट्टु, सविरेलचेट्टु।
गो गन्धभादुलिया, गंधाल। )

अथ पाषाणभेदनाम।—

पाषाणभेदकोऽश्मघ्नः शिलाभेदोऽश्मभेदकः।
श्वेता चोपलभेदी च नगजिच्छिलिगर्भजा ॥ ३८ ॥
पाषाणभेदी मधुरस्तिक्तो मेहविनाशनः।
हृद्दाहमूत्रकृच्छ्रघ्नः शीतलश्चाश्मरीहरः ॥ ४० ॥

अथ वटपत्रीनाम।—

अन्या तु वटपत्री स्यादन्या चैरावती च सा।
गोधावतीरावती च श्यामा खट्वाङ्गनामिका ॥ ४१ ॥
वटपत्री हिमा गौल्या मेहकृच्छ्रविनाशिनी।
बलदा व्रणहन्त्री च किञ्चिद्दीपनकारिणी ॥ ४२ ॥
( मं वड़्वती। कं पाषाणभेदि। तां शालिलगपाषाणभेदि।
हिं पाथरचुर। तें पिण्डिचेट्टु। गौ पाथरकुचा,
हिमसागर। पाथरचुणीति लोके। )

अथ श्वेतशिलानाम।—

अन्या श्वेता शिलावल्का शिलाजा शैलवल्कला।
वल्कला शैलगर्भाह्वा शिलात्वक् सप्तनामिका ॥ ४३ ॥
शिलावल्कं हिमं स्वादु मेहकृच्छ्रविनाशनम्।
मूत्ररोधाश्मरीशूल-क्षयपित्तापहारकम् ॥ ४४ ॥

अथ क्षुद्रपाषाणभेदनाम।—

क्षुद्रपाषाणभेदाऽन्या चतुष्पत्री च पार्वती।
नागभूश्चाश्मकेतुश्च गिरिभूः कन्दरोद्भवा ॥ ४५ ॥

शैलोद्भवा च गिरिजा नगजा च दशाह्वया ।
क्षुद्रपाषाणभेदा तु व्रणकृच्छ्राश्मरोहरा ॥ ४६ ॥

( मं कं क्षुद्रपाषाणभेदि। )

अथ गृहकन्यानाम। -

गृहकन्या कुमारी च कन्यका दीर्घपत्रिका ।
स्थलेरुहा मृदुः कन्या बहुपत्राऽमराऽजरा ॥ ४७ ॥
कण्टकप्रावृता वीरा भृङ्गेष्टा विपुलस्रवा ।
ब्रह्मघ्नी तरुणी रामा कपिला चाम्बुधिस्रवा ।
सुकण्टका स्थूलदलेत्येकविंशतिनामका ॥ ४८ ॥
गृहकन्या हिमा तिक्ता मदगन्धिः कफापहा ।
पित्तकासविषश्वास-कुष्ठघ्नी च रसायनी ॥ ४९ ॥

( हिं घिउकुमारी। मं कुवारि। कं लोलिसर। तां चिकुवार। तें पिन्नगोरिण्टकलवन्द, किरजाजितोगे। गौ घृतकुमारी। )

अथ बर्हिचूड़ानाम।—

बर्हिचूड़ा तु शिखिनी शिखालुः सुशिखा शिखा ।
शिखाबला केकिशिखा मयूराद्यभिधा शिखा ॥ ५० ॥
बर्हिचूड़ा रसे स्वादुर्मूत्रकृच्छ्रविनाशिनी ।
बालग्रहादिदोषघ्नी वश्यकर्मणि शस्यते ॥ ५१ ॥

(मं मयूरशिखा। कं होरेयसूसुव। तें मयूरशिखियनेचुपविशेषमु।)

अथ क्षीरिणीनाम।—

क्षीरिणी काञ्चनक्षीरी कर्षणी कटुपर्णिका ।
तिक्तदुग्धा हैमवती हिमदुग्धा हिमावती ॥ ५२ ॥

हिमाद्रिजा पीतदुग्धा यवचिञ्चा हिमोद्भवा ।
हैमी च हिमजा चेति चतुरेकगुणाह्वया ॥ ५३ ॥
क्षीरिणी कटुतिक्ता च रेचनी शोफतापनुत् ।
क्रिमिदोषकफघ्नी च पित्तज्वरहरा च सा ॥ ५४ ॥

( म॰ पिसौराभेदः । क॰ चिक्कणिकेयभेदु । गो खिरुइ । )

अथ स्वर्णक्षीरीनाम ।—

स्वर्णक्षीरी स्वर्णदुग्धा स्वर्णाह्वा रुक्मिणी तथा ।
सुवर्णा हेमदुग्धी च हेमक्षीरी च काञ्चनी ॥ ५५ ॥
स्वर्णक्षीरी हिमा तिक्ता क्रिमिपित्तकफापहा ।
मूत्रकृच्छ्राश्मरीशोफ-दाहज्वरहरा परा ॥ ५६ ॥

म॰ पिसौराभेदु । क॰ चिक्कणिकेयभेदु । हिं भेरवन्द । वं पिवला धोतरा । तां ब्रह्मदण्डुविरइ । गो शेयालकाँटा, सोणाखिरुइ । )

अथ त्रायमाणानाम ।—

त्रायमाणा कृतत्राणा त्रायन्ती त्रायमाणिका ।
बलभद्रा सुकामा च वार्षिकी गिरिजाऽनुजा ॥ ५७ ॥
मङ्गल्याह्वा देवबला पालनी भयनाशिनी ।
अवनी रक्षणी त्राणा विज्ञेया षोड़शाह्वया ॥ ५८ ॥
त्रायन्ती शीतमधुरा गुल्मज्वरकफास्रनुत् ।
भ्रमतृष्णाक्षयग्लानि-विषच्छर्दिविनाशिनी ॥ ५९ ॥

( त्रायमाणा इति हिमवति प्रसिद्धा । गो बलाएसुर, बलालता, बहुला, वनभादुलिगा । )

अथ रुदन्तीनाम।—

स्याद्रुदन्ती स्रवत्तोया सञ्जीवन्यमृतस्रवा।
रोमाञ्चिका महामांसी चणपत्री सुधास्रवा॥ ६० ॥
रुदन्ती कटुतिक्तोष्णा क्षयक्रिमिविनाशिनी।
रक्तपित्तकफश्वास-मेहहारी रसायनी॥ ६१ ॥
चणपत्रसमं पत्रं क्षुपश्चैव तथाऽम्लकम्।
शिशिरे जलविन्दूनां स्रवन्तीति रुदन्तिका॥ ६२ ॥

( कं उत् रुदन्ती। मं अलुगणि। )

अथ ब्राह्मीनाम।—

ब्राह्मी सरस्वती सौम्या सुरश्रेष्ठा सुवर्चला।
कपोतवेगा वैधात्री दिव्यतेजा महौषधी॥ ६३ ॥
स्वायम्भुवी सोमलता सुरेज्या ब्रह्मकन्यका।
मण्डूकमाता मत्स्याची मण्डूकी सुरसा तथा॥ ६४ ॥
मेध्या वीरा भारती च वरा च परमेष्ठिनी।
दिव्या च शारदी चेति चतुर्विंशतिनामका॥ ६५ ॥
ब्राह्मी हिमा कषाया च तिक्ता वातास्रपित्तजित्।
बुद्धिं प्रज्ञां च मेधां च कुर्य्यादायुष्यवर्द्धनी॥ ६६ ॥

( हिं बरम्भी, श्वेतचमनी। तें ग्रम्बुमीचेट्टु। मं ब्रह्ममाण्डूकी कं कौं देवग। वँ वाम। तां वीमी। गौ ब्रह्मीशाक, अधविर्णी।

अथ लघुब्राह्मीनाम।—

ब्राह्मी तु क्षुद्रपत्राऽन्या लघुब्राह्मी जलोद्भवा।

ब्राह्मी तिक्तरसोष्णा च सरा वातामशोफजित् ॥ ६७ ॥

( मं ब्राम्हि, किक ब्राह्मी । कं कावर्षका । तां वन्दखिके । )

अथ वन्दाकनाम ।—

वन्दाकः पादपरुहा शिखरी तरुरोहिणी ।
वृक्षादनी वृक्षरुहा कामवृक्षश्च शेखरी ॥ ६८ ॥
केशरूपा तरुरुहा तरुस्था गन्धमेदिनी ।
कामिनी तरुरुट् श्यामा द्रुपदी षोड़शा ॥ ६९ ॥
वन्दाकस्तिक्तशिशिरः कफपित्तश्रमापहः ।
वश्यादिसिद्धिदो वृष्यः कषायश्च रसायनः ॥ ७० ॥

( हिं तें वन्दा । वं वादाङ्गुल । गौ मान्दड़ा, परगाछा, बांद्र । )

अथ कुलत्थानाम ।—

कुलत्था दृक्प्रसादा च ज्ञेयाऽरण्यकुलत्थिका ।
कुलाली लोचनहिता चक्षुष्या कुम्भकारिका ॥ ७१ ॥
कुलत्थिका कटुस्तिक्ता स्यादर्शःशूलनाशनी ।
विबन्धाध्मानशमनी चक्षुष्या व्रणरोपणी ॥ ७२ ॥

( हिं कुलथी । तें ओलवलु । गौ कुत्तिकलाय । मं रानकुलित्थ । कं काडहुलिग । )

अथ तण्डुलीयनाम ।—

तण्डुलीयस्तु भण्डीरस्तण्डुली तण्डुलीयकः ।
ग्रन्थिलो बहुवीर्य्यश्च मेघनादो घनस्वनः ॥ ७३ ॥
सुशाकः पथ्यशाकश्च स्फूर्जथुः स्वनिताह्वयः ।
वीरस्तण्डुलनामा च पर्य्यायाश्च चतुर्दश ॥ ७४ ॥

तण्डुलीयस्तु शिशिरो मधुरो विषनाशनः।
रुचिकृद्दीपनः पथ्यः पित्तदाहभ्रमापहः ॥ ७५ ॥
( मं ताण्डुलिजा। कं किरुकुशाले। हिं अल्पमरुसा, चवड़ाइ।
दां कांटेमाट। तां मुल्लुकिरइ। गौ गोयालनटे,
काँटानटे, छुदेनटे, चांपानटे। )

अथ चिविल्लीनाम।—

चिविल्लिका रक्तदला खरच्छदा
स्यात् क्षुद्रघोली मधुमालपत्रिका।
चिविल्लिका चैव कटुः कषायिका
ज्वरेऽतिसारे च हिता रसायनी ॥ ७६ ॥
( मं कं चिविलि। तां किरुकीलि। )

अथ नागशुण्डीनाम।—

हस्तिशुण्डी महाशुण्डी शुण्डी धूसरपत्रिका।
हस्तिशुण्डी कटूष्णा स्यात् सन्निपातज्वरापहा ॥ ७७ ॥
( गौ हातिशुंड़े। म नेलबाल। कं नलदावरे। )

अथ कुटुम्बिनीनाम।—

कुटुम्बिनी पयस्या च चोरिणी जलकामुका।
वक्रशल्या दुराधर्षा क्रूरकर्मा झिरिण्टिका ॥ ७८ ॥
शीता प्रहरजाया च शीतला च जलेरुहा।
विख्याता किल विद्वद्भिरेषा द्वादशनामभिः ॥ ७९ ॥
कुटुम्बिनी तु मधुरा ग्राहिणी कफपित्तनुत्।
व्रणास्रदोषकण्डूति-नाशनी सा रसायनी ॥ ८० ॥
( मं पहरकुटुम्बी। कं मरिजेंवणिगेयभेद। तां मंकलिमनकस। )

अथ स्थलपद्मिनीनाम ।—

स्थलपद्मी तु पद्माह्वा चारटी पद्मचारिणी ।
सुगन्धमूलाऽम्बुरुहा लक्ष्मीश्रेष्ठा सुपुष्करा ॥ ८१ ॥
रम्या पद्मवती चाति-चरा स्थूलरुहा स्मृता ।
ज्ञेया पुष्करिणी चैव पुष्कराद्या च पर्णिका । *
पुष्करादियुता नाड़ी प्रोक्ता पञ्चदशाह्वया ॥ ८२ ॥ †
स्थलादिपद्मिनी शीत्या तिक्ता शीता च वान्तिनुत् ।
रक्तपित्तहरा मेह-भूतातीसारनाशनी ॥ ८३ ॥

( मं गौ स्थलपद्मिनी । तें स्थलपद्मनेपुष्पम् । हिं बेटतामर ।
कं कलुदावरे । )

अथ जम्बूनाम ।—

जम्बूर्जाम्बवती वृत्ता वृत्तपुष्पा च जाम्बवी ।
मदघ्नी नागदमनी दुर्धर्षा दुःसहा नव ॥ ८४ ॥
ज्ञेया जम्बूस्त्रिदोषघ्नी तीक्ष्णोष्णा कटुतिक्तका ।
उदराध्मानदोषघ्नी कोष्ठशोधनकारिणी ॥ ८५ ॥

( नागदनेति गौड़े प्रसिद्धा । हिं नागचुनी, नागदवन । तें ईश्वरि-
चेट्टु, दरणम । ता माचिपत्री । वं दवणा ।
"तितापात" इति नेपाले प्रसिद्धा ।)

अथ नागदन्तीनाम ।—

नागदन्ती श्वेतघण्टा मधुपुष्पा विशोधनी ।
नागस्फोता विशालाक्षी नागक्षुता विचक्षणा ॥ ८६ ॥

---

* पुष्कराद्या पर्णिकेति पुष्करपर्णिका ।
† पुष्करादिना युता नाड़ीति पुष्करनाड़ी ।

सर्पपुष्पी शुक्लपुष्पी स्वादुका शीतदन्तिका।
सितपुष्पी सर्पदन्ती नागिनी बाणभूमिता ॥ ८८ ॥ *
नागदन्ती कटुस्तिक्ता रूक्षा वातकफापहा।
मेधाकृद्विषदोषघ्नी पाचनी शुभदायिनी।
गुल्मशूलोदरव्याधि-कण्ठदोषनिकृन्तनी ॥ ८८ ॥
(मं कं नागदन्ती।)

अथ विष्णुक्रान्तानाम।—

विष्णुक्रान्ता हरिक्रान्ता नीलपुष्पाऽपराजिता।
नीलक्रान्ता सतीना च विक्रान्ता छर्दिका च सा।
विष्णुक्रान्ता कटुस्तिक्ता कफवातामयापहा ॥ ८९ ॥
(मं विष्णुकान्ता। कं विष्णुकान्ते। गो नील अपराजिता।)

अथ कुणञ्जरनाम।—

कुणञ्जरः कुणञ्जी च कुणञ्जोऽरण्यवास्तुकः।
कुणञ्जो मधुरो रुच्यो दीपनः पाचनो हितः ॥ ९० ॥
(मं कुणजिरु। कं गोरजे। गो वनवेतुया।)

अथ भूम्यामलीनाम।—

भूम्यामली तमाली च ताली चैव तमालिका।
उच्चटा दृढपादी च त्रितुन्ना च वितुन्निका ॥ ९१ ॥
भूधात्री चारुटा श्रेष्या विषघ्नी बहुपत्रिका।
बहुवीर्य्याऽहिभयदा विश्वपर्णी हिमालया।
जटा वीरा च नाम्ना सा भवेदेकोनविंशतिः ॥ ९२ ॥

* बाणभूमितेति।—बाणाः पञ्चसंख्या, भूरेकसंख्या; "अङ्कस्य वामा गतिः" इति न्यायात् पञ्चदशसंख्येत्यर्थः।

भूधात्री तु कषायाम्ला पित्तमेहविनाशनी ।
शिशिरा मूत्ररोगार्त्ति-शमनी दाहनाशनी ॥ ८३ ॥
( मं भूयाम्वली । कं आरनेल्लि । हिं भद्र-आम्बड़ा ।
तें लेलवुसिविकचेट्टु । गो भूँइ आमला । )

अथ गोरक्षीनाम ।—

गोरक्षी सर्पदण्डी च दीर्घदण्डी सुदण्डिका ।
चित्रला गन्धबहुला गोपाली पञ्चपर्णिका ॥ ८४ ॥
गोरक्षी मधुरा तिक्ता शिशिरा दाहपित्तनुत् ।
विस्फोटकातीसार-ज्वरदोषविनाशनी ॥ ८५ ॥
( गोरक्षीति मालवे प्रसिद्धा । )

अथ गोलोमिकानाम ।—

गोलोमिका तु गोधूमी गोजा क्रोष्टुकपुच्छिका ।
गोसम्भवा प्रस्तरिणी विज्ञेयेति षडाह्वया ॥ ८६ ॥
गोलोमिका कटुस्तिक्ता त्रिदोषशमनी हिमा ।
मूलरोगास्रदोषघ्नी ग्राहिणी दीपनी च सा ॥ ८७ ॥
( हिं पाथरी । कं हट्गिरे । गौ गन्धल । )

अथ दुग्धफेनीनाम ।—

दुग्धफेनी पयःफेनी फेनदुग्धा पयस्विनी ।
लूतारिर्व्रणकेतुश्च गोजापर्णी च सप्तधा ॥ ८८ ॥
दुग्धफेनी कटुस्तिक्ता शिशिरा विषनाशिनी ।
व्रणापसारिणी रुच्या युक्त्या चैव रसायनी ॥ ८९ ॥
( मं दुधफेनी । कं हालुगोलवि । )

अथ क्षुद्राम्लिकानाम।—

क्षुद्राम्लिका तु चाङ्गेरी चक्राह्वा चुक्रिका च सा।
लोणाम्ला च चतुष्पर्णी लोणा लोड़ाऽम्लपत्रिका ॥ १०० ॥
अम्बष्ठाऽम्लवती चैव अम्ला दन्तशठा मता।
अश्वाङ्गा चाम्लपत्री च ज्ञेया पञ्चदशाह्वया ॥ १०१ ॥
क्षुद्राम्ली च रसे साम्ला सोष्णा सा वह्निवर्द्धनी।
रुचिकृद्ग्रहणीदोष-दुर्नामघ्नी कफापहा ॥ १०२ ॥

( मं आम्बती। कं पुलुम्बयिसे। गौ आमरुल।)

अथ लज्जाह्वीनाम।—

रक्तपादी शमीपत्रा स्पृक्का खदिरपत्रिका।
सङ्कोचनी समङ्गा च नमस्कारी प्रसारिणी ॥ १०३ ॥
लज्जालुः सप्तपर्णी स्यात् खदिरी गण्डमालिका।
लज्जा च लज्जिका चैव स्पर्शलज्जाऽस्त्ररोधनी ॥ १०४ ॥
रक्तमूला ताम्रमूला स्वगुप्ताऽञ्जलिकारिका।
नाम्नां विंशतिरित्युक्ता लज्जायास्तु भिषग्वरैः ॥ १०५ ॥
रक्तपादी कटुः शीता पित्तातीसारनाशनी।
शोफदाहश्रमश्वास-व्रणकुष्ठकफास्त्रनुत् ॥ १०६ ॥
लज्जालुर्वैपरीत्यान्या अल्पक्षुपप्रहद्दला।
वैपरीत्या तु लज्जालुर्ध्वभिधाने प्रयोजयेत् ॥ १०७ ॥
लज्जालुर्वैपरीत्याह्वा कटुरुष्णा कफामनुत्।
रसो नियामकोऽत्यन्त-नानाविज्ञानकारकः ॥ १०८ ॥

( मं उपरती लज्जालुः। कं छिन्दकेसुट्टिद्रेसुद्धवड्ड। तां लाजिरी। तें सुदिदारसुरुटव।)

अथ हंसपादीनाम ।—

रक्तपाद्यपरा प्रोक्ता त्रिपदा हंसपादिका ।
घृतमण्डलिका ज्ञेया विश्वग्रन्थिस्त्रिपादिका ॥ १०८ ॥
त्रिपादी कीटमारी च हेमपादी मधुस्रवा ।
कर्णाटी ताम्रपत्री च विक्रान्ता सुवहा तथा ॥ ११० ॥
प्रह्लादनी पदाङ्गी च शीताङ्गी सुतपादुका ।
सञ्चारिणी च पदिका प्रह्लादी कीलपादिका ॥ १११ ॥
गोधापदी च हंसाङ्घ्रिर्धार्त्तराष्ट्रपदी तथा ।
हंसपादी च विज्ञेया नाम्ना चैषा शराच्छिधा ॥ ११२ ॥ *
हंसपादी कटूष्णा स्यात् विषभूतविनाशिनी ।
भ्रान्त्यपस्मारदोषघ्नी विज्ञेया च रसायनी ॥ ११३ ॥

( मं हंसपादी । क' नविलडि । गौ गोयालियालता । )

अथ काथरानाम ।—

काथरा हयपर्य्यायैः काथरान्तैः प्रकीर्त्तिता ।
अश्वकाथरिका तिक्ता वातघ्नी दीपनी परा ॥ ११४ ॥

( मं घोड़े काथरा कुदिरेगातकविलियगयाजिले । )

अथ श्वेतपुनर्नवानाम ।—

पुनर्नवा विशाखश्च कठिल्लः शशिवाटिका ।
पृथ्वी च सितवर्षाभूर्दीर्घपत्रः कठिल्लकः ॥ ११५ ॥
श्वेता पुनर्नवा सोष्णा तिक्ता कफविषापहा ।

---

* शराच्छिधेति ।—शरो बाणाः पञ्च, अच्छि नेत्रं द्वि, तेन पञ्च-विंशतिसंख्येत्यर्थः ।

कासहृद्रोगशूलास्र-पाण्डुशोफानिलार्त्तिनुत् ॥ ११६ ॥
( मं पाण्डराघेरण्टूलि। कं विलियदुबेल्लडकिलु।
गौ श्वेतपुण्या, गादापुण्या। )

अथ रक्तपुनर्नवानाम।—

पुनर्नवाऽन्या रक्ताख्या क्रूरा मण्डलपत्रिका।
रक्तकाण्डा वर्षकेतुर्लोहिता रक्तपत्रिका ॥ ११७ ॥
वैशाखी रक्तवर्षाभूः शोफघ्नी रक्तपुष्पिका।
विकस्वरा विषघ्नी च प्रावृषेण्या च सारिणी ॥ ११८ ॥
वर्षाभवः शोणपत्रः शोणः सम्मीलितद्रुमः।
पुनर्नवो नवो नव्यः स्याद्द्वाविंशतिसंज्ञया ॥ ११९ ॥ *
रक्ता पुनर्नवा तिक्ता सारिणी शोफनाशिनी।
रक्तप्रदरदोषघ्नी पाण्डुपित्तप्रमर्दिनी ॥ १२० ॥
( मं रक्तघेरण्टलि। कं केम्पिनबेल्लडकिलु, करियगणजिले।
हिं शान्त। तें अतिकममेदि। तां सुकरत्तेकिरै। वं पुनर्नवा। )

अथ नीलपुनर्नवानाम।—

नीला पुनर्नवा नीला श्यामा नीलपुनर्नवा।
कृष्णाख्या नीलवर्षाभूर्नीलिनी स्वाभिधान्विता ॥ १२१ ॥
नीला पुनर्नवा तिक्ता कटूष्णा च रसायनी।
हृद्रोगपाण्डुश्वयथु-श्वासवातकफापहा ॥ १२२ ॥
( मं कालीघेण्टुलि। कं करियबेल्लडकिलु, करियगणजिले।
तां चोगणगिलु। )

---

* पुनर्नवं विहाय रक्तादिकं नव्यान्तं सर्वं द्वाविंशतिसंख्यकं बोध्यम्।

अथ वसुकनाम ।—

वसुकोऽथ वसुः शैवो वसोऽथ शिवमल्लिका ।
पाशुपतः शिवमतः सुरेष्टः शिवशेखरः ।
सितो रक्तो द्विधा प्रोक्तो ज्ञेयः स च नवाभिधः ॥ १२३ ॥
वसुकौ कटुतिक्तोष्णौ पाके शीतौ च दीपनौ ।
अजीर्णवातगुल्मघ्नौ श्वेतश्चैव रसायनः ॥ १२४ ॥
( मं दोनि वसो, अगस्ता । तें अविसि । तां अगेति । कं यरलु-
गयाजिले । गौ वकफुल । हिं वासना । )

अथ सर्पिणीनाम ।—

सर्पिणी भुजगी भोगी कुण्डली पन्नगी फणी ।
षड़भिधा सर्पिणी स्याद्विषघ्नी कुचवर्द्धनी ॥ १२५ ॥
( सर्पिणीति सर्वत्र प्रसिद्धा । क्षुपे सर्पाकारवत् । गौ सर्पकङ्काली । )

अथ अलिपत्रिकानाम ।—

वृश्चिका नखपर्णी च पिच्छिलाऽप्यलिपत्रिका ।
वृश्चिका पिच्छलाऽम्ला स्यात्[illegible]तु ॥ १२६ ॥
( मं विञ्चुवा । कं डङ्कुले । तां मासमाचोलगले । )

अथ मत्स्याक्षीनाम ।—

ब्राह्मी वयस्था मत्स्याक्षी मीनाक्षी सोमवल्लरी ।
मत्स्याक्षी शिशिरा रुच्या व्रणदोषक्षयापहा ॥ १२७ ॥
( गौ हिञ्चेशाक । हिं मछेछी, मछरिया । मं जलब्राह्मी । )

अथ गुण्डालानाम ।—

गुण्डाला तु जलीभूता गुच्छबुध्ना जलाश्रया ।

गुण्डाला कटुतिक्तोष्णा शोफव्रणविनाशनी ॥ १२८ ॥

( मं गुण्डाला, गोण्डाल । कं कडविनभेद । )

अथ भूपाटलीनाम ।—

भूपाटली च कुम्भी च भूताली रक्तपुष्पिका ।
भूपाटली कटूष्णा च पारदे सुप्रयोजिका ॥ १२९ ॥

( मं भूयिं पाडलि । कं नेलवादरि । गो टोकापाना । )

अथ पाण्डुरफली ।—

पाटली पाण्डुरफली धूसरा वृत्तबीजका ।
भूरिफली तथा पाण्डु-फली स्यात् षड्विधाभिधा ॥ १३० ॥
शिशिरा पाण्डुरफली शील्या कच्छार्त्तिदोषहा ।
बल्या पित्तहरा वृष्या मूत्राघातनिवारणी ॥ १३१ ॥

( पोटरफलमिति सर्वत्र प्रसिद्धम् । मं मयासगडे ।
कं पाण्डुरफालरे । )

अथ श्वेतानाम ।—

श्वेता तु क्षुरिकापत्री पर्वमूलाऽप्यविप्रिया ।
श्वेताऽतिमधुरा शीता स्तन्यदा रुचिकृत्परा ॥ १३२ ॥

( मं केना । कं कन्ने । )

अथ ब्रह्मदण्डीनाम ।—

ब्रह्मदण्डाजलादण्डी कण्टपत्रफला च सा ।
ब्रह्मदण्डी कटूष्णा स्यात् कफशोफानिलापहा ॥ १३३ ॥

( ब्रह्मदण्डीति सर्वत्र प्रसिद्धा । मं ब्रह्मदण्डे ।
गौ छागलदाँड़ि, वामनदाँड़ि । )

अथ द्रवन्तीनाम ।—

द्रवन्ती शाम्बरी चित्रा न्यग्रोधी शतमूलिका ।
प्रत्यक्श्रेणी वृषा चण्डा पत्रश्रेण्याखुकर्णिका ॥ १३४ ॥
मूषकाह्लादिका कर्णी प्रतिपर्णीशिफा च सा ।
सहस्रमूली विक्रान्ता ज्ञेया स्याच्चतुरेकधा ॥ १३५ ॥
द्रवन्ती मधुरा शीता रसबन्धकरी परा ।
ज्वरघ्नी क्रिमिहा शूल-शमनी च रसायनी ॥ १३६ ॥

( मं भोम्पनो । कं वल्लिहर्दे । तें एलुकचेविचेट्टु । गौ मुषाकानी-
लता, वुड़िगुयापान, मुषाकाणी । )

अथ द्रोणपुष्पीनाम ।—

द्रोणपुष्पी दीर्घपत्रा कुम्भयोनिः कुतुम्बिका ।
चित्राक्षुपः कुतुम्बा च सुपुष्पा चित्रपत्रिका ॥ १३७ ॥
द्रोणपुष्पी कटुः सोष्णा रुच्या वातकफापहा ।
अग्निमान्द्यहरा चैव पथ्या वातापहारिणी ॥ १३८ ॥

( मं कुम्बा । कं तुम्बे । हिं गुम्मा, गूमा । तें एणुगतुम्मि ।
गौ हलकसा, दण्डकलस, घलघसेति केचित् । )

अथ महाद्रोणानाम ।—

अन्या चैव महाद्रोणा कुरुम्बा देवपूर्वका । *
दिव्यपुष्पी महाद्रोणी देवीकाण्डा षडाह्वया ॥ १३९ ॥
देवद्रोणी कटुस्तिक्ता मेध्या वाताग्निभूतनुत् ।

---

* देवपूर्वका इत्यत्र द्रोणीति शेषः, अन्यथा वक्ष्यमाण-देवद्रोणीति प्रयोगस्य अस्वरसात् षट्संख्यापूरणाभावाच्च इति ।

कफमान्द्यापहा चैव युक्त्या पारदशोधने ॥ १४० ॥

( मं देवकुम्बा। क' देवतुम्बे। गो वड़्घलघसिया। )

अथ झण्डूनाम।—

झण्डूः स्यात् स्थूलपुष्पा तु झण्डूको झिण्डुकस्तथा।

झण्डूः कटुकषायः स्यात् ज्वरभूतग्रहापहा ॥ १४१ ॥

( म' झेण्डू। क गोवगड्डे। )

अथ गोरक्षदुग्धीनाम।—

गोरक्षदुग्धी गोरक्षी ताम्रदुग्धी रसायनी।

बहुपत्रा मृताजीवी मृतसञ्जीवनी मुनिः ॥ १४२ ॥ *

गोरक्षदुग्धी मधुरा वृष्या सा ग्राहिणी हिमा।

सर्ववश्यकरी चैव रसे सिद्धिगुणप्रदा ॥ १४३ ॥

( म' नागार्जुनदूधी। क' मरीजेर्वाणिगे। )

इत्थं वितत्य विशदीक्रियमाणनाना-

क्षुद्रक्षुपाह्वयगुणप्रगुणापवर्गम्।

वर्गं विधाय मुखमण्डनमेनमुच्चै-

रुच्चाटनाय च रुजां प्रभुरस्तु वैद्यः ॥ १४४ ॥ †

* मुनिरिति सप्तसंख्येत्यर्थः।

† इत्थमिति।—इत्थम् अनेन प्रकारेण वितत्य विस्तार्य्य विशदीक्रियमाणाः स्फुटीक्रियमाणा नानाविधा ये क्षुद्राः क्षुपाः, तेषामाह्वयाः नामानि तथा गुणाश्च तेषां प्रगुणः अनुकूलः अपवर्गः क्रियावसानसाफल्यं यत्र तम्। "अपवर्गस्त्यागमोक्षयोः। क्रियावसानसाफल्येऽपि" इति हेमचन्द्रः। यद्वा,—तादृशानां क्षुपाणां गुणाः सामान्यगुणाः, प्रगुणा विशेषगुणाः, तेषाम् अपवर्गः विक्षेपः, प्रयोग इति यावत्, यत्र तादृशमित्यर्थः, एनं वर्गं मुखमण्डनं मुखाभरणं, कण्ठस्थमिति यावत्;

क्षुधं रान्ति जनस्योच्चैस्तस्मात् क्षुद्राः प्रकीर्त्तिताः ।
तेषां क्षुपाणां वर्गोऽयमादाने धातुरुच्यते ॥ १४५ ॥ *

धत्ते नित्यसमाधिसंस्तववशात् प्रीत्यार्चितेशार्पितां
स्वात्मीयामृतहस्ततां किल सदा यः सर्वसञ्जीवनीम् ।
वर्गस्तस्य कृतौ नृसिंहकृतिनो यः पर्पटादिर्महा-
नेष प्राप्नुवति नामकाण्डपरिषच्चूड़ामणौ पञ्चमः ॥ १४६ ॥ †

इति श्रीनरहरिपण्डितविरचिते राजनिघण्टौ
पर्पटादि क्षुद्रक्षुपवर्गः पञ्चमः ।

---

विधाय कृत्वा स्थित इति पदमूह्यम् ; अन्यथा एककर्त्तृकत्वाभावात् ल्यप्प्रत्ययो न स्यादिति बोध्यम् । वैद्यः भिषक् उच्चैः अधिकं यथा तथा रुजां रोगाणाम् उच्चाटनाय प्रशमनाय च प्रभुः समर्थोऽस्तु भवतु ; क्षुद्रक्षुपवर्गं सुखस्थं कृत्वा तदनुसारेण क्षुपप्रयोगं विधाय च सर्वरोगं नाशयत्विति भावः ॥ १४४ ॥

* क्षुद्रशब्दं व्युत्पादयति क्षुधं रान्तीत्यादि ।—यस्मात् जनस्य लोकसामान्यस्य उच्चैः अधिकं यथा तथा क्षुधं क्षुधां रान्ति आददते, जनयन्तीति यावत् ; सुपश्चेति आदन्तस्य राधातोः कः । तस्मात् क्षुधाजननात् हेतोः क्षुद्राः प्रकीर्त्तिता उक्ताः । तेषां क्षुद्राणां क्षुपाणाम् अयमेव वर्ग उक्त इति शेषः । रा आदाने, आदानार्थे अयं राधातुरुच्यते कथ्यते ॥ १४५ ॥

† वर्गं समापयति, धत्ते इत्यादि ।—यः किल नृसिंहकृतीत्यर्थः ; नित्यसमाधिसंस्तववशात् नित्यश्चिरन्तनः, अविच्छिन्न इति यावत्, यः समाधिश्चित्तैकाग्रम् । "समाधिः स्यात् समर्थने । चित्तैकाग्रानियमयोः मौने" इति हैमः । तस्य संस्तववशात् परिचयवशात् प्रीत्या प्रेम्णा मुदा वा "प्रीतिर्योगान्तरे प्रेम्णि स्मरपत्नीमुदोः स्त्रियाम्" इति

## अथ पिप्पल्यादिवर्गः ।



चतुर्द्धा पिप्पली प्रोक्ता तन्मूलं नागरं तथा ।
आर्द्रकं मरिचद्वन्द्वं धान्यकञ्च यवानिका ॥ १ ॥
चव्यं च चित्रकद्वन्द्वं विडङ्गं च वचाद्वयम् ।
कुलञ्जो जीरकाः पञ्च मेथिका हिङ्गुपत्रिका ॥ २ ॥
हिङ्गुद्वयं चाग्निजारो रास्ने एलाद्वयं शिवम् ।
सौवर्चलं च काचाह्वं विड्ञ्च गड़नामकम् ॥ ३ ॥
सामुद्रं द्रौणिकं चान्यदौषरं रोमकं तथा ।
नवधा लवणं प्रोक्तमजमोदा च रेणुका ॥ ४ ॥

---

भेदिनी । अर्चितेशार्पिताम् अर्च्चितः पूजितः य ईशः महादेवः तेन अर्पितां प्रदत्तां सर्वसञ्जीवनीं सर्वेषां जीवनदायिनीं सर्वविधरोग-निवारणे अव्यर्थशक्तिकामित्यर्थः ; स्वात्मीयामृतहस्ततां सु शोभनो आत्मीयो निजसम्बन्धिनो अमृतहस्तो तस्य भावस्तत्तां धत्ते धारयति ; नित्यशिवध्यानात् प्रीतेन शिवेन प्रदत्तां सञ्जीवनीं पीयूषपाणितां प्राप्य यः किल पीड़ितान् सञ्जीवयति, तस्य नृसिंहकृतिनः नृसिंहपण्डितस्य नामकाराडपरिषच्चूड़ामणौ नाम्नां काण्डानाञ्च या परिषत् सभा, समूह इति यावत् ; तस्याश्चूड़ामणौ शिरोरत्नरूपे कृतौ प्रबन्धे य एष महान् विशालः पर्पटादिः पञ्चमः वर्गः स प्राञ्चति प्रयाति ; अञ्चु गतिपूजनयोरिति धातुः, समाप्तो भवतीत्यर्थः ॥ १४६ ॥

बोलं कर्चूरकः पाठा वृक्षाम्लश्चाम्लवेतसम् ।
कटुकाऽतिविषा मुस्ता-द्वयं यष्टीमधुद्वयम् ॥ ५ ॥
भार्गी पुष्करमूलञ्च शृङ्ग्यथो दन्तिकाद्वयम् ।
जैपालश्च त्रिवृद्द्वेधा त्वक् पत्रं नागकेशरम् ॥ ६ ॥
तवक्षीरञ्च तालीस-पत्राख्यं वंशरोचना ।
मञ्जिष्ठा च चतुर्द्धा स्याद्धरिद्रे च द्विधा मते ॥ ७ ॥
लाक्षा चालक्तको लोध्रो धातक्यब्धिफलं तथा ।
निर्विषाऽथ विषद्वन्द्वं द्विधा चाम्लहरिद्रका ॥ ८ ॥
अब्धिफेनमफेनश्च टङ्कणो साकुरुण्डकम् ।
हिमावली हस्तिमदः स्वर्जिको लोणकं तथा ॥ ९ ॥
वज्रको यवजश्चाथ सर्वक्षारोऽथ मायिका ।
औषधान्यभिधीयन्ते षड्ङ्गमितसंख्यया ॥ १० ॥

अथ पिप्पलीनाम ।—

पिप्पली कृकरा शौण्डी चपला मागधी कणा ।
कटुवीजा च कोरङ्गी वैदेही तिक्ततण्डुला ॥ ११ ॥
श्यामा दन्तफला कृष्णा कोला च मगधोद्भवा ।
उषणा चोपकुल्या च स्मृत्याह्वा तीक्ष्णतण्डुला ॥ १२ ॥
पिप्पली ज्वरहा वृष्या स्निग्धोष्णा कटुतिक्तका ।
दीपनी मारुतश्वास-कासश्लेष्मक्षयापहा ॥ १३ ॥
( हिं पीपर । मं पिम्पली । कं हिप्पली । तें पिप्पलिचेट्टु ।
वं वङ्गालिपिम्परि । तां पिपिलि । गौ पिपुलगाछ । )

अथ गजोषणानाम ।—

गजोषणा त्र्यफला चव्यजा गजपिप्पली ।

श्रेयसी छिद्रवैदेही दीर्घग्रन्थिश्च तैजसी।
वर्त्तुली स्थूलवैदेही ज्ञेया चेति दशाभिधा ॥ १४ ॥
गजोषणा कटूष्णा च रुच्या मलविशोषणी।
बलासवातहन्त्री च स्तन्यवर्णविवर्द्धिनी ॥ १५ ॥
( मं गजपिप्पली। कं गजहिप्पली। )

अथ सैंहलीनाम।—

सैंहली सर्पदण्डा च सर्पाङ्गी ब्रह्मभूमिजा।
पार्वती शैलजा ताम्रा लम्बबीजा तथोत्कटा ॥ १६ ॥
अद्रिजा सिंहलस्था च लम्बदन्ता च जीवला।
जीवाली जीवनेत्रा च कुरवी षोड़शाह्वया ॥ १७ ॥
सैंहली कटुरुष्णा च जन्तुघ्नी दीपनी परा।
कफश्वाससमीरार्त्ति-शमनी कोष्ठशोधनी ॥ १८ ॥
( मं सिङ्गलीपिप्पली। कं सैंहलपिप्पली। )

अथ वनादिपिप्पलीनाम।—

वनादिपिप्पल्यभिधामयुक्तं सूक्ष्मादिपिप्पल्यभिधानमेतत्।
क्षुद्रादिपिप्पल्यभिधानयोग्यं वनाभिधापूर्वकणाभिधानम् ॥१९॥
वनपिप्पलिका चोष्णा तीक्ष्णा रुच्या च दीपनी।
आमा भवेद्गुणाढ्या तु शुष्का स्वल्पगुणा स्मृता ॥ २० ॥
( मं रानपिम्पलि। कं काद्विपिप्पलि। )

अथ ग्रन्थिकनाम।—

ग्रन्थिकं पिप्पलीमूलं मूलं तु चविकाशिरः।
कोलमूलं कटुग्रन्थि कटुमूलं कटूषणम् ॥ २१ ॥

सर्वग्रन्थि च पत्राढ्यं विरूपं शोणसम्भवम् ।
सुग्रन्थि ग्रन्थिलं चैव पर्य्यायाः स्युश्चतुर्दश ॥ २२ ॥
कटूष्णं पिप्पलीमूलं श्लेष्मक्रिमिविनाशनम् ।
दीपनं वातरोगघ्नं रोचनं पित्तकोपनम् ॥ २३ ॥

( मं पिम्पलीमूल। कं हिप्पलियवेरु। तें पिप्पलीदुम्प। गौ पिपुलमूल। )

अथ शुण्ठीनाम।—

शुण्ठी महौषधं विश्वं नागरं विश्वभेषजम् ।
विश्वौषधं कटुग्रन्थि कटुभद्रं कटूषणम् ॥ २४ ॥ *
सौपर्णं शृङ्गवेरञ्च कफारिश्चार्द्रकं स्मृतम् ।
शोषणं नागराह्वञ्च विज्ञेयं षोड़शाह्वयम् ॥ २५ ॥
शुण्ठी कटूष्णा स्निग्धा च कफशोफानिलापहा ।
शूलबन्धोदराध्मान-श्वासश्लीपदहारिणी ॥ २६ ॥

( मं सूण्ठि। कं शुण्ठि। गौ शुंठ। शुण्ठीति सर्वत्र ख्याता। )

अथार्द्रकनाम।—

आर्द्रकं गुल्ममूलञ्च मूलजं कन्दलं वरम् ।
शृङ्गवेरं महीजञ्च सैकतेष्टमनूपजम् ॥ २७ ॥
अपाकशाकं चार्द्राख्यं राहुच्छत्रं सुशाककम् ।
शार्ङ्गं स्यादार्द्रशाकञ्च सच्छाकमृतुभूह्वयम् ॥ २८ ॥ †
कटूष्णमार्द्रकं हृद्यं विपाके शीतलं लघु ।

---

* कटूषणं—कटु तथा ऊषणमिति द्वयम्, अन्यथा षोड़शसंख्यापूरणाभावः ।

† ऋतुभूह्वयम् षोड़शसंख्यकमित्यर्थः ।

दीपनं रुचिदं शोफ-कफकण्ठामयापहम् ॥ २८ ॥

( मं आलै । तें अल्ल । कं अद्रका । हिं अदरख । गौ आदा । )

अथ मरिचनाम ।—

मरिचं पलितं श्यामं कोलं वल्लीजमूषणम् ।
यवनेष्टं वृत्तफलं शाकाङ्गं धर्मपत्तनम् ॥ ३० ॥
कटुकञ्च शिरोवृत्तं वीरं कफविरोधि च ।
रूक्षं सर्वहितं कृष्णं सप्तभूख्यं निरूपितम् ॥ ३१ ॥
मरिचं कटु तिक्तोष्णं लघु श्लेष्मविनाशनम् ।
समीरकृमिहृद्रोग-हरञ्च रुचिकारकम् ॥ ३२ ॥

( मं मरिच । कं मेणसु । हिं मिरी, कालामिरिच । तें मिरियालु ।
तां मिलिगु । गौ गोलमरिच । )

अथ श्वेतमरिचनाम ।—

सितमरिचं तु सिताख्यं सितवल्लीजं च बालकं बहुलम् ।
धवलं चन्द्रकमेतन्मुनिनाम गुणाधिकं च वश्यकरम् ॥३३॥ *
कटूष्णं श्वेतमरिचं विषघ्नं भूतनाशनम् ।
अवृष्यं दृष्टिरोगघ्नं युक्त्या चैव रसायनम् ॥ ३४ ॥

( मं पाण्ढरे मिरिये । कं बिलियमेणसु । तें तेल्लमिरियालु ।
गौ सजिनार बीज । )

अथ धान्यकनाम ।—

धान्यकं धान्यजं धान्यं धानेयं धनिकं तथा ।
कुस्तुम्बुरुश्चावलिका छत्रधान्यं वितुन्नकम् ॥ ३५ ॥

---

* मुनिनाम सप्तसंख्यकमित्यर्थः ।

सुगन्धिः शाकयोग्यश्च सूक्ष्मपत्रो जनप्रियः ।
धान्यबीजो बीजधान्यं बेधकं षोड़शाह्वयम् ॥ ३६ ॥
धान्यकं मधुरं शीतं कषायं पित्तनाशनम् ।
ज्वरकासतृषाच्छर्दि-कफहारि च दीपनम् ॥ ३७ ॥
( मं, कं, कोथुम्बुरि । हिं धनिया । गौ धने । )

अथ यवानीनाम ।—

यवानी दीप्यको दीप्यो यवसाह्वो यवाग्रजः ।
दीपनी चोग्रगन्धा च वातारिर्भूकदम्बकः ॥ ३८ ॥
यवजो दीपनीयश्च शूलहन्त्री यवानिका ।
उग्रा च तीव्रगन्धा च ज्ञेया पञ्चदशाह्वया ॥ ३९ ॥
यवानी कटुतिक्तोष्णा वातार्शःश्लेष्मनाशनी ।
शूलाध्मानक्रिमिच्छर्दि-मर्दनी दीपनी परा ॥ ४० ॥
( मं उम्बा । कं उम्रु । तें ओमसो । हिं, बम्, अजवाइनं ।
तां अमन । गौ योयान । )

अथ चव्यकनाम ।—

चव्यकं चविका चव्यं वशिरो गन्धनाकुली ।
वल्ली च कोलवल्ली च कोलं कुटलमस्तकम् ।
तीक्ष्णा करिणिका वल्ली ऊकरो नेत्रभूह्वया ॥ ४१ ॥ *
चव्यं स्यादुष्णकटुकं लघु रोचनदीपनम् ।
जन्तूद्रेकापहं कास-श्वासशूलार्त्तिकृन्तनम् ॥ ४२ ॥
( मं, कं, चव्य । तें सेवासु । गौ चइगाछ । )

* नेत्रभूह्वयेति त्रयोदशसंख्येत्यर्थः ।

अथ चित्रकनाम ।—

चित्रकोऽग्निश्च शार्दूलश्चित्रपाली कटुः शिखी ।
कृशानुर्दहनो व्यालो ज्योतिष्कः पालकस्तथा ॥ ४३ ॥
अनलो दारुणो वह्निः पावकः शबलस्तथा ।
पाठी द्वीपी च चित्राङ्गो ज्ञेयः शूरश्च विंशतिः ॥ ४४ ॥
चित्रकोऽग्निसमः पाके कटुः शोफकफापहः ।
[illegible]-क्रिमिकण्डूतिनाशनः ॥ ४५ ॥

( मं चित्रकु । तें चित्रमूलमु । हिं चिता । उत् धुवचिता ।
गौ चितेगाछ । )

अथ कालनाम ।—

कालो व्यालः कालमूलोऽतिदीप्यो
मार्जारोऽग्निर्दाहकः पावकश्च ।
चित्राङ्गोऽयं रक्तचित्रो महाङ्गः
स्याद्रुद्राह्वश्चित्रकोऽन्यो गुणाढ्यः ॥ ४६ ॥
स्थूलकायकरो रुच्यः कुष्ठघ्नो रक्तचित्रकः ।
रसे नियामको लोहे वेधकश्च रसायनः ॥ ४७ ॥

( मं रक्तचित्रकु । कं केम्पिनचित्रमूल । तें एर्रचित्र । तां शिवप्पुचित्रिर । गौ रक्तचिता । उत् रकतचिता । )

अथ विडङ्गानाम ।—

विडङ्गा क्रिमिहा चैत्रा-तण्डुला तण्डुलीयका ।
वातारिस्तण्डुला प्रोक्ता जन्तुघ्नी मृगगामिनी ॥ ४८ ॥
कैरली गह्वराऽमोघा कपाली चित्रतण्डुला ।

वरा सुचित्रबीजा च जन्तुहन्त्री च षोड़श ॥ ४९ ॥
विड़ङ्गा कटुरुष्णा च लघुर्वातकफार्त्तिनुत् ।
अग्निमान्द्यारुचिभ्रान्ति-क्रिमिदोषविनाशनी ॥ ५० ॥
( तें वायुविड़ङ्गपुवेट्टु । हिं वाविराङ्, वायविडं । वं वर्वट्टि, अम्बट्, काकंखनी । तां वायविलं । गौ विड़ङ्ग । )

अथ वचानाम ।—

वचोग्रगन्धा गोलोमी जटिलोग्रा च लोमशा ।
रक्षोघ्नी विजया भद्रा मङ्गल्येति दशाह्वया ॥ ५१ ॥
वचा तीक्ष्णा कटूष्णा च कफामग्रन्थिशोफनुत् ।
वातज्वरातिसारघ्नी वान्तिकृन्मादभूतनुत् ॥ ५२ ॥
( हिं वच, घोरवच । तें वड़ज, नक्षवस । मं वेखण्डे । तां वशम्बु । गौ वच । कं वचे । )

अथ मेध्यानाम ।—

मेध्या श्वेतवचा त्वन्या षड्ग्रन्था दीर्घपत्रिका ।
तीक्ष्णगन्धा हैमवती मङ्गल्या विजया च सा ॥ ५३ ॥
श्वेतवचाऽतिगुणाढ्या मतिमेधायुःसमृद्धिदा कफनुत् ।
वृष्या च वातभूतक्रिमिदोषघ्नी च दीपनी च वचा ॥ ५४ ॥
( मं पाण्डरे वेखण्डा । कं विलियवजे । गौ शादा वच् । )

अथ कुलञ्जनाम ।—

कुलञ्जो गन्धमूलश्च तीक्ष्णमूलः कुलञ्जनः ।
कुलञ्जः कटुतिक्तोष्णो दीपनो मुखदोषनुत् ॥ ५५ ॥
( गौ कुड़विशेष, महाभरी वच । )

अथ जीरकनाम ।—

जीरको जरणो जीरो जीर्णो दीप्यश्च दीपकः ।
अजाजिको वह्निशङ्खो मागधश्च नवाह्वयः ॥ ५६ ॥
जीरकः कटुरुष्णश्च वातघ्नद्दीपनः परः ।
गुल्माध्मानातिसारघ्नो ग्रहणीक्रिमिहृत्परः ॥ ५७ ॥
( हिं जीरा । तें जीलकर्र । गौ वड़ ग्रादा जीरे । )

अथ गौरजीरनाम ।—

गौरादिजीरकस्त्वन्योऽजाजी स्यात् श्वेतजीरकः ।
कणाह्वा कणजीर्णा च कणा दीप्यः सितादिकः ।
ज्ञेया दीर्घकणा चैव सिताजाजी दशाह्वया ॥ ५८ ॥
गौराजाजी हिमा रुच्या कटुर्मधुरदीपनी ।
क्रिमिघ्नी विषहन्त्री च चक्षुष्याध्माननाशिनी ॥ ५९ ॥
( मं पाण्ढरे जीरे । कं विलियजीरिगे । गौ ग्रादा जीरे । )

अथ कृष्णजीरनाम ।—

कृष्णा तु जरणा काली बहुगन्धा च भेदिनी ।
कटुभेदिनिका रुच्या नीला नीलकणा स्मृता ॥ ६० ॥
काश्मीरजीरका वर्षा काली स्याद् दन्तशोधनी ।
कालमेषी सुगन्धा च विज्ञेया बाणभूह्वया ॥ ६१ ॥ *
जरणा कटुरुष्णा च कफशोफनिकृन्तनी ।
रुच्या जीर्णज्वरघ्नी च चक्षुष्या ग्रहणीहरा ॥ ६२ ॥
( मं कालेंजीरें । कं करिजीरिगे । तें नल्लजीर । हिं मङ्गरइल । गौ कालजीरे । )

---

* बाणभूह्वया पञ्चदशसंख्येत्यर्थः ।

अथ पृथ्वीकानाम ।—

दीप्योपकुञ्चिका काली पृथ्वी स्थूलकणा पृथुः ।
मनोज्ञा जरणी जीर्णा तरुणी स्थूलजीरकः ।
सुषवी कारवी ज्ञेया पृथ्वीका च चतुर्दश ॥ ६३ ॥
पृथ्वीका कटुतिक्तोष्णा वातगुल्मामदोषनुत् ।
श्लेष्माध्मानहरा जीर्णा जन्तुघ्नी दीपनी परा ॥ ६४ ॥
( मं कालेंजीरें । कं करिदोड्डुजीरगे । गौ मोटाकृष्णजीरे । )

अथ वृहत्पालीनाम ।—

वृहत्पाली क्षुद्रपत्रोऽरण्यजीरः कणा तथा ।
वनजीरः कटुः शीतो व्रणहा पञ्चनामकः ॥ ६५ ॥
( मं रानजीरें । कं काजीरगे । )

अथ सामान्यसमस्तजीरकगुणाः ।—

जीरकाः कटुकाः पाके क्रिमिघ्ना वह्निदीपनाः ।
जीर्णज्वरहरा रुच्या व्रणहाध्माननाशनाः ॥ ६६ ॥

अथ मेथिकानाम ।—

मेथिका मेथिनी मेथी दीपनी बहुपत्रिका ।
वेधनी गन्धबीजा च ज्योतिर्गन्धफला तथा ॥ ६७ ॥
वल्लरी चन्द्रिका मेथा मिश्रपुष्पा च कैरवी ।
कुञ्चिका बहुपर्णी च पीतबीजा मुनीन्दुधा ॥ ६८ ॥ *
मेथिका कटुरुष्णा च रक्तपित्तप्रकोपणी ।

* मुनीन्दुधा सप्तदशसंख्येत्यर्थः । ज्योतिष्फला गन्धफला चेति द्वयम् ।

[illegible]रा दीप्तिकरा वातघ्नदीपनी ॥ ६८ ॥

( हिं, मं, मेथी । कं मेथय । तें मेण्टलु । ता वेन्तयम् । गौ मेति । )

अथ हिङ्गुपत्रीनाम ।—

पृथ्वीका हिङ्गुपत्री च कबरी दीर्घिका पृथुः ।
तन्वी च दारुपत्री च विल्वी वाष्पी नवाह्वया ॥ ७० ॥
हिङ्गुपत्री कटुस्तीक्ष्णा तिक्तोष्णा कफवातनुत् ।
आमक्रिमिहरा रुच्या पथ्या दीपनपाचनी ॥ ७१ ॥

( हिङ्गुपत्रीति सर्वत्र ख्याता । गौ वंशपत्रतृण । )

अथ हिङ्गुनाम ।—

हिङ्गूग्रगन्धं भूतारिर्बाह्लीकं जन्तुनाशनम् ।
शूलगुल्मादिरक्षोघ्नमुग्रवीर्य्यं च रामठम् ॥ ७२ ॥ *
अगूढ़गन्धं जरणं भेदनं सूपधूपनम् ।
दीप्तं सहस्रवेधीति ज्ञेयं पञ्चदशाभिधम् ॥ ७३ ॥
हृद्यं हिङ्गु कटूष्णं च क्रिमिवातकफापहम् ।
विबन्धाध्मानशूलघ्नं चक्षुष्यं गुल्मनाशनम् ॥ ७४ ॥

( हिं, बम्, हिङ्गु । मं इङ्गु । कं लेसु । तें इङ्गुर । गौ हिं । )

अथ नाड़ीहिङ्गुनाम ।—

नाड़ीहिङ्गुः पलाशाख्या जन्तुका रामठी च सा ।
वंशपत्री च पिण्डाह्वा सुवीर्य्या हिङ्गुनाड़िका ॥ ७५ ॥
नाड़ीहिङ्गुः कटूष्णा च कफवातार्त्तिशान्तिकृत् ।

* शूलगुल्मघ्नं रक्षोघ्नमिति द्वयम् ।

विष्टाविबन्धदोषघ्नमानाहामयहारि च ॥ ७६ ॥

( मं नाड़ीहिङ्गु । कं कलहत्ति । हिं कलःपतिहिङ्गु ।
गौ हिङ्गुविशेष । )

अथ अग्निजारनाम ।—

अग्निजारोऽग्निनिर्य्यासोऽप्यग्निगर्भोऽग्निजः स्मृतः ।
वड़वाऽग्निमलो ज्ञेयो जरायुश्चाग्निसम्भवः ॥ ७७ ॥
स्यादग्निजारः कटुरुष्णवीर्य्यस्तुण्डामयो वातकफापहश्च ।
पित्तप्रदः सोऽधिकसन्निपात-शूलार्त्तिशीतामयनाशकश्च ॥ ७८ ॥

जाराभः ( अग्निजारभेदः ) ।—

जाराभो दहनस्पर्शी पिच्छिलः सागरे भवः ।
जरायुस्तच्चतुर्वर्णः तेषु श्रेष्ठः सलोहितः ॥ ७९ ॥

( अग्निजार इति भाषा पश्चिमसमुद्रप्रसिद्धे स्वनामख्याते
सागरसम्भूतौषधविशेषे । )

अथ रास्नानाम ।—

रास्ना युक्तरसा रम्या श्रेयसी रसना रसा ।
सुगन्धिमूला सुरसा रसाढ्याऽतिरसा दश ॥ ८० ॥
रास्ना तु त्रिविधा प्रोक्ता मूलं पत्रं तृणं तथा ।
ज्ञेये मूलदले श्रेष्ठे तृणरास्ना च मध्यमा ॥ ८१ ॥
रास्ना गुरुश्च तिक्तोष्णा विषवातास्रकासजित् ।
शोफकम्पोदरश्लेष्म-शमनी पाचनी च सा ॥ ८२ ॥

( हिं रासना । तें किरम्भिचक्क । तां मन्तरदामर । गौ रास्ना ।
रास्ना केदारदेशे प्रसिद्धा । )

अथ स्थूलैलानाम ।—

स्थूलैला बृहदेला त्रिपुटा त्रिदिवोद्भवा च भद्रैला ।
सुरभित्वक् च महैला पृथ्वी कन्या कुमारिका चैन्द्री ॥ ८३ ॥
कायस्था गोपुटा कान्ता घृताची गर्भसम्भवा ।
इन्द्राणी दिव्यगन्धा च विज्ञेयाऽष्टादशाह्वया ॥ ८४ ॥

( मं एलदोड़ि, एलचो । तें पेद्दएलाकुलु, यवडुलकि, एलुकचेट्टु ।
तां एलम् । हिं दूलांची पूरबी । गो बड़ एलाच । )

अथ सूक्ष्मैलानाम ।-

एला बहुलगन्धैन्द्री द्राविड़ी निष्कुटिस्त्रुटिः ।
कपोतवर्णी गौराङ्गी बाला बलवती हिमा ॥ ८५ ॥
चन्द्रिका चोपकुञ्ची च सूक्ष्मा सागरगामिनी ।
गर्भारिर्गन्धफलिका कायस्थाऽष्टादशाह्वया ॥ ८६ ॥
एलाद्वयं शीतलतिक्तमुक्तं सुगन्धि पित्तार्त्तिकफापहारि ।
करोति हृद्रोगमलार्त्तिवस्ति-शूलघ्नमत्र स्थविरा गुणाढ्या ॥८७

( हिं छोटीएलाचि । तें चिन्नयालकुलु, एलकय । गौ छोटएलाच । )

अथ सैन्धवनाम :—

सैन्धवं स्याच्छीतशिवं मादेयं सिन्धुजं शिवम् ।
शुद्धं शिवात्मजं पथ्यं मणिमन्थं नवाभिधम् ॥ ८८ ॥
सैन्धवं लवणं वृष्यं चक्षुष्यं रुचिदीपनम् ।
त्रिदोषशमनं पूतं व्रणदोषविबन्धजित् ॥ ८९ ॥
सैन्धवं द्विविधं ज्ञेयं श्वेतं रक्तमिति क्रमात् ।

रसवीर्य्यविपाकेषु गुणाढ्यं नूतनं शिवम् ॥ ८० ॥
( सैन्धव इति प्रायेण सर्वत्र प्रसिद्धम् । वं सैन्धेसोंण ।
गो सैन्धवलवण । )

अथ सौवर्चलनाम ।—

सौवर्चलन्तु रुचकं तिलकं हृद्यगन्धकम् ।
अक्षञ्च कृष्णलवणं रुच्यं कौद्रविकं तथा ॥ ८१ ॥
सौवर्चलं लघु क्षारं कटूष्णं गुल्मजन्तुजित् ।
ऊर्द्ध्ववातामशूलार्त्ति-विबन्धारोचकान् जयेत् ॥ ८२ ॥
( मं कं सोवर्चल । हिं सौञ्चारकोड़ा, सोञ्चारलवण ।
गो सचललवण । )

अथ काचलवणनाम ।—

नीलं काचोद्भवं काचं तिलकं काचसम्भवम् ।
काचसौवर्चलं कृष्ण-लवणं पाक्यजं स्मृतम् ॥ ८३ ॥
काचोत्थं हृद्यगन्धञ्च तत्काललवणं तथा ।
कुरुविन्दं काचमलं कृत्रिमञ्च चतुर्दश ॥ ८४ ॥
काचादिलवणं रुच्यमीषत्क्षारं च पित्तलम् ।
दाहकं कफवातघ्नं दीपनं गुल्मशूलहृत् ॥ ८५ ॥
( काचलवण इति सर्वत्र प्रसिद्धम् । गौ कालालवण, कृष्णलवण ।
सोरा इति केचित् । मं वाङ्गड़खार । )

अथ विड्नाम ।—

विड़ं द्राविड़कं खण्डं कृतकं क्षारमासुरम् ।
सुपाक्यं खण्डलवणं धूर्त्तं कृत्रिमकं दश ॥ ८६ ॥
विड़मुष्णञ्च लवणं दीपनं वातनाशनम् ।

रुच्यं चाजीर्णशूलघ्नं गुल्ममेहविनाशनम् ॥ ९७ ॥

( मं, कं विड़लवण। हिं विरिड़्, आसोचर। गौ विट्लवण। )

अथ गाढ़ादि(गड़)लवणनाम।—

गाढ़ादिलवणं शुभ्रं पृथ्वीजं गड़देशजम्।
गड़ोत्थं च महारम्भं साम्भरं सम्भरोद्भवम् ॥ ९८ ॥
गड़ोत्थं तूष्णलवणमीषदम्लं मलापहम्।
दीपनं कफवातघ्नमर्शोघ्नं कोष्ठशोधनम् ॥ ९९ ॥

( गाढ़लवणं सम्भरदेशे प्रसिद्धम्। गौ शाम्भरलवण। )

अथ सामुद्रकनाम।—

सामुद्रकं तु सामुद्रं समुद्रलवणं शिवम्।
वशिरं सागरोत्थञ्च शिशिरं लवणाब्धिजम् ॥ १०० ॥
सामुद्रं लघु हृद्यं च पलितास्रदपित्तदम्।
विदाहि कफवातघ्नं दीपनं रुचिकृत्परम् ॥ १०१ ॥

( मं कं वड़ागरलवण। हिं पाङ्गा। गौ पाङ्गा, करकच। )

अथ द्रौणेयनाम।—

द्रौणेयं वार्द्धेयं द्रोणीजं वारिजं च वार्द्धिभवम्।
द्रोणीलवणं द्रोणं त्रिकटुलवणं च वसुसंज्ञम् ॥ १०२ ॥ *
द्रौणेयं लवणं पाके नात्युष्णमविदाहि च।
भेदनं स्निग्धमीषच्च शूलघ्नं चाल्पपित्तलम् ॥ १०३ ॥

( मं दोणीचेम्मीट। कं दोणीय उपु। )

* वसुसंज्ञम् अष्टसंख्यकमित्यर्थः

अथ औषरकनाम ।—

औषरकं सार्वगुणं सार्वरसं सर्वलवणमूषरजम् । *
साम्भारं बहुलवणं मेलकलवणं च मिश्रकं नवधा ॥ १०४ ॥
औषरं तु कटु क्षारं तिक्तं वातकफापहम् ।
विदाहि पित्तकृद् ग्राहि मूत्रसंशोषकारि च ॥ १०५ ॥
( मं कटुया । कं बेरकेय । तां आट्टउप्पु ।। गौ खाड़ोनुन् । )

अथ रोमकनाम ।—

रोमकं रौमकं वसुकं वसु पांशुलवणमूषरजम् ।
पांशवमौषरमैरिणमौर्वं सार्वसाह्वं रुद्रैः ॥ १०६ ॥ †
रोमकं तीक्ष्णमत्युष्णं कटु तिक्तं च दीपनम् ।
दाहशोषकरं ग्राहि पित्तकोपकरं परम् ॥ १०७ ॥
( मं वापेसुखलेम्मोठ । कं वयलुगट्टेयउप्पु । हिं शाकम्भरि । )

अथ अजमोदानाम ।—

अजमोदा खराश्वा च वस्तमोदा च मर्कटी ।
मोदा गन्धदला हस्ति-कारवी गन्धपत्रिका ॥ १०८ ॥
मायूरी शिखिमोदा च मोदाढ्या वह्निदीपिका ।
ब्रह्मकोशी विशाली च हृद्यगन्धोग्रगन्धिका ।
मोदिनी फलमुख्या च वसुचन्द्राभिधा मता ॥ १०९ ॥ ‡

---

* ऊषरं मरुस्थलं तस्मात् जायते इति ऊषरजं मरुस्थलसम्भवमित्यर्थः ।

† रुद्रैरिति एकादशसंख्यकमित्यर्थः ।

‡ वसुचन्द्राभिधेति अष्टादशसंख्येत्यर्थः ।

अजमोदा कटूष्णा रूचा कफवातहारिणी रुचिकृत् ।
शूलाध्मानारोचकजठरामयनाशनी चैव ॥ ११० ॥
( मं, कं, अजमोदा । हिं अजमद । ते' वामं । गौ राधुनी । )

अथ रेणुकानाम ।—

रेणुका कपिला कान्ता नन्दिनी महिला द्विजा ।
राजपुत्री हिमा रेणुः पाण्डुपत्री हरेणुका ॥ १११ ॥
सुपर्णी शिशिरा शान्ता कौन्ती वृत्ता च धर्मिणी ।
कपिलोमा हैमवती पाण्डुपत्नी च विंशतिः ॥ ११२ ॥
रेणुका तु कटुः शीता खर्जूकण्डूतिहारिणी ।
तृष्णादाहविषघ्नी च मुखवैमल्यकारिणी ॥ ११३ ॥
( मं, कं, रेणुका । गो रेणुक । हिं सम्भालूकावीज ।
वं वेणुकवीज, कौन्ती । तां येट्टी । )

अथ बोलनाम ।—

बोलं रक्तापहं मुण्डं सुरसं पिण्डकं विषम् ।
निर्लोहं वर्वरं पिण्डं सौरभं रक्तगन्धकम् ॥ ११४ ॥
रसगन्धं महागन्धं विश्वञ्च शुभगन्धकम् ।
विश्वगन्धं गन्धरसं व्रणारिर्वसुभूह्वयम् ॥ ११५ ॥ *
बोलस्तु कटुतिक्तोष्णं कषायं रक्तदोषनुत् ।
कफपित्तामयान् हन्ति प्रदरादिरुजापहम् ॥ ११६ ॥
( मं, कं, हिं, दां, बोल । ते' वालिमल्लोपोलम् । तां वेल्लइप्पोलम् ।
वम् रक्तयाबोल । गो गन्धरस, बोल, हिराबोल,
खुनखागापी । )

* वसुभूह्वयमिति अष्टादशसंख्यकमित्यर्थः

अथ कर्चूरनाम ।—

कर्चूरो द्राविडः कार्शो दुर्लभो गन्धमूलकः ।
वेधमुख्यो गन्धसारो जटिलश्चाष्टनामकः ॥ ११७ ॥
कर्चूरः कटुतिक्तोष्णः कफकासविनाशनः ।
मुखवैशद्यजननो गलगण्डादिदोषनुत् ॥ ११८ ॥

( कं, मं, कचोरा । हिं कचूरा । तें औकानोकचेट्टा । गौ एकाङ्गी । )

अथ पाठानाम ।—

पाठाऽम्बष्ठाऽम्बष्ठिका स्यात् प्राचीना पापचेलिका ।
पाठिका स्थापनी चैव श्रेयसी वृद्धिकर्णिका ॥ ११९ ॥
एकाष्ठीला कुचैली च दीपनी वरतिक्तका ।
तिक्तपुष्पा वृहत्तिक्ता दीपनी त्रिशिरा वृकी ।
मालवी च वरा देवी वृत्तपर्णी द्विदृष्मिता ॥ १२० ॥ *
पाठा तिक्ता गुरूष्णा च वातपित्तज्वरापहा ।
भग्नसन्धानकृत्पित्त-दाहातीसारशूलहृत् ॥ १२१ ॥

( चक्रपाठा इति देशविशेषे ख्याता । हिं निमुका । तें पाठचेट्टु । उत् अकानृविन्धि । गौ आकनादि, आखान्दि । ]

अथ वृक्षाम्लनाम ।—

वृक्षाम्लमम्लशाकं स्याच्चुक्राम्लं तिन्तिड़ीफलम् ।
शाकाम्लमम्लपूरं च पूराम्लं रक्तपूरकम् ॥ १२२ ॥

---

* इक् नेत्रं, नेत्रं द्विसंख्यकम्, "अङ्कस्य वामा गतिः" इति नियमात् द्विदृष्मितेति द्वाविंशतिसंख्येत्यर्थः । ।

शृङ्गाम्लबीजाम्लफलाम्लकं स्यादम्लादिवृक्षाम्लफलं रसाम्लम्।
श्रेष्ठाम्लमत्यम्लमथाम्लबीजं फलं च चुक्रादि नगेन्दुसंख्यम् ॥१२३॥*
वृक्षाम्लमम्लं कटुकं कषायं सोष्णं कफार्शोघ्नमुदीरयन्ति।
तृष्णासमीरोदरहृद्गदादि-गुल्मातीसारव्रणदोषनाशि ॥ १२४ ॥

(हिं तिषाम्बिल। गो चुका। "मतान्तरे हिं अम्ली, इम्ली। मं इम्ली, चिञ्चा। क लुनिसे। तें चिएट। उत् केओं। तां पुलि०। वम् टिन्टज्। गो तेंतुल"। "मह्वादा" "अम्बलकूटा" इति च केचित्।)

अथ अम्लवेतसनाम।—

अम्लोऽम्लवेतसो वेधी रसाम्लो वीरवेतसः।
वेतसाम्लश्चाम्लसारः शतवेधी च वेधकः ॥ १२५ ॥
भीमश्च भेदनो भेदी राजाम्लश्चाम्लभेदनः।
अम्लाङ्कुशो रक्तसारः फलाम्लश्चाम्लनायकः ॥ १२६ ॥
सहस्रवेधी वीराम्लो गुल्मकेतुर्धराऽक्षिधा। †
शङ्खमांसादिद्रावी स्याद्द्विधा चैवाम्लवेतसः ॥ १२७ ॥
अम्लवेतसमत्यम्लं कषायोष्णं च वातजित्।
कफार्शःश्रमगुल्मघ्नमरोचकहरं परम् ॥ १२८ ॥

(अम्लवेतस इति भोटदेशे गौड़े च प्रसिद्धम्। हिं आमलटास्। "थैकल" इति देशान्तरे प्रसिद्ध इति चक्रदत्तः।)

---

* नगेन्दुसंख्यं—नगाः पर्वताः अष्ट, इन्दुश्चन्द्र एकः, तेन अष्टादशसंख्येत्यर्थः।

† धराऽक्षिधेति—धरा एकसंख्या, अक्षि नेत्रं द्विसंख्या, तेन एकविंशतिसंख्येत्यर्थः।

अथ कटुकानाम ।—

कटुका जननी तिक्ता रोहिणी तिक्तरोहिणी ।
चक्राङ्गी मत्स्यपित्ता च वकुला शकुलादनी ॥ १२९ ॥
सादनी शतपर्वा स्यात् चक्राङ्गी मत्स्यभेदिनी ।
अशोकरोहिणी कृष्णा कृष्णभेदा महौषधी ॥ १३० ॥
कट्वञ्जनी काण्डरुहा कटुश्च कटुरोहिणी ।
केदारकटुकाऽरिष्टाऽप्यामघ्नी पञ्चविंशतिः ॥ १३१ ॥
कटुकाऽतिकटुस्तिक्ता शीतपित्तास्रदोषजित् ।
बलासारोचकश्वास-ज्वरहृद्रेचनी च सा ॥ १३२ ॥

( केदारकटुकीति दाक्षिणात्ये प्रसिद्धा । हिं कुटकी । तें नल्ल-
कोलकर । गौ कट्की । )

अथ अतिविषानाम ।—

अतिविषा श्वेतकन्दा विश्वा शृङ्गी च भङ्गुरा ।
विरूपा श्यामकन्दा च विश्वरूपा महौषधी ॥ १३३ ॥
वीरा प्रतिविषा चान्द्री विषा श्वेतवचा स्मृता ।
अरुणोपविषा चैव ज्ञेया षोड़शसम्मिता ॥ १३४ ॥
कटूष्णाऽतिविषा तिक्ता कफपित्तज्वरापहा ।
आमातीसारकासघ्नी विषच्छर्दिविनाशनी ॥ १३५ ॥
त्रिविधाऽतिविषा ज्ञेया शुक्ला कृष्णा तथाऽरुणा ।
रसवीर्य्यविपाकेषु निर्विशेषगुणा च सा ॥ १३६ ॥

अथ अतिविषाशोधनम् ।—

दोलायां गोमयक्वाथे पचेदतिविषां ततः ।

सूर्य्यतापे भवेच्छुष्का योजयेत् तां भिषग्वरः॥ १३७॥

( अतिविषेति सर्वत्र प्रसिद्धा। हिं आतिष्। तें अतिवसचेट्टु।
गौ आतइच: )

अथ मुस्तानाम।—

मुस्ताभद्रावारिदाम्भोदमेघा
जीमूतोऽब्दो नीरदोऽभ्रं घनश्च।
गाङ्गेयं स्याद्भद्रमुस्ता वराही
गुञ्जा ग्रन्थिर्भद्रकासी कसेरुः॥ १३८॥
क्रोड़ेष्टा कुरुविन्दाख्या सुगन्धिर्ग्रन्थिला हिमा।
वन्या राजकसेरुश्च कच्छोत्था पञ्चविंशतिः॥ १३९॥
भद्रमुस्ता कषाया च तिक्ता शीता च पाचनी।
पित्तज्वरकफघ्नी च ज्ञेया सङ्ग्रहणी च सा॥ १४०॥

( कं भद्रकाशी। गौ भादलामुता। )

अथ नागरमुस्तानाम।—

अपरा नागरमुस्ता नागरोत्था नागरादिघनसंज्ञा।
चक्राङ्का नादेयी चूड़ाला पिण्डमुस्ता च॥ १४१॥
शिशिरा च वृषध्वाङ्क्षी कच्छरुहा चारुकेसरोच्चटा।
सा पूर्णकोष्ठसंज्ञा कलापिनी सागरेन्दुमिता॥ १४२॥ *
तिक्ता नागरमुस्ता कटुः कषाया च शीतला कफनुत्।

* सागरेन्दुमितेति—सागराः पूर्वोत्तरभेदात् चत्वार एवात्र ग्राह्या, न तु लवणादिभेदेन सप्त ; इन्दुश्चन्द्र एकः, तेन चतुर्दशसंख्येत्यर्थः।

पित्तज्वरातिसाराघ्नचितृष्णादाहनाशनी श्रमहृत् ॥१४३॥

( नागरमुस्ता नागरदेशे प्रसिद्धा । हिं नागरमोथा। तें तुङ्गगड्डल-
विम् । तां कुट्टक्काच । द्रां गरमोटा । गो नागरमुता । )

अथ यष्टीमधुनाम ।—

यष्टीमधुर्मधुयष्टी मधुवल्ली मधुस्रवा ।
मधुकं मधुका यष्टी यष्ट्याह्वं वसुसम्मितम् ॥ १४४ ॥
मधुरं यष्टिमधुकं किञ्चित्तिक्तं च शीतलम् ।
चक्षुष्यं पित्तहृद्रुच्यं शोषतृष्णाव्रणापहम् ॥ १४५ ॥

( मं, कं, यष्टीमधु । हिं जेठीमधु, मुलहटी । तें मिष्टमूल-
विशेषमु । गो यष्टिमधु ।

अथ क्लीतनक नाम ।—

अन्यत्क्लीतनमुक्तं क्लीतनकं क्लीतनीयकं मधुकम् ।
मधुवल्ली च मधूली मधुरलता मधुरसाऽतिरसा ॥ १४६ ॥
शोषापहा च सौम्या स्थलजा जलजा च सा द्विधाभूता ।
सामान्येन मतेयमेकादशसंज्ञा बहुज्ञधिया ॥ १४७ ॥
क्लीतनं मधुरं रुच्यं बल्यं वृष्यं व्रणापहम् ।
शीतलं गुरु चक्षुष्यमस्रपित्तापहं परम् ॥ १४८ ॥

( गो, मं, कं, वल्लियष्टिमधु । )

अथ भार्ङ्गी ( भार्गी ) नाम ।—

भार्ङ्गी गर्दभिशाकश्च फञ्जी वाङ्गारवल्लरी ।
वर्षा ब्राह्मणयष्टिश्च वर्वरो भृङ्गजा च सा ॥ १४९ ॥
पद्मा यष्टिश्च भारङ्गी वातारिः कासजित्परम् ।
सुरूपा भ्रमरेष्टा च शक्रमाता च षोडश ॥ १५० ॥

भार्ङ्गी तु कटुतिक्तोष्णा कासश्वासविनाशनी।
शोफव्रणक्रिमिघ्नी च दाहज्वरनिवारिणी ॥ १५१ ॥

( मं भारङ्गी। कं किवदैमु। हिं वरङ्गी, वर्भनेटी। तें भरङ्गमारङ्गि। ते॰ चूया। गौ वामनहाटी। )

अथ पुष्करमूलनाम।—

मूलं पुष्करमूलं च पुष्करं पद्मपत्रकम्।
पद्मं पुष्करजं वीजं पौष्करं पुष्कराह्वयम् ॥ १५२ ॥
काश्मीरं ब्रह्मतीर्थं च श्वासारिर्मूलपुष्करम्।
ज्ञेयं पञ्चदशाह्वं च पुष्कराङ्घ्रे र्जटाशिफे ॥ १५३ ॥
पुष्करं कटुतिक्तोष्णं कफवातज्वरापहम्।
श्वासारोचककासघ्नं शोफघ्नं पाण्डुनाशनम् ॥ १५४ ॥

( पुष्करमूल पुष्करे प्रसिद्धम्। पातालपद्मिनीति काश्मीरदेश-प्रसिद्धे कन्दविशेषे। तें पुष्करदेशंलोप्रसिद्धमैन ओषधि-विशेषमु। हिं पोहोकरमूलो। गो पुष्करमूल। )

अथ शृङ्गीनाम।—

शृङ्गी कुलीरशृङ्गी स्यात् घोषा च वनमूर्धजा।
चन्द्रा कर्कटशृङ्गी च महाघोषा च शृङ्गिका ॥ १५५ ॥
कालिका चेन्दुखण्डा च लताङ्गी च विषाणिका।
चक्रा च शिखरं चैव कर्कटाह्वा त्रिपञ्चधा ॥ १५६ ॥ *
तिक्ता कर्कटशृङ्गी तु गुरुरुष्णाऽनिलापहा।

---

* त्रिपञ्चधेति—त्रिगुणितपञ्चसंख्या, तेन पञ्चदशसंख्येत्यर्थः।

हिक्कातीसारकासघ्नी श्वासपित्तास्रनाशनी ॥ १५७ ॥

( मं काकड़ासिङ्गी । कं, तें, कर्काटश्टङ्गी । हिं ककड़ाश्टङ्गी, ककरघिं । गौ काँकड़ाश्टङ्गी । )

अथ दन्तीनाम ।—

दन्ती शीघ्रा श्येनघण्टा निकुम्भी
नागस्फोता दन्तिनी चोपचित्रा ।
भद्रा रूक्षा रोचनी चानुकूला
निःशल्या स्यादक्रदन्ता विशल्या ॥ १५८ ॥

मधुपुष्पैरण्डफला भद्राख्यैरण्डपत्रिका ।
उदुम्बरदला चैव तरुणी चाण्डरेवती ।
विशोधनी च कुम्भी च ज्ञेया चाग्निकराह्वया ॥ १५९ ॥ *
दन्ती कटूष्णा शूलाम-त्वग्दोषशमनी च सा ।
अर्शोव्रणाश्मरीशल्य-शोधनी दीपनी परा ॥ १६० ॥

( मं दान्ति । कं दन्ति । हिं हकुम् । तें दन्तिचेट्टु, कोण्डआमडुम् । वं जामालगोटा । गौ दन्तिगाछ । )

अथ अपरदन्तीनाम ।—

अन्या दन्ती केशरुहा विषभद्रा जयावहा ।
आ· त्रंकी वराङ्गी च जयाह्वा भद्रदन्तिका ॥ १६१ ॥
अन्या दन्ती कटूष्णा च रेचनी क्रिमिहा परा ।
शूलकुष्ठामदोषघ्नी त्वगामयविनाशनी ॥ १६२ ॥

( मं दुसरीदान्ती । कं एरडनेदन्ति । )

---

* अग्निकराह्वयेति—अग्निस्त्रिः करः द्विः तेन त्रयोविंशतिसंख्येत्यर्थः ।

अथ दन्तीवीजनाम ।—

रेचको जयपालश्च सारकस्तित्तिरीफलम् ।
दन्तीवीजं मलद्रावि ज्ञेयं स्याद्वीजरेचनी ॥ १६३ ॥

कुम्भीवीजं कुम्भिनीवीजसंज्ञं
घण्टावीजं दन्तीवीजमुक्तम् ।
वीजान्ताख्यं शोधनी चक्रदन्त्यो
वेदेन्द्राख्यं तन्निकुम्भयाश्च वीजम् ॥ १६४ ॥ *

जैपालः कटुकष्णश्च क्रिमिहारी विरेचनः ।
दीपनः कफवातघ्नो जठरामयशोधनः ॥ १६५ ॥

( गौ जयपाल । मं जैपाल । जामालगोटा इति च देशविशेषे ख्याता । )

अथ त्रिवृन्नाम ।—

उक्ता त्रिवृन्मालविका मसूरा
श्यामाऽर्द्धचन्द्रा विदला सुषेणी ।
कालिन्दिका सैव तु कालमेषी
काली त्रिवेलाऽवनिचन्द्रसंज्ञा ॥ १६६ ॥ †

त्रिवृत्तिक्ता कटूष्णा च क्रिमिश्लेष्मोदरार्त्तिजित् ।
कुष्ठकण्डूव्रणान् हन्ति प्रशस्ता च विरेचने ॥ १६७ ॥

( मं तियड । कं तिगडे । गौ कालतेउड़ी । हिं तर्वद, निशोत, नक्पतर, पिथोरी । तें आलतिगड़ु । तां शिवदइ । वम्० फुट्कुरी, निशोथोर । )

---

* वेदेन्द्राख्यमिति चतुर्दशसंख्येत्यर्थः ।

† अवनिचन्द्रसंज्ञेति एकादशसंख्येत्यर्थः ।

अथ रक्तत्रिवृन्नाम ।—

रक्ताऽन्यापि च कालिन्दी त्रिपुटा ताम्रपुष्पिका ।
कुलवर्णा मसूरी चाप्यमृता काकनाशिका ॥ १६८ ॥
रक्ता त्रिवृद्रसे तिक्ता कटूष्णा रेचनी च सा ।
ग्रहणीमलविष्टम्भ-हारिणी हितकारिणी ॥ १६९ ॥
( गौ लालतेउड़ी । मं लोहिडीतियड । कं केम्पिनेयतिगडे । )

अथ त्वङ्नाम ।—

त्वचं त्वग्वल्कलं भृङ्गं वराङ्गं मुखशोधनम् ।
शकलं सैंहलं वन्यं सुरसं रामवल्लभम् ॥ १७० ॥
उत्कटं बहुगन्धञ्च विज्जुलञ्च वनप्रियम् ।
लाटपर्णं गन्धवल्कं वरं शीतं ग्रहच्छिती ॥ १७१ ॥ *
त्वचन्तु कटुकं शीतं कफकासविनाशनम् ।
शुक्रामशमनं चैव कण्ठशुद्धिकरं लघु ॥ १७२ ॥
( मं, कं, तज । गौ दारुचिनि । हिं त्वक् । )

अथ तमालपत्रनाम ।—

पत्रं तमालपत्रञ्च पत्रकं छदनं दलम् ।
पलाशमंशुकं वासस्तापसं सुकुमारकम् ॥ १७३ ॥
वस्त्रं तमालकं रामं गोपनं वसनं तथा ।
तमालं सुरभिगन्धं ज्ञेयं सप्तदशाह्वयम् ॥ १७४ ॥
पत्रकं लघु तिक्तोष्णं कफवातविषापहम् ।
वस्तिकण्डूतिदोषघ्नं मुखमस्तकशोधनम् ॥ १७५ ॥
( मं, कं पत्रक । हिं तेजपत्र । गौ तेजपात । )

---

* ग्रहच्छिती एकोनविंशतिसंख्येत्यर्थः ।

अथ नागकेशरनाम ।—

किञ्जल्कं कनकाह्वं च केशरं नागकेशरम् ।
चाम्पेयं नागकिञ्जल्कं नागीयं काञ्चनं तथा ॥ १७६ ॥
सुवर्णं हेमकिञ्जल्कं रुक्मं हेमं च पिञ्जरम् ।
फणिपुन्नागयोगादि-केशरं पञ्चभूह्वयम् ॥ १७७ ॥
नागकेशरमल्पोष्णं लघु तिक्तं कफापहम् ।
वस्तिवातामयघ्नं च कण्ठशीर्षरुजापहम् ॥ १७८ ॥

( मं, कां, हिं, गौ, नागकेशर । तें नागकेसरालु । तां नाङ्गल । वम् नागचम्प । नागेश्वरचांपा इति केचित् । )

अथ तवक्षीरनाम ( वंशरोचनाविशेषः ) ।—

तवक्षीरं पयःक्षीरं यवजं गवयोद्भवम् ।
अन्यद्गोधूमजं चान्यत् पिष्टिकातण्डुलोद्भवम् ॥ १७९ ॥
अन्यच्च तालसम्भूतं तालक्षीरादिनामकम् ।
वनगोक्षीरजं श्रेष्ठमभावेऽन्यदुदीरितम् ॥ १८० ॥
तवक्षीरं तु मधुरं शिशिरं दाहपित्तनुत् ।
क्षयकासकफश्वास-नाशनं चास्रदोषनुत् ॥ १८१ ॥

( मं कां तवक्षीर । हिं तोषाक्षीर । पलाशगन्धेति प्रसिद्धम् । )

अथ तालीसपत्रनाम ।—

तालीसपत्रं तालीसं पत्राख्यं च शुकोदरम् ।
धात्रीपत्रं चार्कवेधं करिपत्रं घनच्छदम् ॥ १८२ ॥
नीलं नीलाम्बरं तालं तालीपत्रं तलाह्वयम् ।
तालीसपत्रकश्चेति नामान्याहुस्त्रयोदश ॥ १८३ ॥

तालीसपत्रं तिक्तोष्णं मधुरं कफवातनुत् ।
कासहिक्काक्षयश्वास-च्छर्दिदोषविनाशकृत् ॥ १८४ ॥

( मं, कं, तालीपत्र, तालिष्पत्रि, तालिशपत्र । तें, तां, तालिशपत्रि । दां पनिपल । वं ताम्बठ । गौ तालीशपत्र । )

अथ वंशरोचनानाम ।—

स्याद्वंशरोचना वांशी तुङ्गक्षीरी तुगा शुभा ।
त्वक्क्षीरी वंशगा शुक्ला वंशक्षीरी च वैणवी ॥ १८५ ॥
त्वक्सारा कर्मरी श्वेता वंशकर्पूर-रोचने ।
तुङ्गा रोचनिका पिङ्गा नवेन्दुर्वंशशर्करा ॥ १८६ ॥
स्याद्वंशरोचना रूक्षा कषाया मधुरा हिमा ।
रक्तशुद्धिकरी ताप-पित्तोद्रेकहरा शुभा ॥ १८७ ॥
तवक्षीरे यवक्षीरे क्षीरे जातं गुणोत्तरम् ।
वंशक्षीरीसमं प्रोक्तं तदभावेऽन्यवस्तुजम् ॥ १८८ ॥
गवयक्षीरजं क्षीरं सुस्निग्धं शीतलं लघु ।
सुगन्धि द्रावकं शुभ्रमन्यत् स्वल्पगुणं स्मृतम् ॥ १८९ ॥

मं, कं, वंशरोचना । तां तवक्षीरि । गौ वंशलोचन । )

अथ मञ्जिष्ठानाम ।—

मञ्जिष्ठा हरिणी रक्ता गौरी योजनवल्लिका ।
समङ्गा विकसा पद्मा रोहिणी कालमेषिका ॥ १९० ॥
भण्डी चित्रलता चित्रा चित्राङ्गी जननी च सा ।
मण्डूकपर्णी विजया मञ्जूषा रक्तयष्टिका ॥ १९१ ॥

चैव रागाढ्या भण्डीरी कालभाण्डिका ।
अरुणा ज्वरहन्त्री च छत्रा नागकुमारिका ॥ १८२ ॥
भाण्डीरलतिका चैव रागाङ्गी वस्त्रभूषणा ।
त्रिंशाह्वया तथा प्रोक्ता मञ्जिष्ठा च भिषग्वरैः ॥ १८३ ॥
मञ्जिष्ठा मधुरा स्वादे कषायोष्णा गुरुस्तथा ।
व्रणमेहज्वरश्लेष्म-विषनेत्रामयापहा ॥ १८४ ॥
चोलश्च योजनो कौञ्जो सिंहिलो च चतुर्विधा ।
मञ्जिष्ठा चैव सा प्रोक्ता विलोमे चोत्तमोत्तमा ॥ १८५ ॥
( हिं मञ्जीठ। वम्° जिङ्गिनि। तें मञ्जिष्ठतीठो, ताम्रवल्ली।
तां मञ्जिट्टो। रनास इति पारस्यदेशे प्रसिद्धः। गौ मञ्जिष्ठा। )

अथ हरिद्रानाम ।—

हरिद्रा हरिद्रञ्जनी स्वर्णवर्णा
सुवर्णा शिवा वर्णिनी दीर्घरागा ।
हरिद्री च पीता वराङ्गी च गौरी
जनिष्ठा वरा वर्णदात्री पवित्रा ॥१८६ ॥
हरिता रजनीनाम्नी विषघ्नी वरवर्णिनी ।
पिङ्गला वर्णदा चैव मङ्गल्या मङ्गला च सा ॥ १८७ ॥
लक्ष्मी भद्रा शिफा शोफा शोभना सुभगाह्वया ।
श्यामा जयन्तिका द्वे च त्रिंशन्नामविलासिनी ॥ १८८ ॥
हरिद्रा कटुतिक्तोष्णा कफवातास्रकुष्ठनुत् ।
मेहकण्डूव्रणान् हन्ति देहवर्णविधायिनी ॥ १८९ ॥
( मं हलदि। कं अरसिन। तें पसुपु। हिं हर्दी, हल्दी।
दां, गुर्ज° हलद। गौ हलुद। )

अथ दारुहरिद्रानाम ।—

अन्या दारुहरिद्रा च दार्वी पीतद्रु पीतिका ।
कालेयकं पीतदारु स्थिररागा च कामिनी ॥ २०० ॥
कटङ्कटेरी पर्जन्या पीता दारुनिशा स्मृता ।
कालीयकं कामवती दारुपीता पचम्पचा ।
स्यात् कर्कटकिनी ज्ञेया प्रोक्ता सप्तदशाह्वया ॥ २०१ ॥
तिक्ता दारुहरिद्रा तु कटूष्णा व्रणमेहनुत् ।
कण्डूविसर्पत्वग्दोष-विषकर्णाक्षिदोषहा ॥ २०२ ॥

( गौ दारुहरिद्रा । कं मरनरिसिन । हिं दारुहलदि । दां जारकी हलदी । तै मणिपसुपु । तां मरमञ्जिल । )

अथ लाक्षानाम ।—

लाक्षा खदिरका रक्ता रक्तमाता पलङ्कषा ।
जतु च क्रिमिजा चैव द्रुमव्याधिरलक्तकः ॥ २०३ ॥
पलाशी मुद्रणी दीप्तिर्जन्तुका गन्धमादनी ।
नीला द्रवरसा चैव पित्तारिर्मुनिभूह्वया ॥ २०४ ॥ *
लाक्षा तिक्तकषाया स्यात् श्लेष्मपित्तार्त्तिदोषनुत् ।
[illegible]शमनी विषमज्वरनाशनी ॥ २०५ ॥

( मं लाख । कं अरगु । तैं लत्तुक, लक्क । हिं लाही । गौ लाहा, गाला । )

अथ अलक्तकनाम ।—

अलक्तको जन्तुरसो रागो निर्भर्त्सनस्तथा ।

* मुनिभूह्वया सप्तदशसंख्येत्यर्थः

जननी जन्तुकारी च सन्धर्षा चक्रमर्दिनी ॥ २०६ ॥
अलक्तकः सुतिक्तोष्णः कफवातामयापहः ।
कण्ठरुक्शमनो रुच्यो व्रणदोषार्त्तिनाशनः ॥ २०७ ॥
( मं अलिता । कं अलतगे । तां मन्हावर । हिं लाही ।
गौ आलता, लाहा, जौ, गाला । )

अथ लोध्रनाम ।—

लोध्रो रोध्रो भिल्लतरुश्चिल्लकः काण्डकीलकः ।
तिरीटो लोध्रको वृक्षः शम्बरो हस्तिरोध्रकः ॥ २०८ ॥
तिल्वकः काण्डहीनश्च शावरो हेमपुष्पकः ।
भिल्ली शावरकश्चैव ज्ञेयः पञ्चदशाह्वयः ॥ १०९ ॥

अथ क्रमुकनाम । (लोध्रविशेषः । )—

क्रमुकः पट्टिकारोध्रो वल्करोध्रो बृहद्दलः ।
जीर्णबुध्नो बृहद्वल्को जीर्णपत्रोऽक्षिभेषजः ॥ २१० ॥
शावरः श्वेतरोध्रश्च मार्जनो बहलत्वचः ।
पट्टी लाक्षाप्रसादश्च वल्कलो बाणभूह्वयः ॥ २११ ॥ *
लोध्रद्वयं कषायं स्यात् शीतं वातकफास्रनुत् ।
चक्षुष्यं विषहृत्तत्र विशिष्टो वल्करोध्रकः ॥ २१२ ॥
( हिं, मं, कं, गौ लोध । तें तेल्ललोट्टुगचेट्टु । गुर्ज लोदर ) ।

अथ धातकीनाम ।—

धातकी वह्निपुष्पी च ताम्रपुष्पी च धावनी ।
अग्निज्वाला सुभिक्षा च पार्वती बहुपुष्पिका ॥ २१३ ॥

* बाणभूह्वय इति पञ्चदशसंख्येत्यर्थः ।

कुमुदा सीधुपुष्पी च कुञ्जरा मद्यवासिनी ।
गुच्छसङ्घादिपुष्पान्ता ज्ञेया सा लोध्रपुष्पिणी । *
तीव्रज्वाला वह्निशिखा मद्यपुष्पीन्द्रसम्मिता ॥ २१४ ॥ †
धातकी कटुरुष्णा च मदकृद्विषनाशनी ।
प्रवाहिकाऽतिसारघ्नी विसर्पव्रणनाशिनी २१५ ॥

( मं धायटी । हिं धावइ, धाओला । तें आरेपुव्वु, जार्गि । उत्० जातिकी । गौ धाइफुल । )

अथ समुद्रफलनाम ।—

समुद्रनाम प्रथमं पश्चात् फलमुदाहरेत् ।
समुद्रफलमित्यादि नाम वाच्यं भिषग्वरैः ॥ २१६ ॥
फलं समुद्रस्य कटूष्णकारि वातापहं भूतनिरोधकारि ।
त्रिदोषदावानलदोषहारि कफामयभ्रान्तिविरोधकारि ॥ २१७ ॥

( मं, कं, समुद्रफल । हिं कडुफल, समुन्दरकापत् । बम्० समुन्दरशोक । दां समुद्रकापत्ता । तें समुन्दरपाल । )

अथ निर्विषानाम ।—

निर्विषाऽपविषा चैव विविषा विषहा परा ।
विषहन्त्री विषाभावा ह्यविषा विषवैरिणी ॥ २१८ ॥
निर्विषा तु कटुः शीता कफवातास्रदोषनुत् ।
अनेकविषदोषघ्नी व्रणसंरोपणी च सा ॥ २१९ ॥

( मं, कं, निर्विषा । केदारदेशेऽस्या उत्पत्तिः । गौ निर्विषीघास । )

---

* गुच्छसङ्घादिपुष्पान्तेति—गुच्छपुष्पा, सङ्घपुष्पेति नामद्वयम् ।

† इन्द्रसम्मिता अष्टादशसंख्या इत्यर्थः ; इन्द्रस्य अष्टादशसंख्याभागिन्याः ज्येष्ठातारायाः अधिपत्वात् ।

अथ विषनाम ।—

विषमाहेयममृतं गरलं दारदं गरम् ।
कालकूटं कालकूटे हरिद्रं रक्तशृङ्गकम् ॥ २२० ॥ *
नीलश्च गरदं क्ष्वेड़ो घोरं हालाहलं हरम् ।
मरं हलाहलं शृङ्गी भूगरं चैकविंशतिः ॥ २२१ ॥

अथ वत्सनाभविषनाम ।—

अमृतं स्यात् वत्सनाभो विषमुग्रं महौषधम् ।
गरलं मरणं नागं स्तोककं प्राणहारकम् ।
गरलं स्थावरादि स्यात् प्रोक्तं चैकादशाह्वयम् ॥ २२२ ॥
वत्सनाभोऽतिमधुरः सोष्णो वातकफापहः ।
कण्ठरुक्सन्निपातघ्नः पित्तसन्तापकारकः ॥ २२३ ॥
( मं, कं, वत्सनाभविष । हिं मिठा । बम् बचनाग । तां वसनवी ।
गौ स्थावरकन्दविष, काठविष, मिठेविष । )

अथ स्थावरविषनाम ।—

स्थावरे विषजातीनां श्रेष्ठौ नागोग्रशृङ्गकौ ।
नागो देहकरे श्रेष्ठो लोहे चैवोग्रशृङ्गकः ॥ २२४ ॥
विषस्याष्टादशभिदाश्चतुर्वर्गाश्च यत् पृथक् ।
तदत्र नोक्तमस्माभिर्ग्रन्थगौरवभीरुभिः ॥ २२५ ॥

अथ शटीनाम ।—

शटी शठी पलाशश्च षड्ग्रन्था सुव्रता वधूः ।
सुगन्धमूला गन्धाली शटिका च पलाशिका ॥ २२६ ॥

---

* कालकूटे इति—कालस्य कूटश्चेति द्वयम् ।

सुभद्रा च हरणी दूर्वा गन्धा पृथुपलाशिका ।
सौम्या हिमोद्भवा गन्ध-बधूर्नागेन्दुसम्मिता ॥ २२७ ॥ *

शटी सतिक्ताऽम्लरसा लघूष्णा रुचिप्रदा च ज्वरहारिणी च ।
कफास्रकण्डूव्रणदोषहन्त्री वक्त्रामयध्वंसकरी च सोक्ता ॥२२८॥

( मं आम्बेहलदि । कं हुलिअरसिव । बम् कचोरा ।
गौ शठी । इयं कोङ्कणे प्रसिद्धा । )

अथ शटीविशेषनाम ।—

अन्या तु गन्धपत्रा स्यात् स्थूलाख्या तिक्तकन्दका ।
वनजा शटिका वन्या स्तवचौर्य्येकपत्रिका ॥ २२९ ॥
गन्धपीता पलाशान्ता गन्धाढ्या गन्धपत्रिका ।
दीर्घपत्रा गन्धनिशा शरभूह्वा सुपाकिनी ॥ २३० ॥ †
गन्धपत्रा कटुः स्वादुस्तीक्ष्णोष्णा कफवातजित् ।
कासच्छर्दिज्वरान् हन्ति पित्तकोपं करोति च ॥ २३१ ॥

( पलाशनाश इति दाक्षिणात्ये प्रसिद्धा । गौ शटीविशेष, गन्धशटी ।
मालवे गन्धपलाशीति प्रसिद्धा । )

अथ समुद्रफेननाम ।—

समुद्रफेनं फेनश्च वार्द्धिफेनं पयोधिजम् ।
सुफेनमब्धिडिण्डीरं सामुद्रं सप्तनामकम् ॥ २३२ ॥
समुद्रफेनं शिशिरं कषायं नेत्ररोगनुत् ।
कफकण्ठामयघ्नञ्च रुचिकृत्कर्णरोगहृत् ॥ २३३ ॥

(मं समुद्रफेन । कं कडलनागले । गुर्ज० समुद्रफिण् । गौ समुद्रेर फेना । )

---

* नागेन्दुसम्मिता अष्टादशसंख्यकेत्यर्थः ।

† शरभूह्वा पञ्चदशसंख्येत्यर्थः ।

अथ अफेननाम ।—

अफेनं खसखसरसो निफेनं चाहिफेनकम् ।
अफेनं सन्निपातघ्नं वृष्यं बल्यं च मोहदम् ॥ २३४ ॥

( आफन इति मालवे प्रसिद्धम् । हिं अफिम् । मं अफूकाडूर',
अफून । । तें नलमण्डु । गौ आफिम । आरवदेशे
लवनुल्खास । )

अथ अफेनभेदनामगुणाश्च ।—

चतुर्विधमफेनं स्यात् जारणं मारणं तथा ।
धारणं सारणं चैव क्रमाद्वक्ष्ये तु लक्षणम् ॥ २३५ ॥
श्वेतञ्च जारणं प्रोक्तं कृष्णवर्णञ्च मारणम् ।
धारणं पीतवर्णन्तु कर्बुरं सारणं तथा ॥ २३६ ॥
जारणं जारयेदन्नं मारणं मृत्युदायकम् ।
धारणञ्च वयःस्तम्भं सारणं मलसारणम् ॥ २३७ ॥

अथ टङ्कणनाम ।—

टङ्कणष्टङ्कणक्षारो रङ्गः क्षारो रसाधिकः ।
लोहद्रावी रसघ्नश्च सुभगो रङ्गदश्च सः ॥ २३८ ॥
वर्त्तुलः कनकक्षारो मलिनो धातुवल्लभः ।
त्रयोदशाह्वयश्चायं कथितस्तु भिषग्वरैः ॥ २३९ ॥
कथितष्टङ्कणक्षारः कटूष्णः कफनाशनः ।
स्थावरादिविषघ्नश्च कासश्वासापहारकः ॥ २४० ॥

( मं, कं, टङ्कणखार । गौ सोहागा । )

अथ टङ्कणभेदनाम ।—

द्वितीयं टङ्कणं श्वेतं श्वेतकं श्वेतटङ्कणम् ।
लोहशुद्धिकरं सिन्धु-मालतीतीरसम्भवम् ।*
शिवश्च द्रावकं प्रोक्तं शितक्षारं दशाभिधम् ॥ २४१ ॥
सुश्वेतं टङ्कणं स्निग्धं कटूष्णं कफवातनुत् ।
आमक्षयापहृच्छ्वास-विषकासमलापहम् ॥ ४२ ॥

( मं पाण्ढरा टङ्कणु । कं बिलियटङ्कणु । गो सोहागा, शादा सोहागा । )

अथ साकुरुण्डनाम ।—

साकुरुण्डो ग्रन्थिफलो विकटो वस्त्रभूषणः ।
कुरुण्डः कर्बुरफलः सकुरुण्डश्च सप्तधा ॥ २४३ ॥
साकुरुण्डः कषायश्च रुचिकृद्दीपनः परः ।
श्लेष्मवातापहारी च वस्त्ररञ्जनको लघुः ॥ २४४ ॥

( सङ्कुरुण्ड इति भाषा गुर्जरे प्रसिद्धः । )

अथ हिमावलीनाम ।—

हिमावली च हृद्वाली कुष्ठघ्नी गारकुष्ठकः ।
अङ्गारग्रन्थिको ग्रन्थो ग्रन्थिलो मुनिसंज्ञकः ॥ २४५ ॥
हिमावली सरा तिक्ता प्लीहगुल्मोदरापहा ।
क्रिमिकुष्ठगुदात्युग्र-खर्जू-कण्डूतिहारिणी ॥ २४६ ॥

( हिमावलीति भाषा सर्वत्र प्रसिद्धा । )

---

* सिन्धुमालतीतीरसम्भवम्—सिन्धुतीरसम्भवं, मालतीतीरसम्भवञ्चेति नामद्वयम् ।

अथ हस्तिमदनाम ।—

हस्तिमदो गजमदो गजदानं मदस्तथा ।
कुम्भिमदो दन्तिमदो दानं द्वीपिमदोऽष्टधा ॥ २४७ ॥
स्निग्धो हस्तिमदस्तिक्तः केश्योऽपस्मारनाशनः ।
विषघ्नत् कुष्ठकण्डूति-व्रणदद्रुविसर्पनुत् ॥ २४८ ॥

( मं, कं, दां, हस्तिमदा । )

अथ स्वर्जिक्षारनाम ।—

स्वर्जिक्षारः स्वर्जिकश्च क्षारस्वर्जी सुखार्जिकः ।
सुवर्चिकः सुवर्ची च सुखवर्चा मुनिह्वयः ॥ २४९ ॥
स्वर्जिकः कटुरुष्णश्च तीक्ष्णो वातकफार्त्तिनुत् ।
गुल्माध्मानक्रिमीन् हन्ति व्रणजाठरदोषनुत् ॥ २५० ॥

( हिं साजीखार, कङ्कणखार । गो सार्जिक्षार, साजिमाटी । )

अथ लवणक्षारनाम ।—

लवणारं लवणोत्थं लवणासुरजञ्च लवणभेदश्च ।
जलजं लवणक्षारं लवणं च क्षारलवणञ्च ॥ २५१ ॥
लोणारक्षारमत्युष्णं तीक्ष्णं पित्तप्रवृद्धिदम् ।
क्षारं लवणमोषञ्च वातगुल्मादिदोषनुत् ॥ २५२ ॥

( मं, कं, लोणारखार । गो लोणारक्षार । )

अथ वज्रकनाम ।—

वज्रकं वज्रकक्षारं क्षारश्रेष्ठं विदारकम् ।
सारं चन्दनसारञ्च धूमोत्थं धूमजं गजाः ॥ २५३ ॥ *

* गजा इति अष्टसंख्येत्यर्थः ।

वज्रकं क्षारमत्युष्णं तीक्ष्णं क्षारञ्च रेचनम् ।
गुल्मोदरातिविष्टम्भ-शूलप्रशमनं सरम् ॥ २५४ ॥

( वज्रक्षार इति मालवे प्रसिद्धम् । )

अथ यवक्षारनाम ।—

यवक्षारः स्मृतः पाक्यो यवजो यवसूचकः ।
यवशूको यवाह्वश्च यवापत्यं यवाग्रजः ॥ ॥ २५५ ॥
यवक्षारः कटूष्णश्च कफवातोदरार्त्तिनुत् ।
आमशूलाश्मरीकृच्छ्र-विषदोषहरः सरः ॥ २५६ ॥

( मं, कं, गो यवक्षार । हिं यवक्षार, साजी, सोरा ।
तें यवक्षारमु । )

अथ सर्व्वक्षारनाम ।—

सर्व्वक्षारो बहुक्षारः समूहक्षारकस्तथा ।
स्तोमक्षारो महाक्षारो मलारिः क्षारमेलकः ॥ २५७ ॥
सर्व्वक्षारो ह्यतिक्षारश्चक्षुष्यो वस्तिशोधनः ।
गुदावर्त्तक्रिमिघ्नश्च मलवस्त्रविशोधनः ॥ २५८ ॥

( मं, कं, सज्जिखार । गो साबान । हिं साबुन् । )

अथ मायाफलनाम ।—

मायाफलं मायिफलञ्च मायिका
छिद्राफलं मायि च पञ्चनामकम् ।
मायाफलं वातहरं कटूष्णकम्
शैथिल्यसङ्कोचककेशकार्ष्ण्यदम् ॥ २५९ ॥

( मं माजफल । कं मायाफल । गो माजुफल, मायाफल । )

इत्थं नानाद्रव्यसम्भारनामग्रामव्याख्यातद्गुणाख्यानपूर्वम् ।
वर्गं वीर्य्यध्वस्तरोगोपसर्गं बुद्ध्वा वैद्यो विश्ववन्द्यत्वमीयात् ॥२६०॥*

साफल्याय किलेत्य यानि जनुषः कान्तारदूरान्तरात्
स्वौजःपात्रविचारणाय विपणिमध्यं समध्यासते ।
तेषामाश्रयभूमिरेष भणितः पण्यौषधीनां बुधै-
र्वर्गो द्रव्यगुणाभिधाननिपुणैः पण्यादिवर्गात्मना ॥ २६१ ॥†

---

* इत्थमिति।—इत्थम् अनेन प्रकारेण ये नाना नानाविधा द्रव्यसम्भाराः द्रव्यसमूहाः तेषां ये नामग्रामा नामसमूहाः तेषां या व्याख्या विवृतिः ; तथा—तद्गुणाः तेषां ये गुणाः, तेषाम् आख्यानं कथनं पूर्वः प्रथमं आदिरिति यावत् यस्मिन् तद् यथा तथा, वीर्य्येति वीर्य्येण स्वसामर्थ्येन निजशक्त्येति यावत् ध्वस्ताः प्रशमिता रोगाः, तेषां उपसर्गाश्च येन तं तादृशं वर्गं बुद्ध्वा विज्ञाय, वैद्यो भिषक् विश्ववन्द्यत्वं विश्वेषां सर्वेषां वन्द्यत्वं सर्वपूज्यत्वमित्यर्थः, ईयात् प्राप्नोतु । एतेराशिषि लिङ् ।

† साफल्यायेति।—यानि पण्यौषधानि जनुषः जन्मनः साफल्याय सफलतासम्पादनाय, किलेति प्रसिद्धौ, कान्तारदूरान्तरात् अतिशय-दूरवर्त्तिनः कान्तारप्रदेशात् एत्य आगम्य, स्वौजःपात्रविचारणाय स्वस्य ओजसः तेजसः यत् पात्रम् आधारः, तस्य विचारणाय विचारकरणाय विपणेः पण्यवीथिकायाः मध्यं "विपणिः पण्यवीथिका" इत्यमरः । समध्यासते अधितिष्ठन्ति विपणिमध्ये तिष्ठन्तीत्यर्थः । अत्र मध्यमिति "अधिशीङ्स्थासां कर्म्म" इति आधारे कर्म्मसंज्ञा । तेषां पण्यौषधीनां विक्रेयाणाम् औषधद्रव्याणां द्रव्यगुणाभिधाननिपुणैः द्रव्याणां ये गुणाः, तेषाम् अभिधानं कथनं तत्र निपुणैः कुशलैः द्रव्यगुणानामज्ञैरित्यर्थः।

य: सौम्येन सदाशयेन कलयन् दिव्यागमानां जनै-
र्दुर्ग्राहं महिमानमाशु नुदते स्वं जग्मुषां दुर्गतीः ।
वर्गः पिप्पलिकादिरेष नृहरेस्तस्येह शस्यात्मनो
नामग्रामशिखामणौ खलु कृतौ षष्ठः प्रतिष्ठामगात् ॥२६२॥*

इति श्रीनरहरिपण्डितविरचिते राजनिघण्टौ पिप्पल्यादिः
पण्यवर्गापरनामा षष्ठो वर्गः ।

---

बुधैः विशेषविकित्सकैः, पण्यादिवर्गात्मना पण्यादिवर्गस्वरूपेण, आश्रय-भूमिः आश्रयस्थानस्वरूपः, एष वर्गो भणितः कथितः ।

* यः सौम्येनेत्यादि ।—यः नृहरिः सौम्येन सुन्दरेण सदाशयेन सदन्तःकरणेन जनैः साधारणलोकैः दुर्ग्राहं दुर्ज्ञेयम् अबोध्यमिति यावत् । दिव्यागमानां दिव्यानां प्राणदायित्वाद् दिव्यत्वमिति भावः । आगमानाम् आयुर्वेदानां स्वं निजं महिमानं प्रभावं कलयन् ज्ञापयन् जग्मुषां जङ्गमानां प्राणिनामित्यर्थः । दुर्गतीः व्याधिजनिता व्यापदः, आशु द्रुतं नुदते नाशयति । तस्य नृहरेः नरसिंहस्य शस्यात्मनः शस्यात्मकस्य द्रव्यस्य ओषधस्येति शेषः । नामग्रामशिखामणौ नामसमूहानां चूडामणिस्वरूपे इह कृतौ रचनायाम्, एषः अयं पिप्पलिकादिः पिप्पलिकाभिध इत्यर्थः । षष्ठः वर्गः खलु निश्चितं प्रतिष्ठां समाप्तिं ख्यातिं वा अगात् प्राप ।

## अथ मूलकादिवर्गः ।

मूलकं पञ्चधा प्रोक्तं चतुर्द्धा शिग्रुरुच्यते ।
वंशो द्विर्वल्लो माकन्दो हरिद्रा वनजा तथा ॥ १ ॥
शृङ्गाटो भ्रमरच्छल्लो वन्यार्द्रकमथापरम् ।
रसोनो द्विविधः प्रोक्तः पलाण्डुश्च द्विधा मतः ॥ २ ॥
विंशत्येकोत्तरं मूलं शूरणं द्वन्दमुच्यते ।
आलूकसप्तकं चाथ प्रोक्ताश्चारण्यकन्दकाः ॥ ३ ॥
महिषी-हस्ति-कोलाश्च वाराही विष्णु धारिणी ।
द्विधा च नाकुली माला विदारीद्वयशाल्मली ॥ ४ ॥
चण्डालस्तैलकन्दश्च त्रिपर्णी पुष्करस्तथा ।
मुसली द्विविधा चाथ त्रिधा गुञ्जास्तथैव च ॥ ५ ॥
एषु नागकराह्वा च पत्रशाकमथोच्यते । *
वास्तुकं चुक्रकं चिल्ली त्रिविधं शिग्रुपत्रकम् ॥ ६ ॥
पालक्यराजशाकिन्यौ चतुर्द्धोपोदकी क्रमात् ।
कुणञ्जरः कुसुम्भाख्यः शताह्वा पत्रतण्डुली ॥ ७ ॥
राजिकाद्वयचाङ्गेरी घोलिका त्रिविधा मता ।
जी[illegible] गौर-सुवर्णाख्यः पुनर्नवा ॥ ८ ॥

---

* नागकराह्वा—नागाः अष्ट, करौ द्वौ, तेन अष्टाविंशतिसंख्यकं मूलशाकं कन्दशाकश्चेत्यर्थः ।

वसुकः फञ्जिकादिश्च मिश्रकोऽङ्ककराह्वयः । *
अतः परं च कुष्माण्डी कुम्भतुम्बी त्वलाबुका ॥ ९ ॥
भूतुम्बिका कलिङ्गश्च द्विधा कोशातकी तथा ।
पटोली मधुराख्या च मृगाक्षी दधिपुष्पिका ॥ १० ॥
शिम्बी च कारवल्ली च कर्कोटी स्वादुतुम्बिका ।
निष्पावी यवार्त्ताकी डङ्गरी खर्बुजा तथा ।
कर्कटी त्रपुसैर्वारुर्वालुकी चीनकर्कटी ॥ ११ ॥
चिर्भिटा च शशाण्डूली कुडुहुञ्ची मुनीक्षणैः । †
वेदभेदाः क्रमान्मूल-कन्दपत्रफलात्मकाः ॥ १२ ॥ ‡
शाकवर्गेऽत्र कथ्यन्ते मनोहरगुणाश्रयाः ।
एवं चतुर्विधं द्रव्यं बाणखं चन्द्रसंयुतम् ॥ १३ ॥ §

अथ मूलकनाम :—

मूलकं नीलकण्ठश्च मूलाह्वं दीर्घमूलकम् ।
भूक्षारं कन्दमूलं स्याद्धस्तिदन्तं सितं तथा ॥ १४ ॥
शङ्खमूलं हरित्पर्णं रुचिरं दीर्घकन्दकम् ।
कुञ्जरक्षारमूलश्च मूलस्यैते त्रयोदश ॥ १५ ॥

* अङ्ककराह्वयः,—अङ्कः शून्यं, करौ द्वौ, तेन विंशतिसंख्यकं पत्रशाकमित्यर्थः ।

† मुनीक्षणैः,—मुनयः सप्त, ईक्षणे द्वे, तेन सप्तविंशतिसंख्यकं फलशाकमित्यर्थः ।

‡ वेदभेदाः चतुर्विधप्रकाराः ।

§ बाणखं चन्द्रसंयुतं—पञ्चोत्तरशतसंख्यकं मूलादिचतुर्विधशाकमित्यर्थः ।

मूलकं तीक्ष्णमुष्णञ्च कटूष्णं ग्राहि दीपनम् ।
दुर्नामगुल्महृद्रोग-वातघ्नं रुचिदं गुरु ॥ १६ ॥

( हिं, दां, मूलो । मं, कं, तां, मूलङ्गि । तें मूलङ्गिचेट्टु ।
गौ मूला । )

अथ चाणाख्यमूलकनाम ।—

चाणाख्यमूलकं चान्यच्छालेयं विष्णुगुप्तकम् ।
स्थूलमूलं महाकन्दं कौटिल्यं मरुसम्भवम् ।
शालामर्कटकं मिश्रं ज्ञेयं चैव नवाभिधम् ॥ १७ ॥
चाणाख्यमूलकं सोष्णं कटुकं रुच्यदीपनम् ।
कफवातक्रिमीन् गुल्मं नाशयेद्ग्राहकं गुरु ॥ १८ ॥

( मं घोरमूला । कं दोडमूलङ्गि । गौ मूलाविशेष । )

अथ गृञ्जननाम ।—

गृञ्जनं शिखिमूलञ्च यवनेष्टञ्च वर्त्तुलम् ।
ग्रन्थिमूलं शिखाकन्दं कन्दं डिण्डीरमोदकम् ॥ १९ ॥
गृञ्जनं कटुकोष्णञ्च कफवातरुजापहम् ।
रुच्यं च दीपनं हृद्यं दुर्गन्धं गुल्मनाशनम् ॥ २० ॥

( मं सेठीमूल । कं चगिडक्रेयमूलङ्गि । हिं गाजर ।
गौ शालगम । )

अथ पिण्डमूलनाम ।—

पिण्डमूलं गृजाण्डञ्च पिण्डकं पिण्डमूलकम् ।
पिण्डमूलं कटूष्णं च गुल्मवातादिदोषनुत् ॥ २१ ॥

( गौ, मं, वाटुलामूला । कं वट्टमूलङ्गि । गजरमूलक इति
सर्वत्र प्रसिद्धम् । )

अथ बालमूलगुणाः।—

सोष्णं तीक्ष्णं च तिक्तं मधुरकटुरसं मूत्रदोषापहारि
श्वासार्शःकासगुल्म-क्षयनयनरुजा-नाभिशूलामयघ्नम्।
कण्ठ्यं बल्यं च रुच्यं मलविकृतिहरं मूलकं बालकं स्यात्
उष्णं जीर्णं च शोष-प्रदमुदितमिदं दाहपित्तास्रदायि॥ २२॥

अपि च।—

आमं संग्राहि रुच्यं कफपवनहरं पक्वमेतत्कटूष्णं
भुक्तेः प्राग्भक्षितं चेत्सपदि वितनुते पित्तदाहास्रकोपम्।
भुक्त्या सार्धन्तु जग्धं हितकरवलकृद्वेशवारेण तच्चेत् *
पक्वं हृद्रोगशूल-प्रशमनमुदितं शूलरुग्धारि मूलम्॥ २३॥

( गौ कचिमूला। )

अथ गर्ञ्जरनाम। ( गर्ञ्जनभेदः )—

गर्जरं पिङ्गमूलञ्च पीतकञ्च सुमूलकम्।
स्वादुमूलं सुपीतञ्च नारङ्गं पीतमूलकम्॥ २४॥
गर्जरं मधुरं रुच्यं किञ्चित्कटु कफापहम्।
आध्मानक्रिमिशूलघ्नं दाहपित्ततृषापहम्॥ २५॥

( गौ गाजरमूल। तें गर्जरि। मं, कं, वाट्लामूला। तां वट्टमूलङ्गि। )

[ इति मूलकानि ]।

---

वेशवारलक्षणं यथा ;—

"निरस्थि पिशितं पिष्टं स्विन्नं गुड़घृतान्वितम्।
कृष्णामरीचसंयुक्तं वेशवार इति स्मृतः॥" इति।

एतदुक्तेन द्रव्येण सह तत् मूलकं चेत् यदि पक्वं स्यात्, कार्य्यमित्येवं योजना।

अथ शिग्रुनाम ।—

शिग्रुर्हरितशाकश्च शाकपत्रः सुपत्रकः ।
उपदंशः क्षमादंशो ज्ञेयः कोमलपत्रकः ।
बहुमूलो दंशमूलस्तीक्ष्णमूलो दशाह्वयः ॥ २६ ॥
शिग्रुश्च कटुतिक्तोष्णस्तीक्ष्णो वातकफापहः ।
मुखजाड्यहरो रुच्यो दीपनो व्रणदोषनुत् ॥ २७ ॥

( वं पोतसेगुना । मं श्वेतसिनवशादच्छविननुगि । कं सुनगा ।
चिं सोच्छिञ्जना । दां मुङ्गिकाभाड़ । तां मोरुङ्गा ।
तें सुतुगचेट्टु सुनगो । गौ शजिना । )

अथ नीलशिग्रुनाम ।—

शोभाञ्जनो नीलशिग्रुस्तीक्ष्णगन्धो जनप्रियः ।
मुखामोदः कृष्णशिग्रुश्चक्षुष्यो रुचिरञ्जनः ॥ २८ ॥
शोभाञ्जनस्तीक्ष्णकटुः स्वादूष्णः पिच्छिलस्तथा ।
जन्तुवातार्त्तिशूलघ्नश्चक्षुष्यो रोचनः परः ॥ २९ ॥

( मं कालासेगुवा । कं करियनुग्गि । गौ नीलसजिना,
सेमगा । चिं सञ्जन । तें मुनगा । तां मोरुङ्ग ।
वम् शेगव, सेगत । )

अथ श्वेतशिग्रुनाम ।—

श्वेतशिग्रुः सुतीक्ष्णः स्यान्मुखभङ्गः सिताह्वयः ।
सुमूलः श्वेतमरिचो रोचनो मधुशिग्रुकः ॥ ३० ॥
श्वेतशिग्रुः कटुस्तीक्ष्णः शोफानिलनिकृन्तनः ।
अङ्गव्यथाहरो रुच्यो दीपनो मुखजाड्यनुत् ॥ ३१ ॥

( मं पाण्ढरा सेगुवा । कं बिलियनुग्गि । )

अथ रक्तशिग्रुनाम ।—

रक्तको रक्तशिग्रुः स्यान्मधुरो बहुलच्छदः ।
सुगन्धकेसरः सिंहो मृगारिश्च प्रकीर्त्तितः ॥ ३२ ॥
रक्तशिग्रुर्महावीर्य्यो मधुरश्च रसायनः ।
शोफाध्मानसमीरार्त्ति-पित्तश्लेष्मापसारकः ॥ ३३ ॥

( मं रक्तशेगुवा । कं केम्पिनेयनुग्गि । गो लालशजिना । )

अथ वंशनाम ।—

वंशो यवफलो वेणुः कर्मारस्तृणकेतुकः ।
मस्करः शतपर्वा च कण्टालुः कण्टको तथा ॥ ३४ ॥
महाबलो दृढग्रन्थिर्दृढपत्रो धनुद्रुमः ।
धनुष्यो दृढकाण्डश्च विज्ञेयो बाणभूमितः ॥ ३५ ॥ *
वंशौ त्वक्लौ कषायौ च किञ्चित्तिक्तौ च शीतलौ ।
मूत्रकृच्छ्रप्रमेहार्शः-पित्तदाहास्त्रनाशनौ ॥ ३६ ॥

( गौ, हिं, वाँश । मं वेलू । तें वेदुरु, वेन्नेमुक, वेन्नूशनि, वेत्तु । वम् माण्डगय । तां मनूगिल् । कं यरडुविदिरु । )

अथ रन्ध्रवंशनाम ।—

अन्यस्तु रन्ध्रवंशः स्यात् त्वक्सारः कीचकाह्वयः ।
मस्करो वादनीयश्च सुषिराख्यः षड़ाह्वयः ॥ ३७ ॥
विशेषो रन्ध्रवंशस्तु दीपनोऽजीर्णनाशनः ।
रुचिकृत्पाचनो हृद्यो शूलघ्नो गुल्मनाशनः ॥ ३८ ॥

( गो फाँफ्रा वाँश, तल्ता वाँश । )

---

* बाणेति ।—बाणाः पञ्च भूरेकस्तन्मितः, तेन पञ्चदशसंख्या अवगन्तव्या ।

अथ वंशाग्रनाम ( वंशाङ्कुरः ) ।—

वंशाग्रन्तु करीरो वंशाङ्कुरश्च यवफलाङ्कुरः ।
तस्य ग्रन्थिस्तु परुः पर्व तथा काण्डसन्धिश्च ॥ ३९ ॥
करीरं कटुतिक्ताम्लं कषायं लघु शीतलम् ।
पित्तास्रदाहकृच्छ्रघ्नं रुचिकृत् पर्व निर्गुणम् ॥ ४० ॥
( मं वास्ते । कं विदिरकहिल । गो वांशेर कोँड़ । )

अथ वेत्रो नाम ।—

वेत्रो वेतो योगिदण्डः सुदण्डो मृदुपर्वकः ।
वेत्रः पञ्चविधः शैत्य-कषायी भूतपित्तहृत् ॥ ४१ ॥
( मं वेत । कं वेत्त । गौ वेउड बाँश । मतान्तरे "वेतगाछ" । )

अथ माकन्दीनाम ।—

माकन्दी बहुमूला च मादनी गन्धमूलिका ।
एका विशदमूली च श्यामला च तथाऽपरा ॥ ४२ ॥
माकन्दी कटुका तिक्ता मधुरा दीपनी परा ।
रुच्याऽल्पवातला पथ्या न वर्षासु हिताऽधिका ॥ ४३ ॥
( हिं माद्रानी, माङ्गनी । मं मायिनि । कं मागिनी । )

अथ शोलीनाम ।—

शोली वनहरिद्रा स्यात् वनारिष्टा च शोलिका ।
शोलिका कटुगौल्या च रुच्या तिक्ता च दीपनी ॥४४॥
( मं साली । कं अडिविपका । गौ वनहलुद । "अरिसिनि"
इति कोङ्कणे प्रसिद्धा । )

अथ शृङ्गाटकनाम।—

शृङ्गाटकः शृङ्गरुहो जलवल्ली जलाश्रया।
शृङ्गकन्दः शृङ्गमूलो विषाणी सप्तनामकः॥ ४५॥
शृङ्गाटकः शोणितपित्तहारी लघुः सरो वृष्यतमो विशेषात्।
त्रिदोष-ताप-श्रम-शोफहारी रुचिप्रदो मेहनदार्ढ्यहेतुः॥४६॥

( मं सिङ्घाडे। हिं सिङ्घाड़ा। तें परिकेगड्डु। गौ पानिफल। )

अथ भृङ्गाह्वानाम।—

भृङ्गाह्वा भ्रमरच्छल्ली भ्रमरा भृङ्गमूलिका।
भृङ्गच्छल्ली कटूष्णा स्यात् तिक्ता दीपनरोचनी॥ ४७॥

( मं भमरमाली। कं उम्पुशक्के। "अड्वीओंल"
इति कोङ्कणी प्रसिद्धा। )

अथ पेऊनाम।—

पेऊर्वनार्द्रका प्रोक्ता वनजाऽरण्यजार्द्रका।
पेऊस्तु कटुकाऽम्ला च रुचिकृद्वल्यदीपनी॥ ४८॥

( मं पेऊ। कं केट्टाल्ल। )

अथ रसोननाम।—

रसोनो लशुनोऽरिष्टो म्लेच्छकन्दो महौषधम्।
भूतघ्नश्चोग्रगन्धश्च लशुनः शीतमर्दकः॥ ४९॥
रसोनोऽम्लरसोनः स्यात् गुरूष्णः कफवातनुत्।*

* अम्लरसेन ऊनः हीनः; अम्लवर्जितपञ्चरसवान् इति भावः। तदुक्तं,—"पञ्चभिश्च रसैर्युक्तो रसेनाम्लेन वर्जितः।
तस्माद्रसोन इत्युक्तो द्रव्याणां गुणवेदिभिः॥" इति।

अरुचिक्रिमिहृद्रोग-शोफघ्नश्च रसायनः ॥ ५० ॥

अथ श्वेतरसोनगुणाः।—

रसोन उष्णः कटुपिच्छिलश्च स्निग्धो गुरुः स्वादुरसोऽतिबल्यः।
वृष्यश्च मेधास्वरवर्णचक्षुर्भग्नास्थिसन्धानकरः सुतीक्ष्णः ॥ ५१ ॥

( मं पाण्ढरा लसण। कं विलियबेल्लुल्लि। तां वल्लइपाण्ड्
तें तेल्लबुल्लि। हिं लसून। गौ रसुन। )

अथ गृञ्जननाम। ( रसोनभेदः )।—

रसोनोऽन्यो महाकन्दो गृञ्जनो दीर्घपत्रकः।
पृथुपत्रः स्थूलकन्दो यवनेष्टो बले हितः ॥ ५२ ॥
गृञ्जनस्य मधुरं कटु कन्दं नालमप्युपदिशन्ति कषायम्।
पत्रसञ्चयमुशन्ति च तिक्तं सूरयो लवणमस्थि वदन्ति ॥ ५३ ॥

अथ रक्तरसोनगुणाः।—

हृद्रोग-जीर्णज्वर-कुक्षिशूल-विबन्धगुल्मारुचिकासशोफान्।
दुर्नाम-कुष्ठानिलसादजन्तु-कफामयान् हन्ति महारसोनः ॥५४॥

( मं लोह्विवोलुलसण। कं बेम्पिनबेल्लुल्लि। )

अथ पलाण्डुनाम। —

पलाण्डुस्तीक्ष्णकन्दश्च उष्णो च मुखदूषणः।
शूद्रप्रियः क्रिमिघ्नश्च दीपनो मुखगन्धकः ॥ ५५ ॥
बहुपत्रो विश्वगन्धो रोचनो रुद्रसंज्ञकः। *
श्वेतकन्दश्च वत्रैको हारिद्रोऽन्य इति द्विधा ॥ ५६ ॥
पलाण्डुः कटुको बल्यः कफपित्तहरो गुरुः।

---

* रुद्रेति एकादशसंख्या बोद्धव्या

वृष्यश्च रोचनः स्निग्धो वान्तिदोषविनाशनः ॥ ५७ ॥

( गौ पेँयाज । हिं पियाज । मं श्वेतकान्दा । कं उल्लि ।

तें नीरुल्लिचेट्टु । तां वेङ्गयम । वं कान्द ।

दां वुल्लिगड्डुलु । )

अथ राजपलाण्डुनाम ।—

अन्यो राजपलाण्डुः स्यात् यवनेष्टो नृपाह्वयः ।

राजप्रियो महाकन्दो दीर्घपत्रश्च रोचकः ॥ ५८ ॥

नृपेष्टो नृपकन्दश्च महाकन्दो नृपप्रियः ।

रक्तकन्दश्च राजेष्टो नामान्यत्र त्रयोदश ॥ ५९ ॥

पलाण्डुर्नृपपूर्वः स्यात् शिशिरः पित्तनाशनः ।

कफहृद्दीपनश्चैव बहुनिद्राकरस्तथा ॥ ६० ॥

( मं लोहिवीउल्लि, रक्तकान्दा । कं कॆम्पिनउल्लि ।

तें रायउल्लि । गौ लाल्पेँयाज । )

तथा च:—

वक्ष्यते नृपपलाण्डुलक्षणं क्षारतीक्ष्णमधुरो रुचिप्रदः ।

कण्ठशोषशमनोऽतिदीपनः श्लेष्मपित्तशमनोऽतिबृंहणः ॥६१॥

अथ कन्दाः ।—

अथ शूरणनाम ।—

काण्डूलः शूरणः कन्दी सुकन्दी स्थूलकन्दकः ।

दुर्नामारिः सुवृत्तश्च वातारिः कन्दशूरणः ॥ ६२ ॥

अर्शोघ्नस्तीव्रकन्दश्च कन्दार्हः कन्दवर्द्धनः ।

बहुकन्दो रुच्यकन्दः शूरकन्दस्तु षोड़शः ॥ ६३ ॥

शूरणः कटुकरुच्यदीपनः पाचनः क्रिमिकफानिलापहः ।
श्वासकासवमनार्शसां हरः शूलगुल्मशमनोऽस्रदोषकृत् ॥६४॥

( भं सुरण। कं सूरणा। गो ओल्। )

अथ सितशूरणनाम।—

सितशूरणस्तु वन्यो वनकन्दोऽरण्यशूरणो वनजः ।
स श्वेतशूरणाख्यो वनकन्दः कण्डूलश्च समाख्यः ॥ ६५ ॥

श्वेतशूरणको रुच्यः कटूष्णः क्रिमिनाशनः ।
गुल्मशूलादिदोषघ्नः स चारोचकहारकः ॥ ६६ ॥

( भं पाण्ढरा सूरण। कं बिलियसूरण।
गो शादा ओल, वन ओल। )

अथ मुखालुनाम।—

मुखालुर्मण्डपारोहो दीर्घकन्दः सुकन्दकः ।
स्थूलकन्दो महाकन्दः स्वादुकन्दश्च सप्तधा ॥ ६७ ॥

मुखालुकः स्यान्मधुरः शिशिरः पित्तनाशनः ।
रुचिकृद्वातकृच्चैव दाहशोषतृषापहः ॥ ६८ ॥

( गो मिष्टि आलु। )

अथ पिण्डालुनाम।—

पिण्डालुः स्यात् ग्रन्थिलः पिण्डकन्दः
कन्दग्रन्थी रोमशो रोमकन्दः ।
रोमालुः स्यात्सोऽपि ताम्बूलपत्रो
लालाकन्दः पिण्डकोऽयं दशाह्वः ॥ ६९ ॥

पिण्डालुर्मधुरः शीतो मूत्रकृच्छ्रामयापहः ।

दाहशोषप्रमेहघ्नो वृष्यः सन्तर्पणो गुरुः ॥ ७० ॥

( मं पेण्डालु । कं विहियदैण्डल । उत्० घराश्रालु । हिं पेड़ालु । गौ द्दातिखोजा आलु, "चुवड़ि" इति केचित् । )

अथ रक्तपिण्डालुनाम । –

अन्यस्तु रक्तपिण्डालू रक्तालू रक्तपिण्डकः ।
लोहितो रक्तकन्दश्च लोहितालुः षड़ाह्वयः ॥ ७१ ॥
रक्तपिण्डालुकः शीतो मधुराम्लः श्रमापहः ।
पित्तदाहापहो वृष्यो बलपुष्टिकरो गुरुः ॥ ७१ ॥

( मं रक्तालु ; कं केम्पिनदैण्डल । हिं रक्तारु, रुजण्डा, रक्तालु । तां यामस्कोल्लम् । गौ लाल पिण्डो आलु । )

अथ कासालुनाम ।—

कासालुः कासकन्दश्च कन्दालुश्चालुकश्च सः ।
आलुर्विशालपत्रश्च पत्रालुश्चेति सप्तधा ॥ ७३ ॥
कासालुरुग्रकण्डूति-वातश्लेष्मामयापहः ।
अरोचकहरः स्वादुः पथ्यो दीपनकारकः ॥ ७४ ॥

( मं कासालु । खम्बरे इति कोङ्कणे प्रसिद्धः । गौ खाम् आलु । )

अथ फोण्डालुनाम ।—

फोण्डालुर्लोहितालुश्च रक्तपत्रो मृदुच्छदः ।
फोण्डालुः श्लेष्मवातघ्नः कटूष्णो दीपनश्च सः ॥ ७५ ॥
( मं फोण्डालु । कं वोद्दगेणसु । कोङ्कणे तन्नामे प्रसिद्धः । )

अथ पाणियालुनाम ।—

पाणियालुर्जलालुः स्यात् अनुपालुरवालुकः ।

पाण्डियालुस्त्रिदोषघ्नः सन्तर्पणकरः परः ॥ ७६ ॥

( मं पार्णियालु। कां नौकगेणसु। )

अथ नीलालुनाम।—

नीलालुरसितालुः स्यात् कृष्णालुः श्यामलालुकः।
नीलालुर्मधुरः शीतः पित्तदाहश्रमापहः ॥ ७७ ॥

( मं नोलालु। कां करियगणेसु। )

अथ महिषीकन्दनाम।—

शुभ्रालुर्महिषीकन्दो लुलायकन्दश्च शुक्लकन्दश्च।
सर्पाख्यो वनवासी विषकन्दो नीलकन्दोऽन्यः ॥ ७८ ॥

कटूष्णो महिषीकन्दः कफवातामयापहः।
मुखजाड्यहरो रुच्यो महासिद्धिकरः सितः ॥ ७९ ॥

( यम्मेगड्डे इति अनूपे प्रसिद्धः। गौ शांक आलु। )

अथ हस्तिकन्दनाम।—

हस्तिकन्दो हस्तिपत्रः स्थूलकन्दोऽतिकन्दकः।
बृहत्पत्रोऽतिपत्रश्च हस्तिकर्णः सुकर्णकः ॥ ८० ॥

त्वग्दोषारिः कुष्ठहन्ता गिरिवासी नगाश्रयः।
गजकन्दो नागकन्दो ज्ञेयो द्विसप्तनामकः ॥ ८१ ॥ *

हस्तिकन्दः कटूष्णः स्यात् कफवातामयापहः।
त्वग्दोषश्रमहा कुष्ठ-विष-वीसर्पनाशकः ॥ ८१ ॥

( मं हस्तिकन्द। कं मल्लिरक्तसियगड्डे। कोङ्कणे प्रसिद्धः।
गौ हांसावड़मूला। )

* द्विगुणिताः सप्त इति चतुर्दशसंख्या ज्ञेया।

अथ कोलकन्दनाम ।—

कोलकन्दः क्रिमिघ्नश्च पञ्जलो वस्त्रपञ्जलः ।
पुटालुः सुपुटश्चैव पुटकन्दश्च सप्तधा ॥ ८३ ॥
कोलकन्दः कटुश्चोष्णः क्रिमिदोषविनाशनः ।
वान्तिविच्छर्दिशमनो विषदोषनिवारणः ॥ ८४ ॥

( मं कोलकन्द । कं कम्पुटगेड्डे । "पुटालु" इति काश्मीरे ख्यातः । )

अथ वाराहीनाम ।—

स्याद्वाराही शूकरी क्रोड़कन्या
गृष्टिर्विष्वक्सेनकान्ता वराही ।
कौमारी स्याद्ब्रह्मपुत्री त्रिनेत्रा
क्रोड़ा कन्या गृष्टिका माधवेष्टा ॥ ८५ ॥
शूकरकन्दः क्रोड़ो वनवासी कुष्ठनाशनो वन्यः ।
अमृतश्च महावीर्य्यो महौषधिः शबरकन्दश्च ॥ ८६ ॥
वराहकन्दो वीरश्च ब्राह्मकन्दः सुकन्दकः ।
वृद्धिदो व्याधिहन्ता च वसुनेत्रमिताह्वयाः ॥ ८७ ॥ *
वाराही तिक्तकटुका विषपित्तकफापहा ।
कुष्ठमेहक्रिमिहरा वृष्या बल्या रसायनी ॥ ८८ ॥

( मं वाराहीकन्द । कं हन्दिगेड्डे । तें बाह्मदण्डिचेट्टु, पाचितीके, नेलताड़िचेट्टु । वम्° डुकरकन्द । हिं गेठी । गौ चुर्वाड़ आलु । समस्तस्थूलपर्वतेऽस्याः उत्पत्तिः । )

---

* वसुः अष्टसंख्या नेत्रञ्च द्विसंख्या तेन अष्टाविंशतिसंख्या इति बोध्यम् ।

अथ विष्णुकन्दनाम ।—

विष्णुकन्दो विष्णुगुप्तः सुपुष्टो बहुसम्पुटः ।
जलवासो बृहत्कन्दो दीर्घवृन्तो हरिप्रियः ॥ ८९ ॥
विष्णुकन्दस्तु मधुरः शिशिरः पित्तनाशनः ।
दाहशोफहरो रुच्यः सन्तर्पणकरः परः ॥ ९० ॥

( मं विष्णुकन्द ; कोङ्कणे प्रसिद्धः । )

अथ धारिणीकन्दनाम ।—

धारिणी धारणीया च वीरपत्नी सुकन्दकः ।
कन्दालुर्वनकन्दश्च कन्दाद्यो दण्डकन्दकः ॥ ९१ ॥
मधुरो धारिणीकन्दः कफपित्तामयापहः ।
वक्त्रदोषप्रशमनः कुष्ठकण्डूतिनाशनः ॥ ९२ ॥

( मं धारणीकन्द । कं नेलगड्डे । अनूपे प्रसिद्धः । )

अथ नाकुलीनाम ।—

नाकुली सर्पगन्धा च सुगन्धा रक्तपत्रिका ।
ईश्वरी नागगन्धा चाप्यहिभुक् स्वरसा तथा ।
सर्पादनी व्यालगन्धा ज्ञेया चेति दशाह्वया ॥ ९३ ॥

अथ महासुगन्धानाम । ( नाकुलीभेदः ) ।—

अन्या महासुगन्धा च सुवहा गन्धनाकुली ।
सर्पाक्षी फणिहन्त्री च नकुलाख्याऽहिभुक् च सा ॥ ९४ ॥
विषमर्दनिका चाहि-मर्दिनी विषमर्दिनी ।
महाहिगन्धाऽहिलता ज्ञेया सा द्वादशाह्वया ॥ ९५ ॥
नाकुलीयुगलं तिक्तं कटूष्णं च त्रिदोषजित् ।

अनेकविषविध्वंसि किञ्चिच्छेष्ठं द्वितीयकम् ॥ ९६ ॥

(मं नाकुलीद्वय । कं विषमुङ्गरोद्वय । हिं चन्द्रा । तें सर्पचिचेट्टु, पद्मचेट्टु । गौ नायि । )

अथ मालाकन्दनाम ।—

अथ मालाकन्दः स्यादालिकन्दश्च पङ्क्तिकन्दश्च ।
त्रिशिखदला ग्रन्थिदला कन्दलता कीर्त्तिता षोढ़ा ॥ ९७ ॥ *
मालाकन्दः सुतीक्ष्णः स्यात् गण्डमालाविनाशकः ।
दीपनो गुल्महारश्च वातश्लेष्मापकर्षकृत् ॥ ९८ ॥

( मं दावशियगड् । कं करियगोलि । )

अथ विदारिकानाम ।—

विदारिका स्वादुकन्दा सिता शुक्ला शृगालिका ।
विदारी वृष्यकन्दा च विड़ाली वृष्यवल्लिका ॥ ९९ ॥
भूकूष्माण्डी स्वादुलता गजेष्टा वारिवल्लभा ।
ज्ञेया कन्दफला चेति मनुसंख्याह्वयां मता ॥ १०० ॥ †
विदारी मधुरा शीता गुरुः स्निग्धाऽस्रपित्तजित् ।
ज्ञेया च कफकृत्पुष्टि-बल्या वीर्य्यविवर्द्धनी ॥ १०१ ॥

( मं भूयिकोंहले । कं नेलकुम्बल । तें मट्टपलतिग । उत्० भूइकखाड़ । वम्० भूमिकोहले । हिं विलाइकन्द, गेठी । गो भूँइकुमड़ा । )

---

* षोढ़ेत्यव्ययं प्रकारार्थे धाच्प्रत्ययः, षट्प्रकारा इत्यर्थः ।

† मनुसंख्या चतुर्दश एव बोद्धव्या ।

अथ क्षीरविदारीनाम ।—

अन्या क्षीरविदारी स्यादिक्षुगन्धेक्षुवल्लरी ।
इक्षुवल्ली क्षीरकन्दः क्षीरवल्ली पयस्विनी ॥ १०२ ॥
क्षीरशुक्ला क्षीरलता पयःकन्दा पयोलता ।
पयोविदारिका चेति विज्ञेया द्वादशाह्वया ॥ १०३ ॥
ज्ञेया क्षीरविदारी च मधुराम्ला कषायका ।
तिक्ता च पित्तशूलघ्नी मूत्रमेहामयापहा ॥ १०४ ॥
क्षीरकन्दो द्विधा प्रोक्तो विनालस्तु सनालकः ।
विनालो रोगहर्त्ता स्याद्वयःस्तम्भो सनालकः ॥ १०५ ॥
( दां क्षीरकन्द । मं श्वेत भूँइकोंहला । गो शादा भूँइकुमड़ा । )

अथ शाल्मलीकन्दनाम ।—

शाल्मलीकन्दकश्चाथ विज्जुलो वनवासकः ।
वनवासी मलघ्नश्च मलहन्ता षड़ाह्वयः ॥ १०६ ॥
मधुरः शाल्मलीकन्दो मलसंग्रहरोधजित् ।
शिशिरः पित्तदाहार्त्ति-शोषसन्तापनाशनः ॥ १०७ ॥
( १ं शाल्मरीकन्दः । गौ शिमुलगाछेर मूल । )

अथ चण्डालकन्दनाम ।—

प्रोक्तश्चण्डालकन्दः स्यादेकपत्रो द्विपत्रकः ।
त्रिपत्रोऽथ चतुष्पत्रः पञ्चपत्रश्च भेदतः ॥ १०८ ॥
चण्डालकन्दो मधुरः कफपित्तास्रदोषजित् ।
विषभूतादिदोषघ्नो विज्ञेयश्च रसायनः ॥ १०९ ॥
( मं चण्डालकन्द । कं मादगीगट्टे । )

अथ तैलकन्दनाम ।—

अथ तैलकन्द उक्तो द्रावककन्दस्तिलाङ्कितदलश्च ।
करवीरकन्दसंज्ञो ज्ञेयस्तिलचित्रपत्रको बाणैः ॥ ११० ॥ *
लोहद्रावो तैलकन्दः कटूष्णो वातापस्मारापहारी विषारिः ।
शोफघ्नः स्याद्बन्धकारी रसस्य द्रागेवासौ देहसिद्धिं विधत्ते ॥ १११ ॥
( दां तैलकन्द । मं सूञ्जिसुर्दिंगगड्डे । )

अथ त्रिपर्णीनाम ।—

अश्वारिपत्रसङ्काशः तिलविन्दुसमन्वितः ।
संस्निग्धाधस्थभूमिस्थः तिलकन्दोऽतिविस्तृतः ॥ ११२ ॥
त्रिपर्णिका बृहत्पत्रो छिन्नग्रन्थिनिका च सा ।
कन्दालः कन्दबहलाऽप्यम्लवल्ली विषापहा ॥ ११३ ॥
त्रिपर्णी मधुरा शीता श्वासकासविनाशनी ।
पित्तप्रकोपशमनी विषव्रणहरा परा ॥ ११४ ॥
( कां तिलपर्णी । मरेङ्गल इति अनूपे प्रसिद्धा । गौ तिलकन्द । )

अथ पुष्करकन्दनामगुणाः ।—

( एतत्पर्य्यायादयस्तु पिप्पल्यादिवर्गे (१५२) श्लोके द्रष्टव्याः । )

अथ मुसलीकन्दनाम ।—

मुसली तालमूली च सुवहा तालमूलिका ।
गोधापदी हेमपुष्पी भूताली दीर्घकन्दिका ॥ ११५ ॥
मुसली मधुरा शीता वृष्या पुष्टिबलप्रदा ।
पिच्छिला कफदा पित्त-दाहश्रमहरा परा ॥ ११६ ॥

* बाणैः पञ्चसङ्ख्याभिःपत्रैश्चितः, पञ्चसंख्यक इत्यर्थः ।

मुसली स्याद्विधा प्रोक्ता श्वेता चापरसंज्ञका।
श्वेता स्वल्पगुणोपेता अपरा च रसायनी ॥ ११७ ॥

( दां काश्मोरे च मुसलीकन्द। कं देलग। तें निलप्रलिगड्डलु, नेलतारि। गौ तलुर, तालमूली। )

अथ गुच्छाम्लकन्दनाम।—

गुच्छाम्लकन्दस्तवकाम्लकन्दको
गुलुच्छकन्दश्च विघण्टिकाभिधः।
गुलुच्छकन्दो मधुरः सुशीतलो
वृष्यप्रदस्तर्पणदाहनाशनः ॥ ११८ ॥

( मं कुलोद्दालु। कं सुकुलियागड्डे। तैलसाक इति लोके।

अथ नागाह्वानाम। ( लक्ष्मणाकन्द )।—

लक्ष्मणा पुत्रकन्दा च पुत्रदा नागिनी तथा।
नागाह्वा नागपत्री च तुलिनी मञ्जिका च सा।
अस्रविन्दुच्छदा चैव सुकन्दा दशधाह्वया ॥११९ ॥
लक्ष्मणा मधुरा शीता स्त्रीवन्ध्यत्वविनाशनी।
रसायनकरी बल्या त्रिदोषशमनी परा ॥ १२० ॥

( वम्० लक्ष्मणाकन्द। कं पुरुषगड्डे। गौ लक्ष्मणामूल )

अथ करजोड़िनाम।—

हस्तपर्य्यायपूर्वस्तु जोड़िर्वैद्यवरैः स्मृतः।
करजोड़िरिति ख्यातो रसबन्धादिवश्यकृत् ॥ १२१ ॥

( हिं, मं हाताजोड़ि। )

अथ पत्रशाकाः ।—

अथ वास्तुकशाकनाम ।—

वास्तुकं वास्तु वास्तूकं वस्तुकं हिलमोचिका ।
शाकराजो राजशाकश्चक्रवर्त्तिश्च कीर्त्तितः ॥ १२२ ॥
वास्तुकं तु मधुरं सुशीतलं क्षारमीषदम्लं त्रिदोषजित् ।
रोचनं ज्वरहरं महार्शसां नाशनञ्च मलमूत्रशुद्धिकृत् ॥ १२३ ॥

( मं चक्रवत । कं चक्रवत्त । हिं बोथुया । गौ वेतो शाक । )

अथ चुक्रनाम ।— *

चुक्रं तु चुक्रवास्तूकं लिकुचं चाम्लवास्तुकम् ।
दलाम्लमम्लशाकाख्यमम्लादि हिलमोचिका ॥ ॥ १२४ ॥
चुक्रं स्यादम्लपत्रन्तु लघूष्णं वातगुल्मनुत् ।
रुचिकृद्दीपनं पथ्यं ईषत्पित्तकरं परम् ॥ १२५ ॥

( मं चुकावडिलि । कं आम्बवतो । तें चुलिचकोत ।
गौ चुका वेतो । )

अथ चिल्लीनाम ।—

पलाशलोहिता चिल्ली वास्तुका चिल्लिका च सा ।
मृदुपत्री क्षारदला क्षारपत्री तु वास्तुकी ॥ १२६ ॥
चिल्ली वास्तुकतुल्या च सक्षारा श्लेष्मपित्तनुत् ।
प्रमेहमूत्रकृच्छ्रघ्नी पथ्या च रुचिकारिणी ॥ १२७ ॥

( मं चिल्ली । कं चिल्लिका । हिं चिलारी । )

---

* रलयोरभेदं मत्वा केचित् चुक्रकमित्यपि पठन्ति ।

अथ श्वेतचिल्ली ।—

श्वेतचिल्ली तु वास्तूको सुपथ्या श्वेतचिल्लिका ।
सितचिल्ल्युपचिल्ली च ज्वरघ्नी क्षुद्रवास्तुकी ॥ १२८ ॥
श्वेतचिल्ली सुमधुरा क्षारा च शिशिरा च सा ।
त्रिदोषशमनी पथ्या ज्वरदोषविनाशनी ॥ १२९ ॥

( मं वाशुवा । कं बिलियचिल्लिके । वम्० लघुचाकवत् ।
गौ शग्दा वेतोशाक । )

अथ शुनकचिल्लीनाम ।—

अन्या शुनकचिल्ली स्यात्क्षुचिल्ली श्वानचिल्लिका ।
श्वचिल्ली कटुतीक्ष्णा च कण्डूतिव्रणहारिणी ॥ १३० ॥

( मं सूणीचिल्लि । कं नायचिल्लिके । )

अथ शिग्रुपत्रगुणाः ।—

शिग्रुपत्रभवं शाकं रुच्यं वातकफापहम् ।
कटूष्णं दीपनं पथ्यं क्रिमिघ्नं पाचनं परम् ॥ १३१ ॥

मं सेगुपत्र । कं नुग्गियपलै, छल्लियपने । गौ सजिनाशाक । )

अथ पालक्यनाम ।—

पालक्यं तु पलक्यायां मधुरा क्षुरपत्रिका ।
सुपत्रा स्निग्धपत्रा च ग्रामीणा ग्राम्यवल्लभा ॥ १३२ ॥
पालक्यमीषत्कटुकं मधुरं पथ्यशीतलम् ।
रक्तपित्तहरं ग्राहि श्रेयं सन्तर्पणं परम् ॥ १३३ ॥

( मं पालेक्यशाक । हिं पलकी । गौ पालङ्शाक । )

अथ राजशाकिनीनाम ।—

राजाभिधानपूर्वा तु नगाह्वा चापरेण वा ।

राजाद्रिः स्याद्राजगिरिर्ज्ञातव्या राजशाकिनी ॥ १३४ ॥
राजशाकिनिका रुच्या पित्तघ्नी शीतला च सा ।
सैवातिशीतला रुच्या विज्ञेया स्थूलशाकिनी ॥ १३५ ॥
( मं राजगिरि । कं डीलगेदोनि । तें एरडु । )

अथ उपोदकीनाम ।—

उपोदकी कलम्बी च पिच्छिला पिच्छिलच्छदा ।
मोहिनी मदशाकश्च विशालाद्या ह्युपोदकी ॥ १३६ ॥
उपोदकी कषायोष्णा कटुका मधुरा च सा ।
निद्राऽऽलस्यकरी रुच्या विष्टम्भश्लेष्मकारिणी ॥ १३७ ॥
( म माइनी, रुद्रवेलि, राजगिरा, मयाळा, खण्डपालक्य ।
कं हेवूलसले । गौ वड़ पुंइशाक । )

अथ क्षुद्रोपोदकीनाम ।—

उपोदक्यपरा क्षुद्रा सूक्ष्मपत्रा तु मण्डपी ।
रसवीर्य्यविपाकेषु सदृशी पूर्वया स्वयम् ॥ १३८ ॥
( मं साव्हिवेलि । कं करिग्रवलिवसले । गो छोट पुंइ । )

अथ वनजोपोदकीनाम ।—

उपोदकी तृतीया च वन्यजा वनजाह्वया ।
वनजोपोदकी तिक्ता कटूष्णा रोचनी च सा ॥ १३९ ॥
( मं रानवेलि । कं कावसले । )

अथ मूलपोतीनाम । ( उपोदकीभेदः ) ।

मूलपोती क्षुद्रवल्ली पोतिका क्षुद्रपोतिका ।
क्षुपोपोदकनाम्नी च वल्लिः शाकटपोतिका ॥ १४० ॥

मूलपोती त्रिदोषघ्नी वृष्या बल्या लघुश्च सा।
बलपुष्टिकरी रुच्या जठरानलदीपनी ॥ १४१ ॥
( मं मालविर्रलि। कं तोण्टदवसले। )

अथ कुणञ्जरगुणाः।—

कुणञ्जरस्त्रिदोषघ्नो मधुरो रुच्यदीपकः।
ईषत्कषायः संग्राही पित्तश्लेष्मकरो लघुः ॥ १४२ ॥
( मं कुणजिरु। कं गोरजेयपलेय। गो वनवेतुया। )

अथ कौसुम्भशाकगुणाः।—

कौसुम्भशाकं मधुरं कटूष्णं विण्मूत्रदोषापहरं मदघ्नम्।
दृष्टिप्रसादं कुरुते विशेषाद्रुचिप्रदं दीप्तिकरं च वह्नेः ॥ १४३ ॥
( मं कुसुम्भ। कं कसुम्बेयपल्ले। गो कुसुमशाक। )

अथ शतपुष्पादलगुणाः।—

शतपुष्पादलं सोष्णं मधुरं गुल्मशूलजित्।
वातघ्नं दीपनं पथ्यं पित्तहृद्रुचिदायकम् ॥ १४४ ॥
( कं सेउप। कं सब्बशिगे। गौ शुल्फाशाक। )

अथ पत्रतण्डुलीगुणाः।—

तण्डुलीयकदलं हिममर्शःपित्तरक्तविषकासविनाशि।
ग्राहकं च मधुरं च विपाके दाहशोषशमनं रुचिदायि ॥१४५॥
( मं तण्डुलीपत्र। कं किरुकुसाले। )

अथ राजिकापत्रगुणाः।—

कटूष्णं राजिकापत्रं क्रिमिवातकफापहम्।
कण्ठामयहरं स्वादु वह्निदीपनकारकम् ॥ १४६ ॥
( मं मट्टुरीपत्र। कं सासवेयतोप्पलु। गौ राइसर्षे शाक। )

अथ सार्षपपत्रगुणाः ।—

सार्षपं पत्रमत्युष्णं रक्तपित्तप्रकोपनुत् ।
विदाहि कटुकं स्वादु शुक्रहृद्रुचिदायकम् ॥ १४७ ॥

( मं सिरसोपत्र । कं विलियसासवेय । तें ताथलु ।
गौ सरिषाशाक । )

अथ चाङ्गेरीगुणाः ।—

चाङ्गेरीशाकमत्युष्णं कटु रोचनपाचनम् ।
दीपनं कफवातार्शः-संग्रहण्यतिसारजित् ॥ १४८ ॥

( मं आम्बवती । कं पुलुम्बुगिसे । हिं चौपतिया ।
गौ आमरुलशाक । )

अथ घोलीनाम ।—

घोला च घोलिका घोली कलन्दुः कवलालुकम् ॥ १४९ ॥

अथ क्षेत्रजघोलिकागुणाः ।—

क्षेत्रजं लवणं रुच्यमम्लं वातकफापहम् ॥ १५० ॥

( मं रोतोचोघालि । कं केप्यगोलि । )

अथ आरामघोलिकागुणाः ।—

आरामघोलिका चाम्ला रूक्षा रुच्याऽनिलापहा ।
पित्तश्लेष्मकरी चान्या सूक्ष्मा जीर्णज्वरापहा ॥ १५१ ॥

( मं मालावीघोलि, साङ्गोघोलि । कं तोयडगोलि, किर्र्गोलि । )

अथ जीवशाकनाम ।—

जीवन्तो रक्तनालश्च ताम्रपत्रः सनालकः ।
शाकवीरस्तु मधुरो जीवशाकश्च भेषकः ॥ १५२ ॥

जीवशाकः सुमधुरो बृंहणो वस्तिशोधनः ।
दीपनः पाचनो बल्यो वृष्यः पित्तापहारकः ॥ १५३ ॥
( इं जीवशाक । खोषरा इति लोके । )

अथ गौरसुवर्णशाकनाम ।—

गौरसुवर्णं स्वर्णं सुगन्धिकं भूमिजं च वारिजं च ।
ह्रस्वं च गन्धशाकं कटुशृङ्गाटञ्च वर्णशाकाङ्कः ॥ १५४ ॥
गौरसुवर्णं शिशिरं कफपित्तज्वरापहम् ।
पथ्यं दाहरुचिभ्रान्ति-रक्तश्रमहरं परम् ॥ १५५ ॥
( मं गौरसुवर्णशाक । चित्रकूटदेशे प्रसिद्धः । )

अथ पुनर्नवावसुकयोः शाकगुणाः ।—

वर्षाभूवसुकौ श्लेष्म-वह्निमान्द्यानिलापहौ ।
पाके रूक्षतरौ गुल्म-प्लीहशूलापहारकौ ॥ १५६ ॥
( मं घेण्टुल, वसो । कं वेल्लडकिलु । गो श्वेतपुष्पाशाक
ओ वकफुलेर पाता । )

अथ फञ्ज्यादिपञ्चकनामगुणाः ।—

फञ्जिका जीवनी पद्मा तर्कारी चुचुकः पृथक् ।
वातामयहरं ग्राहि दीपनं रुचिदायकम् ॥ १५७ ॥
फञ्ज्यादिपञ्चकं भेण्डा कुणञ्जस्त्रिपुटस्तथा ।
इत्यादि वनपत्राणां शाकमेकत्र योजितम् ॥ १५८ ॥
दीपनं पाचनं रुच्यं बलवर्णविधायकम् ।
त्रिदोषशमनं पथ्यं ग्राहि वृष्यं सुखावहम् ॥ १५९ ॥
( मं आम्भोरि । कं वेरकेयपल्लेय । )

अथ मिश्रकशाकनामगुणाः ।—

( अस्य पर्य्यायादयश्चाणाख्यमूलकशब्दे अस्मिन्नेव वर्गे १७,१८ संख्यकश्लोके द्रष्टव्याः । )

अथ फलशाकाः ।—

अथ कुष्माण्डीनाम ।—

कर्कोटिका च कुष्माण्डी कुम्भाण्डी तु बृहत्फला ।
सुफला स्यात् कुम्भफला नागपुष्पफला मुनिः ॥ १६० ॥ *

मूत्राघातहरं प्रमेहशमनं कृच्छ्राश्मरीच्छेदनं
विण्मूत्रग्लपनं तृषार्त्तिशमनं जीर्णाङ्गपुष्टिप्रदम् ।
वृष्यं स्वादुतरं त्वरोचकहरं बल्यं च पित्तापहं
कुष्माण्डं प्रवरं वदन्ति भिषजो वल्लीफलानां पुनः ॥ १६१ ॥

( मं कोहलेम् । कं कगुड़ुचलकायि । हिं कुंहड़ा । तें गुम्मड़ि । उत्० कखाड़ । गौ कुमड़ा । )

अथ कुम्भतुम्बीनामगुणाः । ( अलाबूभेदः । )—

गोरक्षतुम्बी गोरक्षी नवालाम्बुर्घटाभिधा ।
कुम्भालाम्बुर्घटालाम्बुः कुम्भतुम्बी च सप्तधा ॥ १६२ ॥

कुम्भतुम्बी सुमधुरा शिशिरा पित्तहारिणी ।
गुरुः सन्तर्पणी रुच्या वीर्य्यपुष्टिबलप्रदा ॥ १६३ ॥

( मं गोरक्षतुम्बी । कं गोरखदुद्दिके । गौ लाउ । )

अथ क्षीरतुम्बीनामगुणाः । ( अलाबूभेदः ) ।—

क्षीरतुम्बी दुग्धतुम्बी दीर्घवृत्तफलाभिधा ।
इक्ष्वाकुः क्षत्रियवरा दीर्घबीजा महाफला ॥ १६४ ॥

* मुनिः सप्तसंख्यकेत्यर्थः ।

क्षीरिणी दुग्धबीजा च दन्तबीजा पयस्विनी ।
महावल्ली ह्यलाम्बुस्र श्रमघ्नी शरभूमिता ॥ १६५ ॥ *
तुम्बी सुमधुरा स्निग्धा पित्तघ्नी गर्भपोषकृत् ।
वृष्या वातप्रदा चैव बलपुष्टिविवर्द्धनी १६६ ॥

( मं दुग्धतुम्बी । कं हालुगुम्बलु । गौ मिठा लाउ । )

अथ भूतुम्बीनामगुणाः ।—

भूतुम्बी नागतुम्बी च शक्रचापसमुद्भवा ।
वल्मीकसम्भवा देवी दिव्यतुम्बी षडाह्वया ॥ १६७ ॥
भूतुम्बी कटुकोष्णा च सन्निपातापहारिणी ।
दन्तार्गलं दन्तरोधं धनुर्वातादिदोषनुत् ॥ १६८ ॥

( हिं भूतुम्बि । मं नेलसारे । गौ मेठो लाउ । )

अथ कलिङ्गनामगुणाः । ( त्रपुसविशेषः । )—

मांसलफलः कलिङ्गश्चित्रफलश्चित्रवल्लिकश्चित्रः ।
मधुरफलो वृत्तफलो घृणाफलो मांसलो नवधा ॥ ६९ ॥
कलिङ्गो मधुरः शीतः पित्तदाहश्रमापहः ।
वृष्यः सन्तर्पणो बल्यो वीर्य्यपुष्टिविवर्द्धनः ॥ ७० ॥

( मं कलिङ्ग । कं कोरडे । गौ तरमुज । )

अथ धाराकोशातकीनामगुणाः ।—

कोशातकी स्वादुफला सुपुष्पा कर्कोटकी स्यादपि पीतपुष्पा । * .
धाराफला दीर्घफला सुकोशा धामार्गवः स्यान्नवसंज्ञकोऽयम् ॥ १६९ ॥

---

* शरभूमिता—पञ्चदशसङ्ख्याकेत्यर्थः ।

धाराकोशातकी स्निग्धा मधुरा कफपित्तनुत् ।
ईषद्वातकरी पथ्या रुचिकृद्बलवीर्य्यदा ॥ १७२ ॥
( मं दोड़का । कं धारवीरे । तें तरोई । गौ झिञा । )

अथ हस्तिकोशातकीनामगुणाः ।—

हस्तिकोशातकी त्वन्या बृहत्कोशातकी तथा ।
महाकोशातकी वृत्ता ग्राम्यकोशातकी शराः ॥ १७३ ॥ *
हस्तिकोशातकी स्निग्धा मधुराऽऽध्मानवातकृत् ।
वृष्या क्रिमिकरी चैव व्रणसंरोपणी च सा ॥ १७४ ॥
( मं पारिसदोड़का । कं अरह्वीरे । गौ धुन्दुल । )

अथ स्वादुपटोलीनाम । ( पटोलविशेषः ) ।—

ज्ञेया स्वादुपटोली च पटोली मण्डली च सा ।
पटोली मधुरादिः स्यात् प्रोक्ता दीर्घपटोलिका ।
स्निग्धपर्णी स्वादुपूर्वैः पर्य्यायैश्च पटोलिका ॥ १७५ ॥
पटोली स्वादुः पित्तघ्नी रुचिकृत् ज्वरनाशनी ।
बलपुष्टिकरी पथ्या ज्ञेया दीपनपाचनी ॥ १७६ ॥
( मं स्वादुपटोल । कं सिंहपडवल । द्विं झिङ्गपोड़लि । )

अथ पटोलस्य चतुरङ्गगुणाः ।—

पटोलपत्रं पित्तघ्नं नालं तस्य कफापहम् ।
फलं त्रिदोषशमनं मूलं चास्य विरेचनम् ॥ १७७ ॥

अथ मृगाक्षीनाम । ( त्रपुसविशेषः ) । —

मृगाक्षी शतपुष्पा च मृगीर्वारुर्मृगादनी ।
चित्रवल्ली बहुफला कपिलाक्षी मृगेक्षणा ॥ १७८ ॥

* शरा इति पञ्चाभिधा इत्यर्थः ।

चित्रा चित्रफला पथ्या विचित्रा मृगचिर्भिटा ।
मरुजा कुम्भसी देवी कट्फला लघुचिर्भिटा ।
सेन्द्रिनी च महादेवी बुधैः सा विंशतिर्मता: ॥ १७९ ॥
मृगाक्षी कटुका तिक्ता पाकेऽम्ला वातनाशनी ।
पित्तकृत् पीनसहरा दीपनी रुचिकृत्परा ॥ १८० ॥
( मं सेन्द्रिनी । कं बालुकमेक्के । गौ मधुफुटी । )

अथ दधिपुष्पीनामगुणाः ।—

दधिपुष्पी खट्वाङ्गी खट्वा पर्य्यङ्कपादिका कूपा ।
खट्वापादी वंश्या काकोली कोलपालिका नवधा ॥ १८१ ॥
दधिपुष्पी कटुमधुरा शिशिरा सन्तापपित्तदोषघ्नी ।
वातामयदोषकरी गुरुस्तथाऽरोचकघ्नी च ॥ १८२ ॥
( हिं कुचिरी । कं कूगरि, काकखोला । मं गोड्डीकुचिली ।
गौ चिचिङ्गा, झों पा । )

अथ असिशिम्बीनामगुणाः ।—

असिशिम्बी खड्गशिम्बी शिम्बी निस्त्रिंशशिम्बिका ।
स्थूलशिम्बी महाशिम्बी बृहच्छिम्बी सुशिम्बिका ॥ १८३ ॥
असिशिम्बी तु मधुरा कषाया श्लेष्मपित्तजित् ।
व्रणदोषापहन्त्री च शीतला रुचिदीपनी ॥ १८४ ॥
( मं खड्गसम्बा, थोरश्वेतश्रावे । कं सिवे । गौ श्वेत शिम् । )

अथ कारवल्लीनामगुणाः ।—

करका कारवल्ली च चीरिपत्रः करिल्लका ।
[illegible]वल्ली कठफला पीतपुष्पाऽम्बुवल्लिका ॥ १८५ ॥

कारवल्ली सुतिक्ताोष्णा दीपनी कफनाशकृत् ।
अरोचकहरा चैव रक्तदोषहरी च सा ॥ १८६ ॥
( मं लघुकारली । कं हागल । गौ छोट करला । )

अथ कर्कोटकीनामगुणाः ।—

कर्कोटकी स्वादुफला मनोज्ञा च मनस्विनी ।
बोधना वन्ध्यकर्कोटी देवी कण्टफलाऽपि च ॥ १८७ ॥
कर्कोटकी कटूष्णा च तिक्ता विषविनाशनी ।
वातघ्नी पित्तहृत् चैव दीपनी रुचिकारिणी ॥ १८८ ॥
( मं काण्टोली, काकली । कं मडुवागाल । गौ काँकरोल । )

अथ स्वादुतु(वि)म्बिकानाम ।—

अथ भवति मधुरविम्बी मधुविम्बी स्वादुतु(वि)म्बिका तुण्डी ।
रक्तफला रुचिरफला सोष्णफला पीलुपर्णी च ॥ १८९ ॥
विम्बी तु मधुरा शीता पित्तश्वासकफापहा ।
असृग्ज्वरहरा रम्या कासजिद् गरहविम्बिका ॥ १९० ॥
( मं तोण्डुली । कं सीहिदोडे । गौ कुन्दुरुकी । )

अथ निष्पावीनाम ।—

निष्पावी ग्रामजादिः स्यात् फलिनी नखपूर्विका ।
मण्डपी फलिका शिम्बी ज्ञेया गुच्छफला च सा ।
विशालफलिका चैव निष्पाविश्विपिटा तथा ॥ १९१ ॥
( मं रुडूवर्णा । कं तट्टवरे । हिं लोविया । गौ वर्वटी । )

अथ वृत्तनिष्पाविकानाम ।—

अन्याऽङ्गुलीफला चैव नखनिष्पाविका स्मृता ।

वृत्तनिष्पाविका ग्राम्या नखपुच्छफला शरा: ॥ १८२ ॥ *
निष्पावौ द्वौ हरिच्छुभ्रौ कषायौ मधुरौ रसौ ।
कण्ठशुद्धिकरौ मेध्यौ दीपनौ रुचिकारकौ ।
संग्राहि समवीर्य्यं स्याद्दोषच्छेष्ठं द्वितीयकम् ॥ १८३ ॥

( मं दीवर्णा चावीर्य्यपाकु । कं एरडुअवरेयगुण । गो छोट शिम् । )

अथ वार्त्ताकीनाम ।—

वार्त्ताकी कण्टवृन्ताकी कण्टालु: कण्टपत्रिका ।
निद्रालुर्मांसलफला वृन्ताकी च महोटिका ॥ १८४ ॥
चित्रफला कण्टकिनी महती कट्फला च सा ।
मिश्रवर्णफला नील-फला रक्तफला तथा ।
शाकश्रेष्ठा वृत्तफला नृपप्रियफलस्मृतिः ॥ १८५ ॥
वार्त्ताकी कटुका रुच्या मधुरा पित्तनाशिनी ।
बलंपुष्टिकरी हृद्या गुरुर्वातेषु निन्दिता ॥ १८६ ॥

( मं वाङ्गे । कं वदने । तें वङ्कएश्चिरिवङ्कु । उत्° वाइगुण ।
तां कुठिरेकइ । हिं भण्टा, वाङ्गण । गो वेगुण । )

अथ डङ्गरिनाम । ( त्रपुसविशेषः ) ।—

डङ्गरी डाङ्गरी चैव दीर्घेर्वारुश्च डङ्गरिः ।
डङ्गारी नागशुण्डी च गजदन्तफला मुनिः ॥ १८७ ॥ †
डङ्गरी शीतला रुच्या वातपित्तास्रदोषजित् ।
शोषहृत्तर्पणी गौल्या जाड्यहा मूत्ररोधनुत् ॥ १८८ ॥

---

* शरा: पञ्चाख्या इत्यर्थः ।

† मुनिः सप्ताख्या इत्यर्थः ।

अथ बालडाङ्गरिगुणाः ।—

बालं डाङ्गरिकं फलं सुमधुरं शीतं च पित्तापहं
तृष्णादाहनिवर्हणं च रुचिकृत् सन्तर्पणं पुष्टिदम् ।
वीर्य्योन्मेषकरं बलप्रदमिदं भ्रान्तिश्रमध्वंसनं
पक्वं चेत्कुरुते तदेव मधुरं तृड्दाहरक्तं गुरु ॥ १९९ ॥

( मं डाङ्गर । कं डङ्गर । गो कांकुड़ि । )

अथ खर्बुजानाम । ( त्रपुसविशेषः ) ।—

अथ खर्बुजा मधुफला षड्रेखा वृत्तकर्कटी तिक्ता ।
तिक्तफला मधुपाका वृत्तेर्वारुश्च षण्मुखा नवधा ॥ २०० ॥

तिक्तं बाल्ये तदनु मधुरं किञ्चिदम्लं च पाके
निष्पक्वं चेत्तदमृतसमं तर्पणं पुष्टिदायि ।
वृष्यं दाहश्रमविशमनं मूत्रशुद्धिं विधत्ते
पित्तोन्मादापहरकफदं खर्बुजं वीर्य्यकारि ॥ २०१ ॥

( मं षड्भुजकाकड़ी । कं षड्भुजसौन्ते । गो खरमुजा । )

अथ कर्कटी ।—

अथ कर्कटी कटुदला छर्द्दायनिका च पीनसा मूत्रफला ।
त्रपुसी च हस्तिपर्णी लोमशकण्टा च मूत्रला नवाभिधा ॥२०२॥

कर्कटी मधुरा शीता त्वक्तिक्ता कफपित्तजित् ।
रक्तदोषकरा पक्वा मूत्ररोधार्त्तिनाशनी ॥ २०३ ॥

किञ्च ।—

मूत्रावरोधशमनं बहुमूत्रकारि
कृच्छ्राश्मरीप्रशमनं विनिहन्ति पित्तम् ।

वान्तिश्रमघ्नबहुदाहनिवारि रुच्यं
श्लेष्मापहं लघु च कर्कटिकाफलं स्यात् ॥ २०४ ॥

( मं काकडि। कं मूलसौन्ते। तें नक्कदोस। हिं काँकड़ि। उत्० फुटिकाँकड़ी। गौ काँकुड़। )

अथ त्रपुसीनाम।—

त्रपुसी पीतपुष्पी कण्टालुस्त्रपुसकर्कटी।
बहुफला कोशफला सा तुन्दिलफला मुनिः ॥ २०५ ॥ *
स्यात् त्रपुसीफलं रुच्यं मधुरं शिशिरं गुरु।
भ्रमपित्तविदाहार्त्ति-वान्तिघ्नबहुमूत्रदम् ॥ २०६ ॥

( मं तौसीकर्कटी। कं तसेंयकायि। तें दोजकद्दम्र। उत्० कण्टआरि, काकुड़ि। तां मचेवेल्लरि। हिं खीरे, बालमखीरा। गौ शशा। )

अथ एर्वारुनाम।—

एर्वारुः कर्कटी प्रोक्ता व्यालपत्रा च लोमशा।
स्थूला तोयफला चैव ह।स्त-न्तफला मुनिः ॥ २०७ ॥ †
एर्वारुकं पित्तहरं सुशीतलं
मूत्रामयघ्नं मधुरं रुचिप्रदम्।
सन्तापमूर्च्छाऽपहरं सुदुष्टमिदं
वातप्रकोपाय घनं तु सेवितम् ॥ २०८ ॥

( मं मालाचेम्बालुक। कं एडसौन्ते। हिं फुट। गौ फुटी। )

---

* मुनिः सप्ताख्या इत्यर्थः।

† मुनिः सप्तसंख्यका इत्यर्थः।

अथ वालुकीनामगुणाः ।—

अथ वालुकी बहुफला स्निग्धफला चेन्द्रकर्कटी चेन्द्रवहा ।
मधुरफला शारदिका क्षुद्रेर्वारुश्च पीतपुष्पिका ॥ २०९ ॥
वालुकी मधुरा शीताऽऽध्मानकृच्च श्रमापहा ।
पित्तास्रशमनी रुच्या कुरुते कासपीनसौ ॥ २१० ॥
वालुकानि च सर्वाणि दुर्जराणि गुरूणि च ।
मन्दानलं प्रकुर्वन्ति वातरक्तहराणि च ॥ २११ ॥
स्याद् वालुकी शरदि वर्षजदोषकर्त्री
हेमन्तजा तु खलु पित्तहरा च रुच्या ।
क्षिप्रं करोति खलु पीनसमर्द्धपक्वा
पक्वा त्वतीव मधुरा कफकारिणी च ॥ २१२ ॥
( मं वालुकी । कं क्वेयसौन्ते । गौ भूं इकांकड़ि । )

अथ चीनकर्कटीनाम ।—

चीनकर्कटिका ज्ञेया वीजकर्कटिका तथा ।
सुदीर्घा राजिलफला बाणैः कुलककर्कटी ॥ २१३ ॥ *
चीनकर्कटिका रुच्या शिशिरा पित्तनाशनी ।
मधुरा त्वमिदा हृद्या दाहशोषापहारिणी ॥ २१४ ॥
( मं पडवलासारिखेम्वालु । कं पडवडसोन्ते । गो चीना कांकुड़ ।
चित्रकूटदेशे प्रसिद्धा । )

अथ चिर्भिटानाम ।—

स्यात् त्रिभिंटा सुचित्रा चित्रफला चेत्रचिर्भिटा पाण्डुफला ।

---

* बाणैः पञ्चभि. नामभिरुपलक्षिता इत्यर्थः ।

पथ्या च रोचनफला चिर्भिटिका कर्कटिका ग्रहसंख्या ॥२१५॥*

बाल्ये तिक्ता चिर्भिटा किञ्चिदम्ला
गौल्योपेता दीपनी सा च पाके।
शुष्का रूक्षा श्लेष्मवातारुचिघ्नी
जाड्यघ्नी सा रोचनी दीपनी च ॥ २१६ ॥

( मं बेलसेन्धा। कं अरमेक्के। हिं भुकुर। गौ गोसुक। )

अथ शशाण्डुलीनाम।—

शशाण्डुली बहुफला तण्डुली चैत्रसम्भवा।
क्षुद्राम्ला लोमशफला धूम्रवृत्तफला च सा ॥ २१७ ॥

शशाण्डुली तिक्तकटुश्च कोमला
कट्वम्लयुक्ता जरठा कफापहा।
पाके तु साम्ला मधुरा विदाहकृत्
कफघ्न शुष्का रुचिकृच्च दीपनी ॥ २१८ ॥

( मं शाशान्दुलि। कं मिनिके। गौ तित्कांकुड़। )

अथ कुडुहुञ्चीनाम।—

कुडुहुञ्ची श्रीफलिका प्रतिपत्रफला च सा।
शुभ्रवी कारवी चैव प्रोक्ता बहुफला तथा ॥ २१९ ॥
क्षुद्रकारलिका प्रोक्ता ज्ञेया कन्दलता तथा।
क्षुद्रादिकारवल्ली च प्रोक्ता सा च नवाह्वया ॥ २२० ॥
कुडुहुञ्ची कटुरुष्णा तिक्ता रुचिकारिणी च दीपनदा।
रक्तानिलदोषकरी पथ्याऽपि च सा फले प्रोक्ता ॥ २२१ ॥

---

ग्रहसंख्या नवाभिधा इत्यर्थः।

कारलीकन्दमर्शोघ्नं मलरोधविशोधनम् ।
योनिनिर्गतदोषघ्नं गर्भस्रावाविषापहम् ॥ २२२ ॥
( मं कुडुहुच्चो । कं कारसे । गौ छोट उच्छे । )

इति मूल-कन्द-फल-पत्र-सुन्दर-
क्रमनामतद्गुणनिरूपणोल्बणम् ।
अवलोक्य वर्गमिममामयोचिता-
मगदप्रयुक्तिमवबुध्यतां बुधः ॥ २२३ ॥

मन्दाग्निमरोचकिनं येऽपि शिलामाशयन्ति निजशक्त्या ।
तेषां शाकानामयमाश्रयभूः शाकवर्ग इति कथितः ॥ २२४ ॥

लब्धान्योऽन्यसहायवैद्यककुलाच्छङ्काकलङ्कापनुत्
दस्त्रैक्यावतरोऽयमित्यविरतं सन्तः प्रशंसन्ति यम् ।
तस्य श्रीनृहरेः कृताववसितो यो मूलकादिर्महान्
वर्गोऽसावभिधानकोशपरिषच्चूडामणौ सप्तमः ॥ २२५ ॥

इति श्रीनरहरिपण्डितविरचिते राजनिघण्टौ
मूलकादिनाम सप्तमो वर्गः ।

---

## अथ शाल्मल्यादिवर्गः ।



शाल्मली तस्य निर्य्यासो रोहितश्चैकवीरकः ।
पारिभद्रोऽथ खदिरस्त्रिधाऽरिः खादिरः स्मृतः ॥ १ ॥
शमीद्वयं च बब्बुर-द्वितयश्चाऽरिमेदकः ।
पलाशश्चेङ्गुदिका प्रोक्ता निष्पत्री च स्नुही द्विधा ॥ २ ॥

कन्थारिका त्रिधैरण्डो घोण्टा वल्मीकरञ्जकः।
कारिका मदनस्त्रेधा विल्वान्तरस्तरट्टिका ॥ ३ ॥
श्रीवल्ली कुञ्चिका चैव रामकाण्डस्तथाऽपरः।
सयावनालौ द्विशरौ मुञ्जकाशौ द्विधा कुशः ॥ ४ ॥
वल्वजा कुतृणौ चाथ नलौ दूर्वा चतुर्विधा।
कुन्दुरो भूतृणो ज्ञेय उखल इक्षुदर्भकः ॥ ५ ॥
गोमूत्रो शिल्पी निश्रेणी गर्मोटी मञ्जरास्तथा।
गिरिभूर्वंशपत्री च मन्थानः पल्लिवाहकः ॥ ६ ॥
पटूतृणशुको ज्ञेयः त्रि-पर्णान्धः त्रि-गुण्डकः।
कसेरुखणिका प्रोक्ता गुण्डाला शूलिका तथा।
परिपेलं हिञ्जुलं च सेवालं च शराङ्कधा ॥ ७ ॥

अथ शाल्मलीनामगुणाः।—

शाल्मलिश्चिरजीवी स्यात् पिच्छिलो रक्तपुष्पकः।
कुक्कुटी तूलवृक्षश्च मोचाख्यः कण्टकद्रुमः ॥ ८ ॥
रक्तफलो रम्यपुष्पो वहुवीर्य्यो यमद्रुमः।
दीर्घद्रुमः स्थूलफलो दीर्घायुस्तिथिभिर्मितः ॥ ९ ॥ *
शाल्मली पिच्छिली वृष्यो वल्यो मधुरशीतलः।
कषायश्च लघुः स्निग्धः शुक्रश्लेष्मविवर्द्धनः ॥ १० ॥
तद्रसस्तद्गुणो ग्राही कषायः कफनाशनः।
पुष्पं तद्वच्च निर्दिष्टं फलं तस्य तथाविधम् ॥ ११ ॥

( मं शाम्बरि। कं यवलवदमर। तां पुला। उत्० वोनूरो।
हिं शिम्बल, शेमुर। गो शिमुलगाछ। )

* तिथिरित्यनेन पञ्चदश संख्या बोद्धव्या।

अथ मोचरसनाम ।—

मोचरसो मोचस्तु मोचस्रावश्च मोचनिर्य्यासः ।
पिच्छिलसारः सुरसः शाल्मलिवेष्टश्च मोचसारश्च ॥ १२ ॥
मोचरसस्तु कषायः कफवातहरो रसायनो योगात् ।
बलपुष्टिवर्णवीर्य्यप्रज्ञाऽऽयुर्देहसिद्धिदो ग्राही ॥ १३ ॥

( मं सावरिचाङ्गोन्द्र । गौ शिमुलेर आटा, मोचरस । )

अथ रोहीतकनाम । ( शाल्मलीविशेषः । )—

रोहीतको रोहितकश्च रोहितः कुशाल्मलिर्दाडिमपुष्पसंज्ञकः ।
सदाप्रसूनः स च कूटशाल्मलिर्विरोचनः शाल्मलिको नवाह्वयः ॥१४
सप्ताह्वः श्वेतरोहितः सितपुष्पः सिताह्वयः ।
शिताङ्गः शुक्लरोहितो लक्ष्मीवान् जनवल्लभः ॥ १५ ॥
रोहितकौ कटुस्निग्धौ कषायौ च सुशीतलौ ।
क्रिमिदोषव्रणप्लीह-रक्तनेत्रामयापहौ ॥ १६ ॥

( मं दोनिरोहिडे । कं यरड्मलुमुत्तलु । तें सुलुमोड्गचेट्टु ।
गौ रोढ़ा, रयना, कड़ार । रोहिणीति लोके । )

अथ एकवीरनाम ।—

एकवीरो महावीरः सक्तवीरः सुवीरकः ।
एकादिवीरपर्य्यायैर्वीरश्चेति षड़ाह्वयः ॥ १७ ॥
एकवीरो भवेच्चोष्णः कटुकस्तोदवातनुत् ।
गृध्रसीकटिपृष्ठादि-शूलपक्षाभिघातनुत् ॥ १८ ॥

( मं एकवीर । कं गरुड़विके । )

अथ पारिभद्रनाम।—

अथ भवति पारिभद्रो मन्दारः पारिजातको निम्बतरुः।
रक्तकुसुमः क्रिमिघ्नो बहुपुष्पो रक्तकेसरो वसवः॥ १९॥ *

पारिभद्रः कटूष्णः स्यात् कफवातनिकृन्तनः।
अरोचकहरः पथ्यो दीपनश्चापि कीर्त्तितः॥ २०॥

( मं पाङ्गरा। कं हरिवाल। दां पङ्गार। तें मोदुगु, वारिदिचेट्टु।
तां मुराक। फिं फरहद। गौ पालदेमादार।)

अथ खदिरनाम।—

खदिरो बालपत्रश्च खाद्यः पत्री क्षिती क्षमा।
सुशल्यो वक्रकण्टश्च यज्ञाङ्गो दन्तधावनः॥ २१॥
गायत्री जिह्मशल्यश्च कण्टी सारद्रुमस्तथा।
कुष्ठारिर्बहुसारश्च मेध्यः सप्तदशाह्वयः॥ २२॥
खदिरस्तु रसे तिक्तः शीतः पित्तकफापहः।
पाचनः कुष्ठकासास्र-शोफकण्डूव्रणापहः॥ २३॥

( तें चंडचेट्टु। उत्० खेर। गौ,खयेरगाछ।)

अथ श्वेतसारनाम।—

खदिरः श्वेतसारोऽन्यः कार्मुकः कुब्जकण्टकः।
सोमसारो नेमिवृक्षः सोमवल्कः पथिद्रुमः॥ २४॥
श्वेतस्तु खदिरस्तिक्तः कषायः कटुरुष्णकः।
कण्डूतिभूतकुष्ठघ्नः कफवातव्रणापहः॥ २५॥

( मं पाण्ढरा खैर। कं बिलियतलि। गौ शादा खयेर।)

* वसवः,—अष्टसङ्ख्यका इत्यर्थः।

अथ रक्तखदिरनाम ।—

स रक्तो रक्तसारश्च सुसारस्ताम्रकण्टकः ।
स प्रोक्तो बहुशल्यश्च याज्ञिकः कुष्ठतोदनः ।
यूपद्रुमोऽस्त्रखदिरोऽपरश्च दशधा स्मृतः ॥ २६ ॥
कटूष्णो रक्तखदिरः कषायो गुरुतिक्तकः ।
आमवातास्त्रवातघ्नो व्रणभूतज्वरापहः ॥ २७ ॥

( मं रक्तखदिर । कं केम्पिनखैर । )

अथ विट्खदिरनाम ।—

विट्खदिरः काम्भोजी कालस्कन्धश्च गोरटो मरुजः ।
पत्रतरुर्बहुसारः संसारः खादिरो ग्रहैर्महासारः ॥ २८ ॥ *
विट्खदिरः कटुरुष्णस्तिक्तो रक्तव्रणोत्थदोषहरः ।
कण्डूतिविषविसर्प-ज्वरकुष्ठोन्मादभूतघ्नः ॥ २९ ॥

( मं क्षुद्रखदिर । कं किरुखैर । गौ गुये बाब्ला । )

अथ अरिनाम ।—

अरिः सन्दानिका दाला ज्ञेया खदिरपत्रिका ।
अरिः कषायकटुका तिक्ता रक्तार्त्तिपित्तनुत् ॥ ३० ॥

( मं आरि । कं सौगुरि । )

अथ खादिरसारनाम ।—

खादिरः खदिरोद्भूतस्तत्सारो रक्तदः स्मृतः ।
ज्ञेयः खदिरसारश्च तथा रङ्गः षडाह्वयः ॥ ३१ ॥

---

* ग्रहैर्नवभिरित्यर्थः स्मृतः इति पूर्वेणान्वयः ।

कटुकः खादिरः सारस्तिक्तोष्णः कफवातहृत् ।
व्रणकण्ठामयघ्नश्च रुचिकृद्दीपनः परः ॥ ३२ ॥
( मं काथ। गौ खयेर। )

अथ शमीनाम।—

शमी शान्ता तुङ्गा कचरिपुफला केशमथनी
शिवेशा नीलक्ष्मीस्तपनतनुनष्टा शुभकरी । *
हविर्गन्धा मेध्या दुरितशमनी शङ्कुफलिका
सुभद्रा मङ्गल्या सुरभिरथ शापापशमनी ॥ ३३ ॥
भद्राऽथ शङ्करी ज्ञेया केशहन्त्री शिवाफला ।
सुपत्रा सुखदा चैव पञ्चविंशाभिधा मता ॥ ३४ ॥
शमी रूक्षा कषाया च रक्तपित्तातिसारजित् ।
तत्फलं तु गुरु स्वादु तिक्तोष्णं केशनाशनम् ॥ ३५ ॥
( मं शमी। कं बनि। उत्० शुमी। हिं छिकुर। गौ शाँइगाछ। )

अथ शान्तानाम। ( शमीविशेषः ) ।—

द्वितीया तु शमी शान्ता शुभा भद्राऽपराजिता ।
जया च विजया चैव पूर्वोक्तगुणसंयुता ॥ ३६ ॥
( मं खैरी। कं कावचि। )

अथ बर्बुरनाम।—

बर्बुरो युगलाक्षश्च कण्टालुस्तीक्ष्णकण्टकः ।
गोशृङ्गः पंक्तिबीजश्च दीर्घकण्टः कफान्तकः ।
दृढबीजः श्वासभक्ष्यो ज्ञेयश्चेति दशाह्वयः ॥ ३७ ॥

---

* पञ्चविंशसंख्यारक्षणाय शिवा ईशा च इत्येवं पदविच्छेदः कार्यः ।

बर्वुरस्तु कषायोष्णः कफकासामयापहः ।
आमरक्तातिसारघ्नः पित्तदाहार्त्तिनाशनः ॥ ३८ ॥
( मं बाबुल । गो बावूलागाछ । )

अथ जालबर्वुरनाम ।—

जालबर्वुरकस्त्वन्यश्छत्राकः स्थूलकण्टकः ।
सूक्ष्मशाखस्तनुच्छायो रन्ध्रकण्टः षडाह्वयः ॥ ३९ ॥
जालबर्वुरको रूक्षो वातामयविनाशकृत् ।
पित्तकृच्च कषायोष्णः कफहृद्दाहकारकः ॥ ४० ॥
( मं पुलई । कं जाली । )

अथ अरिमेदनाम ।—

इरिमेदोऽरिमेदश्च गोधास्कन्धोऽरिमेदकः ।
अहिमेदोऽहिमारश्च पूतिमेदोऽहिमेदकः ॥ ४१ ॥
अरिमेदः कषायोष्णस्तिक्तो भूतविनाशकः ।
शोफातिसारकासघ्नो विषवीसर्पनाशनः ॥ ४२ ॥
( मं गान्धियाहिवर । कं करयेवेलु । हिं गन्धाबुल । )

अथ पर्कटीनाम ।—

पर्कटः पश्चकृत् पश्च-वर्द्धनः पश्चरत्तकः ।
दृष्ट्यञ्जनविधौ शस्तः कटुः जीर्णज्वरापहः ॥ ४३ ॥
( मं पखोड़ । तें गङ्गरयजुव्वि । तां पोरिशराबि । हिं पाकड़, पखर, गजदन्तसहोरा । गो पाकुड़गाछ, गान्धोभाँट । )

अथ इङ्गुदीनाम ।—

इङ्गुदी हिङ्गुपत्रश्च विषकण्टोऽनिलान्तकः ।
गौरसूक्तः सुपत्रश्च शूलारिस्तापसद्रुमः ॥ ४४ ॥

तीक्ष्णकण्टस्तैलफलः पूतिगन्धो विगन्धकः।
ज्ञेयः क्रोष्टुफलश्चैव वह्नीन्दुगणिताह्वयः॥ ४५ ॥ *
इङ्गुदी मदगन्धिः स्यात् कटूष्णा फेनिला लघुः।
रसायनो हन्ति जन्तु-वातामयकफव्रणान्॥ ४६ ॥

( मं हिङ्गुल। गो जियापुता, इङ्गोट।

अथ निष्पत्रीनाम।—

निष्पत्रकः करीरश्च करीरग्रन्थिलस्तथा।
क्रकरी गूढपत्रश्च करकस्तीक्ष्णकण्टकः॥ ४७ ॥
करीरमाध्मानकरं कषायं कटूष्णमेतत् कफकारि भूरि।
श्वासानिलारोचकसर्वशूल-विच्छर्दिखर्जूव्रणदोषहारि॥ ४८ ॥

( मं नेपती। कं निष्पतिगे।। )

अथ स्नुहीद्वयनाम।—

स्नुही सुधा महावृक्षः क्षीरी निस्त्रिंशपत्रिका।
शाखाकण्टश्च गुण्डाख्यः सेहुण्डो वज्रकण्टकः॥ ४९ ॥
बहुशाखो वज्रवृक्षो वातारिः क्षीरकाण्डकः।
भद्रो व्याघ्रनखश्चैव नेत्रारिर्दण्डवृक्षकः।
समन्तदुग्धो गण्डीरो ज्ञेयः स्नुक्चेति विंशतिः॥ ५० ॥
स्नुही चोष्णा [illegible]-कुष्ठवातप्रमेहनुत्।
क्षीरं वातविषाध्मान-गुल्मोदरहरं परम्॥ ५१ ॥
स्नुही चान्या त्रिधारा स्यात्तिस्रो धारास्तु यत्र सा।

---

* वह्निस्त्रिः इन्दुरेकः, तेन त्रयोदशसंख्या बोद्धव्या।

पूर्वोक्तगुणवत्येषा विशेषाद्रससिद्धिदा ॥ ५२ ॥

( मं त्रिधारा । वम्० निवडिङ्ग । तें चेमुड़चेट्टु । डिं-थोहर, जाकुनिया । गो मनसागाछ, न्याड़ासिजु, तेकांटा सिजु । )

अथ कन्थारीनाम ।—

कन्थारी कथरी कन्था दुर्द्धर्षा तीच्णकण्टका ।
तीच्णगन्धा क्रूरगन्धा दुष्प्रवेशाऽष्टकाभिधा ॥ ५३ ॥
कन्थारी कटुतिक्तोष्णा कफवातनिकृन्तनी ।
शोफघ्नी दीपनी रुच्या रक्तग्रन्थिरुजापहा ॥ ५४ ॥

(मं कान्थारी । कं कान्तरु । कौं फणीनिवड़ङ्ग । गो फणिमनसा ।)

अथ श्वेतरक्तैरण्डनामगुणाः ।—

श्वेतैरण्डः सितैरण्डश्चित्रो गन्धर्वहस्तकः ।
आमण्डस्तरुणः शुक्लो वातारिर्दीर्घदण्डकः ।
पञ्चाङ्गुलो वर्द्धमानो रुवुको द्वादशाह्वयः ॥ ५५ ॥
रक्तैरण्डोऽपरो व्याघ्रो हस्तिकर्णो रुवुस्तथा ।
उरुवुको नागकर्णश्चञ्चुरुत्तानपत्रकः ॥ ५६ ॥
करपर्णो याचनकः स्निग्धो व्याघ्रदलस्तथा ।
तस्करश्चित्रबीजश्च ज्ञेयैरण्डस्त्रिपञ्चधा ॥ ५७ ॥

श्वेतैरण्डः सकटुकरसस्तिक्त उष्णः कफार्त्ति-
ध्वंसं धत्ते ज्वरहरमरुत्कासहारी रसार्हः ।
रक्तैरण्डः श्वयथपचनः वान्ति[illegible]

भ्रान्तिश्वासज्वरकफहरोऽरोचकघ्नो लघुश्च ॥ ५८ ॥
( मं दोगि एरण्ड। वं एरण्ड्गाछलकि। तें आमिदपुचेट्टु।
हिं एरण्ड, रेढ़ी। गौ भेरेन्दागाछ। )

अथ स्थूलैरण्डनाम

स्थूलैरण्डो महैरण्डो महापञ्चाङ्गुलादिकः।
स्थूलैरण्डो गुणाढ्यः स्याद्रसवीर्य्यविपाकिषु ॥ ५९ ॥
( मं थोरएरण्डु। गौ बड़ भेरेन्दागाछ। )

अथ घोण्टानाम।—

घोण्टा बदरिका घोटी गोलिका ग्रन्थकण्टकः।
कर्कटी च तुरङ्गी च तुरगाह्वाऽष्टधा स्मृता ॥ ६० ॥
घोटिका कटुकोष्णा च मधुरा वातनाशनी।
व्रणकण्डूतिकुष्ठासृग्-दोषश्वयथुहारिणी ॥ ६१ ॥
( मं घोण्टी। कं गोद्दधि। गौ श्येयाकुलगाछ। )

अथ लताकरञ्जनाम।—

लताकरञ्जो दुःस्पर्शो वीराख्यो वज्रवीरकः।
धनदाख्यः कण्टफलः कुबेराक्षश्च सप्तधा ॥ ६२ ॥
लताकरञ्जपत्रं तु कटूष्णं कफवातनुत्।
तद्बीजं दीपनं पथ्यं शूलगुल्मव्यथापहम् ॥ ६३ ॥
( मं वम्० सागरगोटा। कं गज्जुगु। गौ लता करञ्जा। )

अथ कारीनाम।—

कारी तु कारिका कार्य्या गिरिजा कटुपत्रिका।
लतिका कण्टकारी स्यादन्या त्वाकर्षकारिका ॥ ६४ ॥

कारी कषायमधुरा द्विविधा पित्तनाशिनी ।
दीपनी ग्राहिणी रुच्या कण्ठशोधकरी गुरुः ॥ ६५ ॥

( मं कारी । कं कारे । )

अथ मदननाम ।—

मदनः शल्यकैडर्य्यः पिण्डी धाराफलस्तथा ।
तरटः करहाटश्च राढुः पिण्डीतकः स्मृतः ॥ ६६ ॥
कण्टालो विषमुष्टिश्च छर्दनो विषपुष्पकः ।
घण्टालो मादनो हर्षो घण्टाख्यो वस्तिरोधनः ।
ग्रन्थिफलो गोलफलो मदनाह्वश्च विंशतिः ॥ ६७ ॥
मदनः कटुतिक्तोष्णः कफवातव्रणापहः ।
शोफदोषापहश्चैव वमने च प्रशस्यते ॥ ६८ ॥

( मं मेणाफल । कं गेल, बोनगरे, रणाय । हिं मइनफल, करहूर ।
तें वसन्तकडिभिचेट्टु, मणडचेट्टु, मङ्गचेट्टु, उन्मेत्तचेट्टु ।
उत्० पातर । ता० मडुककरव । नेपा० मैदल ।
पञ्जा० मिण्डकोल । गो मयनागाछ । )

अथ वाराहनाम । ( मदनभेदः ) ।—

वाराहोऽन्यः कृष्णवर्णो महापिण्डीतको महान् ।
स्निग्धपिण्डीतकश्चान्यः स्थूलवृत्तफलस्तथा ॥ ६९ ॥
अन्यौ च मदनौ श्रेष्ठौ कटुतिक्तरसान्वितौ ।
छर्दनौ कफहृद्रोग-पक्वामाशयशोधनौ ॥ ७० ॥

( मं थोरमेणाफल दोषि । कं दोड्डबोनगरे एरडु ।
गो काल मयनागाछ । )

अथ विल्वान्तरनाम।— *

विल्वान्तरश्चीरवृक्षः सुधाकुशलसंज्ञकः।
दीर्घमूलो वीरवृक्षः कच्छारिश्च षडाह्वयः॥ ७१॥
विल्वान्तरः कटूष्णश्च कच्छूघ्नः सन्धिशूलनुत्।
वह्निदीप्तिकरः पथ्यो वातामयविनाशनः॥ ७२॥

( मं बेलतरु। कं श्रीं डउ। तें बेय्यतुरुचेट्टु।)

अथ तरटीनाम।—

तरटी तारटी तीव्रा खर्बुरा रक्तवीजका।
तरटी तिक्तमधुरा गुरुर्बल्या कफापहा॥ ७३॥

( मं तरडि। कं रेउखडे। शोलापुरादौ स्वनामख्यात-
रक्तवीजकराटकवृक्षे।)

अथ शीवल्लीनाम।—

श्रीवल्ली शिववल्ली च कराटवल्ली च शीतला।
अम्ला कटुफलाऽम्वत्था दुरारोहा च साऽष्टधा॥ ७४॥
श्रीवल्ली कटुकाऽम्ला च वातशोफकफापहा।
तत्फलं तैललेपघ्नमत्यम्लं रुचिकृत् परम्॥ ७५॥

( मं शीवल्ली। कं सीगेयवल्ली।)

---

* कराटकिवृक्षविशेषे, उशीराख्यवीरतरौ। जाङ्गलदेशे नर्मदा-तटे चर्मण्वतीनदीसमीपे चास्योत्पत्तिः। तल्लक्षणमुच्यते,—

"विल्वान्तरो जगति वीरतरुः प्रसिद्धः
श्वेतासितारुणविलोहितपीतपुष्पः।
स्याज्जातितुल्यकुसुमः शमिसूक्ष्मपत्रः
स्यात् कराटकी विजलदेशज एष वृक्षः॥" इति।

अथ निकुञ्जिकाम्लानाम ।—

अन्या निकुञ्जिकाम्लाख्या कुञ्जिका कुञ्जवल्लरी ।
निकुञ्जिका बुधैरुक्ता श्रीवल्लीसदृशी गुणैः ॥ ७६ ॥

( मं निकुञ्जिके । कं निरोयवल्ली । )

( इति कण्टकवर्गः । )

अथ रामकाण्डनाम ।—

अपर्वदण्डो दीर्घश्च रामबाणो नृपप्रियः ।
रामकाण्डो रामशरो रामस्येषुश्च सप्तधा ॥ ७७ ॥

रामकाण्डजमूलं स्यादोषदुष्णं रुचिप्रदम् ।
रसे चाम्लकषायश्च पित्तकृत् कफवातहृत् ॥ ७८ ॥

( मं रामशपु । कं सरगोलु । हिं रामशर, शरपत ।
मालवे प्रसिद्धः । )

अथ यावनालनाम ।—

यावनालोऽथ नदीजो दृढ़त्वग्वारिसम्भवः ।
यावनालनिभश्चैव खरपत्रः षड़ाह्वयः ॥ ७९ ॥

यावनालशरमूलमीषन्मधुररुच्यकम् ।
शीतं पित्तत्वषापघ्नं पशूनामबलप्रदम् ॥ ८० ॥

( मं जोन्धोली । कं गलगु । तें मक्का, जोन्नलु । वम्० मकइ, वुट,
वजा । तां मक्कशोलम् । हिं भुट्टा, मक्का ।
गौ जनार, जुयारा । )

अथ इक्षुरनाम ।—

शरो बाण इषुः काण्ड उत्कटः सायकः क्षुरः ।
इक्षुरः क्षुरिकापत्रो विशिखश्च दशाभिधः ॥ ८१ ॥

स्थूलोऽन्यः स्थूलशरो महाशरः स्थूलसायकमुखाख्यः।
इक्षुरकः क्षुरपत्रो बहुमूलो दीर्घमूलको मुनिभिः ॥ ८२ ॥*
शरद्वयं स्यान्मधुरं सुतिक्तं कोष्णं कफभ्रान्तिमदापहारि।
बलञ्च वीर्य्यञ्च करोति नित्यं निषेवितं वातकरञ्च किञ्चित् ॥८३॥

( मं शरन। कं अम्बलिनगयो। तें रेल्लु, काकिवेदुरु, गुन्द्र।
पञ्जा० कंड। हिं कांड़ा। गौ शरगाछ। मालवे प्रसिद्धः। )

अथ मुञ्जनाम।—

मुञ्जो मौञ्जीतृणाख्यः स्याद् ब्रह्मण्यस्तेजनाह्वयः।
वानीरजो मुञ्जनकः शारो दर्भाह्वयश्च सः ॥ ८४ ॥
दूरमूलो दृढ़तृणो दृढ़मूलो बहुप्रजः।
रञ्जनः शतुभङ्गश्च स्याच्चतुर्दशसंज्ञकः ॥ ८५ ॥
मुञ्जस्तु मधुरः शीतः कफपित्तजदोषजित्।
ग्रहरक्षासु दीक्षासु पावनो भूतनाशनः ॥ ८६ ॥

( मं, कं, मुञ्जतृणः। तें मुञ्जगड्डि, अग्निस्फुलिङ्ग। गौ मुज।
भागीरथीतीरे प्रसिद्धः। )

अथ काशनाम।—

काशः काण्डेक्षुरिक्ष्वारिः काकेक्षुर्वायसेक्षुकः।
इक्षुरश्चेक्षुकाण्डश्च शारदः सितपुष्पकः ॥ ८७ ॥
नादेयो दर्भपत्रश्च लेखनः काण्ड-काण्डकौ।
कण्ठालङ्कारकश्चैव ज्ञेयः पञ्चदशाह्वयः ॥ ८८ ॥
काशश्च शिशिरो गौल्यो रुचिकृत् पित्तदाहनुत्।

---

* मुनिभिः बहुभिर्नामभिरुपलक्षित इत्यर्थः।

तर्पणो बलकृद्वृष्य आमशोषक्षयापहः ॥ ८९ ॥
( मं काउंसु । कं काजलु । तें रेलु । कौं कसाड़ । हिं कास ।
गौ केशे घास । )

अथ अग्निरीनाम । ( काशभेदः ) ।—

अन्योऽग्निरी मिश्रिर्गण्डा अश्वालो नीरजः शरः ।
मिश्रिर्मधुरशीतः स्यात् पित्तदाहक्षयापहः ॥ ९० ॥
( मं लाह्रानकाउंसु । कं किरियकागढु । )

अथ सितदर्भनाम । ( कुशभेदः ) ।—

सितदर्भो ह्रस्वकुम्भो पूतो यज्ञियपत्रकः ।
वज्रो ब्रह्मपवित्रश्च तीक्ष्णो यज्ञस्य भूषणः ।
सूचीमुखः पुण्यतृणो वह्निः पूततृणो द्विषट् ॥ ९१ ॥
दर्भमूलं हिमं रुच्यं मधुरं पित्तनाशनम् ।
रक्तज्वरतृषाश्वास-कामलादोषशोषकृत् ॥ ९२ ॥
( मं पाण्ढरी-कुशो । कं बिलियबुट्टकुशि । )

अथ हरिद्दर्भनाम ।—

कुशोऽन्यः शरपत्रश्च हरिद्दर्भः पृथुच्छदः ।
शारो च रूक्षदर्भश्च दीर्घपत्रः पवित्रकः ॥ ९३ ॥
दर्भौ द्वौ च गुणे तुल्यौ तथाऽपि च सितोऽधिकः ।
यदि श्वेतकुशाभावस्त्वपरं योजयेत् भिषक् ॥ ९४ ॥
( मं कुचदर्भ ; उह्लाकुशि । हिं दभ् । गौ कुश । )

अथ बल्वजानाम ।—

बल्वजा दृढपत्री च तृणेक्षुस्तृणबल्वजा ।
मौञ्जीपत्रा दृढतृणा पानीयाश्वा दृढक्षुरा ॥ ९५ ॥

बल्वजा मधुरा शीता पित्तदाहतृषापहा ।
वातप्रकोपणी रुच्या कण्ठशुद्धिकरी परा ॥ ९६ ॥

( मं, वम्० मोलु । कं मोदे । गौ उलु । )

अथ कुतृणनाम ।—

कुतृणं कत्तृणं भूतिर्भूतिकं रोहिषं तृणम् ।
श्यामकं ध्यामकं पूतिर्मुङ्गलं दवदग्धकम् ॥ ९७ ॥
कुतृणं दशनामाढ्यं कटुतिक्तकफापहम् ।
शस्त्रशल्यादिदोषघ्नं बालग्रहविनाशनम् ॥ ९८ ॥

( मं लाहानुरोहिस । कं किरुगञ्जणि । तें कामंचिगड्डि, तूटिकूर । हिं सोधिया । गौ रामकर्पूर । )

अथ दीर्घरोहिषकनाम । (कुतृणभेदः) ।—

अन्यद्रोहिषकं दीर्घं दृढकाण्डो दृढच्छदम् ।
द्राघिष्ठं दीर्घनालश्च तिक्तसारश्च कुत्सितम् ॥ ९९ ॥
दीर्घरोहिषकं तिक्तं कटूष्णं कफवातजित् ।
भूतग्रहविषघ्नश्च व्रणक्षतविरोपणम् ॥ ॥ १०० ॥

( मं वाटुरोहिस । कं हिरियगञ्जिणि । हिं रोहिस । गो गन्धतृण । )

अथ नलनाम ।—

नालो नड़ो नलश्चैव कुञ्चिरन्ध्रोऽथ कीचकः ।
वंशान्तरश्च धमनः शून्यमध्यो विभीषणः ॥ १०१ ॥
छिद्रान्तो मृदुपत्रश्च रन्ध्रपत्रो मृदुच्छदः ।
नालवंशः पोटगल इत्यस्याख्याश्चतुर्दश ॥ १०२ ॥

नलः शीतकषायश्च मधुरो रुचिकारकः ।
रक्तपित्तप्रशमनो दीपनो वीर्य्यवृद्धिदः ॥ १०३ ॥
( मं देवनलु। कं देवनाल । तें किक्केशगण्डि । गौ नलखागड़ा । )

अथ महानलनाम । ( नलभेदः । ) ।—

अन्यो महानलो वन्यो देवनलो नलोत्तमः ।
स्थूलनालः स्थूलदण्डः सुरनालः सुरद्रुमः ॥ १०४ ॥
देवनालोऽतिमधुरो वृष्य ईषत्कषायकः ।
नलः स्यादधिको वीर्य्ये शस्यते रसकर्मणि ॥ १०५ ॥
( मं थोरदेवनलु । कं हिरियदेवनाल । हिं नकठ । )

अथ नीलदूर्वानाम ।—

स्यान्नीलदूर्वा हरिता च शाम्भवी
श्यामा च शान्ता शतपर्विकाऽमृता ।
पूता शतग्रन्थिरनुष्णवल्लिका
शिवा शिविष्टाऽपि च मङ्गला जया ॥ १०६ ॥
सुभगा भूतहन्त्री च शतमूला महौषधी ।
अमृता विजया गौरी शान्ता स्यादेकविंशतिः ॥ १०७ ॥
नीलदूर्वा तु मधुरा तिक्ता शिशिररोचनी ।
रक्तपित्तातिसारघ्नी कफवातज्वरापहा ॥ १०८ ॥
( मं नीलीहरियाली । कं हसुगरके । तें हरितदूर्वालु । )

अथ गोलोमीनाम । ( दूर्वाभेदः ) ।—

स्याद्गोलोमी श्वेतदूर्वा सिताख्या
चण्डा भद्रा भार्गवी दुर्मरा च ।

गौरी विघ्नेशानकान्ताऽप्यनन्ता
श्वेता दिव्या श्वेतकाण्डा प्रचण्डा ॥ १०९ ॥
सहस्रवीर्य्या च सहस्रकाण्डा
सहस्रपर्वा सुरवल्लभा च।
शुभा सुपर्वा च सितच्छदा च
स्वच्छा च कच्छान्तरुहाऽब्धिहस्ता ॥ ११० ॥ ०

श्वेतदूर्वाऽतिशिशिरा मधुरा वान्तिपित्तजित्।
आमातिसारकासघ्नी रुच्या दाहतृषापहा ॥ १११ ॥

( मं पाण्ढरी हरियाली। कं विलियकरुके। तें शुक्लदूर्वालु। )

अथ मालादूर्वानाम।—

मालादूर्वा वल्लिदूर्वाऽलिदूर्वा मालाग्रन्थिर्ग्रन्थिला ग्रन्थिदूर्वा।
मूलग्रन्थिर्वल्लरी ग्रन्थिमूला रोहत्पर्वा पर्ववल्ली सिताख्या ॥११२॥

वल्लिदूर्वा सुमधुरा तिक्ता च शिशिरा च सा।
पित्तदोषप्रशमनी कफवान्तितृषापहा ॥ ११३ ॥

( मं वेलिहरियाली। कं वल्लिगरुके। बम्० वेलिदूर्वा।
गौ मालदूर्वा, गाँटियादूर्वा। )

अथ गण्डालीनाम। ( दूर्वाभेदः )।—

गण्डाली स्याद्गण्डदूर्वाऽतितीव्रा
मत्स्याक्षी स्याद्वारुणी मीननेत्रा।
श्यामग्रन्थिः ग्रन्थिला ग्रन्थिपर्णी
सूचीपत्रा श्यामकाण्डा जलस्था ॥ ११४ ॥

---

* अब्धयः सागराः चत्वारः, हस्तौ द्वौ, तेन चतुर्विंशत्याख्या इत्यर्थः।

शकुलाक्षी कलाया च चित्रा पञ्चदशाह्वया ॥ ११५ ॥
गण्डदूर्वा तु मधुरा वातपित्तज्वरापहा ।
शिशिरा द्वन्द्वदोषघ्नी भ्रमतृष्णाश्रमापहा ॥ ११६ ॥
( मं गाढ़ोहरियाली, गण्डरदूर्वा । कं मोनगत्ते । चिं गाण्डरि-
दुविपाच । गौ गेंटेदूर्वा । )

अथ दूर्वासाधारणगुणाः ।—

दूर्वाः कषाया मधुराश्च शीताः पित्ततृषाऽरोचकवान्तिहन्त्र्यः ।
सदाहमूर्च्छाग्रहभूतशान्ति-श्लेष्मश्रमध्वंसनतृप्तिदाश्च ॥ ११७ ॥

अथ कुन्दुरुनाम ।—

कुन्दुरुष्कन्दुरो रुण्डो दीर्घपत्रः खरच्छदः ।
रसाभः चैत्रसम्भूतः सुतृणो मृगवल्लभः ॥ ११८ ॥
शैत्यं कुन्दुरुमूलञ्च शीतं पित्तातिसारनुत् ।
प्रशस्तं शोधनानाञ्च बलपुष्टिविवर्द्धनम् ॥ ११९ ॥
( मं कुन्दुरु । कं करिणगे । )

अथ भूतृणनाम ।—

भूतृणो रोहिणो भूतिर्भूतिकोऽथ कुटुम्बकः ।
मालातृणं सुमाली च छत्रोऽतिच्छत्रकस्तथा ॥ १२० ॥
गुह्यवीजः सुगन्धश्च गुलालः पुंस्त्वविग्रहः ।
बधिरश्चातिगन्धश्च शृङ्गरोहः रसेन्दुकः ॥ १२१ ॥ *
भूतृणं कटुतिक्तञ्च वातसन्तापनाशनम् ।
हन्ति भूतग्रहावेशान् विषदोषांश्च दारुणान् ॥ १२२ ॥

* रसेन्दुकः रसाः षट्, इन्दुरेकः, तेन षोड़शसंख्यक इत्यर्थः ।

( मं सुगन्धिराद्दिसु । कं परिमलदगञ्जरिगा । तें चिप्पगड्डि ।
गौ गन्धतृण । अन्धदेशे प्रसिद्धः । )

अथ सुगन्धभूतृणनाम ।—

सुगन्धभूतृणश्चान्यः सुरसः सुरभिस्तथा ।
गन्धतृणः सुगन्धश्च मुखवासः षड़ाह्वयः ॥ १२३ ॥
गन्धतृणं सुगन्धि स्यादीषत्तिक्तं रसायनम् ।
स्निग्धं मधरशीतञ्च कफपित्तश्रमापहम् ॥ १२४ ॥

( मं सुगन्धितृण । गो पुदिना । )

अथ उखलनाम ।—

उखलो भूरिपत्रश्च सुतृणश्च तृणोत्तमः ।
उखलो बलदो रुच्यः पशूनां सर्वदा हितः ॥ १२५ ॥

( म घोड़सरु । कं द्देवोरसु । हिं उखल । )

अथ इक्षुदर्भानाम ।—

इक्षुदर्भा सुदर्भा च पत्रालुस्तृणपत्रिका ॥ १२६ ॥
इक्षुदर्भा सुमधुरा स्निग्धा चेषत्कषायका ।
कफपित्तहरा रुच्या लघुः सन्तर्पणी स्मृता ॥ १२७ ॥

( मं आश्वालु । कं कागविकत्तभेद । गो नटा । )

अथ गोमूत्रिकानाम ।—

गोमूत्रिका रक्ततृणा क्षेत्रजा कृष्णभूमिजा ।
गोमूत्रिका तु मधुरा वृष्या गोदुग्धदायिनी ॥ १२८ ॥

( मं ताम्बडु । कं गोढवि । गौ गोरसुने । )

अथ शिल्पिकानाम ।—

शिल्पिका शिल्पिनी शीता क्षेत्रजा च मृदुच्छदा ।

शिम्बिका मधुरा शीता तद्वीजं बलवृष्यदम् ॥ १२८ ॥

( मं लाइनसिम्बि । कं किरियसिम्बिगे । )

अथ निःश्रेणिकानाम ।—

निःश्रेणिका श्रेणिका च नीरसा वनवल्लरी ।
निःश्रेणिका नीरसोष्णा पशूनामबलप्रदा ॥ १३० ॥

( मं निरोषो । कोङ्कणे प्रसिद्धा । )

अथ गर्मोटिकानाम ।—

गर्मोटिका सुनीला च जरडी च जलाश्रया ॥ १३१ ॥
जरडी मधुरा शीता सारणी दाहहारिणी ।
रक्तदोषहरा रुच्या पशूनां दुग्धदायिनी ॥ १३२ ॥

( मं जरडि । कं हक्कलेयहुल्ल । तें गोड्डालवणतृण ।
गौ माडुयाघास । )

अथ मञ्जरनाम ।—

मञ्जरः पवनः प्रोक्तः सुतृणः स्निग्धपत्रकः ।
मृदुग्रन्थिश्च मधुरो धेनुदुग्धकरश्च सः ॥ १३३ ॥

( मं पवना । कं न्हले । गौ माजुरतृण । )

अथ गिरिभूनाम ।—

तृणाढ्यं पर्वततृणं पत्राढ्यञ्च मृगप्रियम् ।
बलपुष्टिकरं रुच्यं पशूनां सर्वदा हितम् ॥ १३४ ॥

( मं सखे । कं सेड । )

अथ वंशपत्रीनाम ।—

वंशपत्री वंशदला जीरिका जीर्णपत्रिका ।
वंशपत्री सुमधरा शिशिरा पित्तनाशनी ।

रक्तदोषहरा रुच्या पशूनां दुग्धदायिनी ॥ १३५ ॥
( मं वेणुपत्रि । कं विदिरयेले । तैं यथाकुल्लु । गौ वांशपाताघास । )

अथ मन्थानकनाम ।—

मन्थानकस्तु हरितो दृढ़मूलस्तृणाधिपः ।
स्निग्धो धेनुप्रियो दोग्धा मधुरो बहुवीर्य्यकः ॥ १३६ ॥
( मं मारवेलु । कं मारवल्लि । )

अथ पल्लिवाहनाम ।—

पल्लिवाहो दीर्घतृणः सुपत्रस्ताम्रवर्णकः ।
अदृढ़ः शाकपत्रादिः पशूनामबलप्रदः ॥ १३७ ॥
( मं पोकलि । कं होते । तां पोकलगवत । )

अथ पटुतृणनाम ।—

लवणतृणं लोणतृणं तृणाम्लं पटुतृणकमम्लकाण्डञ्च ।
पटुतृणकं क्षाराम्लं कषायस्तन्यमश्ववृद्धिकरम् ॥ १३८ ॥ *
( मं लोणा । कं हुणवुल्लु । गौ लोणाघास । )

अथ पण्यान्धनाम ।—

पण्यान्धः कङ्गुणीपत्रः पण्यान्धा पणधा च सा ॥ १३९ ॥
पण्यान्धा समवीर्य्या स्यात् तिक्ता क्षारा च सारिणी ।
तत्कालशस्त्रघातस्य व्रणसंरोपणी परा ॥ १४० ॥
दीर्घा मध्या तथा ह्रस्वा पण्यान्धा त्रिविधा स्मृता ।

---

* पटुशुकशब्दस्य पटुतृणपर्य्यायवाचितया पटुतृणशब्दानन्तरं पटुशुकशब्दपर्य्याये अवश्यवक्तव्येऽपि अत्र तदकथनं न कमपि दोषमावहतीति सुधीभिर्मृग्यम् ।

रसवीर्य्यविपाके च मध्यमा गुणदायिका ॥ १४१ ॥

( मं पखाधे तीखो । कं ह्वयाचेमूरु । )

अथ गुण्डनाम ।—

गुण्डस्तु काण्डगुण्डः स्याद् दीर्घकाण्डस्त्रिकोणकः ।
छत्रगुच्छोऽसिपत्रश्च नीलपत्रस्त्रिधारकः ॥ १४२ ॥
वृत्तगुण्डोऽपरो वृत्तो दीर्घनालो जलाश्रयः ।
तत्र स्थूलो लघुश्चान्यस्त्रिधाऽयं द्वादशाभिधः ॥ १४३ ॥
गुण्डास्तु मधुराः शीताः कफपित्तातिसारहाः ।
दाहरक्तहरास्तेषां मध्ये स्थूलतरोऽधिकः ॥ १४४ ॥

( मं बलद्यातीणि । कं मूलगेरु । गौ केशुरघास । केउटीति लोके । अस्य कन्दः कसेरुरिति । )

अथ गुण्डकन्दनाम ।— *

गुण्डकन्दः कसेरुः स्यात् क्षुद्रमुस्ता कसेरुका ।
शूकरेष्टः सुगन्धिश्च सुकन्दो गन्धकन्दकः ॥ १४५ ॥
कसेरुकः कषायोऽल्प-मधुरोऽतिखरस्तथा ।
रक्तपित्तप्रशमनः शीतो दाहश्रमापहः ॥ १४६ ॥

( मं कसेरुवा । कं सेकिनगडे । तां तुङ्गगडु । तें दुट्टि, कोति । गौ केसुर । )

---

* कसेरुकं द्विविधं ज्ञेयं, राजकसेरुकं चिश्चोढ़कश्च । उक्तञ्च भावमिश्रेण—"कसेरुकद्वयं शीतं मधुरं तुवरं गुरु ।
पित्तशोणितदाहघ्नं नयनामयनाशनम् ॥" इति ।

अथ चणिकानाम।—

चणिका दुग्धदा गौल्या सुनीला क्षेत्रजा हिमा।
वृष्या बल्याऽतिमधुरा वीजैः पशुहिता तृणैः॥ १४७॥
( मं चणाइ। कं चणगियहुलु। गो चोणारशाक।)

अथ गुण्डासिनीनाम।—

गुण्डासिनी तु गुण्डा गुण्डाला गुच्छमूलका चिपिटा।
तृणपत्री जलवासा पृथुला सुविष्टरा च नवाह्वा॥ १४८॥
गुण्डासिनी कटुः स्वादे पित्तदाहश्रमापहा।
तिक्तोष्णा श्वयथुघ्नी च व्रणदोषनिवर्हणी॥ १४९॥
( मं आंपु।)

अथ शूलीनाम।—

शूली तु शूलपत्री स्यादशाखा धूम्रमूलिका।
जलाश्रया मृदुलता पिच्छिला महिषीप्रिया॥ १५०॥
शूली तु पिच्छिला चोष्णा गुरुर्गौल्या बलप्रदा।
पित्तदाहहरा रुच्या दुग्धवृद्धिप्रदायिका॥ १५१॥
( मं, वम्० शूली। कं सोगले। गौ शोला।)

अथ परिपेल्ल(ल)नाम।—

परिपेल्लं प्लवं धान्यं गोपुटं स्यात् कुटन्नटम्।
सितपुष्पं दासपुरं गोनर्दं जीर्णबुध्नकम्॥ १५२॥
परिपेल्लं कटूष्णञ्च कफमारुतनाशनम्।
व्रणदाहामशूलघ्नं रक्तदोषहरं परम्॥ १५३॥
(मं,जलमगडवि। कं बलिगङ्ड। गौ कैवर्तमुस्ता।)

अथ हिज्ज(ज्जु)लनाम ।—

हिज्जलोऽथ नदीकान्तो जलजो दीर्घपत्रकः ।
नदीजो निचुलो रक्तः कार्मुकः कथितश्च सः ॥ १५४ ॥
हिज्जलः कटुरुष्णश्च पवित्रो भूतनाशनः ।
वातामयहरो नाना-ग्रहसञ्चारदोषजित् ॥ १५५ ॥

( मं पर्व्वलु । कं तोरेगणगिले । उत्० किञ्जोली । वम्० समुन्द्र-फल, परेल । हिं इजर, समुन्दर फल । गौ हिजलगाछ । )

अथ शैवाल(सेवाल)नाम ।—

शैवालं जलनीली स्यात् शैवलं जलजश्च तत् ।
शैवालं शीतलं स्निग्धं सन्तापव्रणनाशनम् ॥ १५६ ॥

( मं सेवाल । कं हांवसे । गौ शेओला ) )

इत्थं नानाकण्टकिविटपिप्रस्ताव-
व्याख्यातैरण्डादिकतृणविस्ताराढ्यम् ।
वर्गं विद्वान् वैद्यकविषयप्रावीण्य-
श्लेयं पण्यारण्यकगुणमीयाद्वैद्यः ॥ १५७ ॥
दुर्वारां विकृतिं स्वसेवनविदां भिन्दन्ति ये भूयसा
दुर्वाहाश्च हठेन कण्टकितया सूक्ष्माश्च ये केचन ।
तेषामेष महागमान्तरभुवामारण्यकानां किल
क्रूरातङ्कभयार्त्तनिर्वृतिकरो वर्गः सतां सम्मतः ॥ १५८ ॥
द्विजानां यो राजा जयति रचयन्नोषधिगणं
प्रतीतोऽयं नृणाममृतकरतां धारयति च ।

अमुष्यायं वर्गो नृहरिकृतिनः काङ्क्षति कृतौ
स्थितिं शाल्मल्यादिर्वसुभिरभिधाशेखरमणौ ॥ १५८. ॥

इति श्रीनरहरिपण्डितविरचिते राजनिघण्टौ
शाल्मल्यादिनामाष्टमो वर्गः ।

---

# अथ प्रभद्रादिवर्गः ।

प्रभद्रः पञ्चधा प्रोक्तः काश्मर्य्यो लघुपूर्वकः ।
द्विरग्निमन्थः श्योनाक-द्वितयं चाजशृङ्गिका ॥ १ ॥
काश्मर्य्याश्मन्तकश्चाथ कर्णिकारद्वयं तथा ।
वृश्चिकाली च कुटजस्तद्बीजश्च शिरीषकः ॥ २ ॥
करञ्जः षड्विधोऽङ्कोलो नीलः सर्जाश्वकर्णकौ ।
तालः श्रीतालहिन्ताल-माड़ास्तलस्तमालकः ॥ ३ ॥
चतुर्विधः कदम्बोऽथ वानीरः कुम्भिवेतसः ।
धवश्च धन्वनो भूर्जस्तिनिशश्च ततोऽर्जुनः ॥ ४ ॥
इरिद्रुदग्धाशाखोटाः शाकोऽथो शिंशपात्रयम् ।
असनत्रयं च वरुणः पुत्रजीवश्च पिण्डिका ॥ ५ ॥
कारस्करोऽथ कटभ्यौ चवको देवसर्षपः ।
इङ्गुविकङ्कतश्चेति स्वराब्धिगणिताः क्रमात् ॥ ६ ॥ *

अथ प्रभद्रनाम ।—

अथ निगदितः प्रभद्रः पिचुमन्दः पारिभद्रको निम्बः ।

---

* स्वराः सप्त, अब्धयः चत्वारः, तेन सप्तचत्वारिंशत्संख्याका इत्यर्थः ।

काकफलः कीरेष्टो नेताऽरिष्टश्च सर्वतोभद्रः ॥ ७ ॥
धमनो विशीर्णपर्णो पवनेष्टः पीतसारकः शीतः ।
वरतिक्तोऽरिष्टफलो ज्येष्ठामालकश्च हिङ्गुनिर्यासः ॥ ८ ॥
छर्दनश्चाग्निधमनो ज्ञेया नाम्नान्तु विंशतिः ॥ ९ ॥

प्रभद्रकः प्रभवति शीततिक्तकः
कफव्रणक्रिमिवमिशोफशान्तये ।
बलासभिद्बहुविषपित्तदोषजिद्
विशेषतो हृदयविदाहशान्तिकृत् ॥ १० ॥

( मं निम्बु, लिम्ब । कं बेउ । तें यैपचेट्ट् । तां वेपुम्मरम ।
हिं निम् । गौ निमगाछ । )

अथ महानिम्बनाम ।—

महानिम्बो मदोद्रेकः कार्मुकः केशमुष्टिकः ।
काकाण्डो रम्यकोऽक्षीरो महातिक्तो हिमद्रुमः ॥ ११ ॥
महानिम्बस्तु शिशिरः कषायः कटुतिक्तकः ।
अस्रदाहबलासघ्नो विषमज्वरनाशनः ॥ १२ ॥

( कं महानिम्बु । मं डोंराबा, निम्बाबाँड् । तें गङ्गाविचेट्ट,
पेद्दवेपचेट्ट्, तुरकवेप, कण्डवेप । द्रां गौरीनिम । तां
मलाइवेतु वा वेप्पम् । हिं बकाइन् । गौ
महानिम, घोंड़ानिम्, वननिम् । )

अथ कैडर्य्यनाम । ( निम्बभेदः ) ।—

कैडर्य्योऽन्यो महानिम्बो रामणो रमणस्तथा ।
गिरिनिम्बो महारिष्टः शुक्लशालः कफाश्रयः ॥ १३ ॥

कैडर्य्यः कटुकस्तिक्तः कषायः शीतलो लघुः।
सन्तापशोषकुष्ठास्र-कृमिभूतविषापहः॥ १४॥

( मं फलितमहानिम्बु, गोरानिम्ब। कं कयाबेवेउ।
गौ पाहाड़े निम।)

अथ भूनिम्बनाम।—

भूनिम्बो नार्य्यतिक्तः स्यात् कैरातो रामसेनकः।
कैराततिक्तको हैमः काण्डतिक्तः किरातकः॥ १५॥
भूनिम्बो वातलस्तिक्तः कफपित्तज्वरापहः।
व्रणसंरोपणः पथ्यः कुष्ठकण्डूतिशोफनुत्॥ १६॥

( मं भूनिम्बु, चिराइता। कं नेलवेउचु। तें नेलवेमु। हिं
चिरायता। गौ चिरेता।)

अथ नेपालनिम्बनाम।—

नेपालनिम्बो नैपालस्तृणनिम्बो ज्वरान्तकः।
नाड़ीतिक्तोऽर्द्धतिक्तश्च निद्रारिः सन्निपातहा॥ १७॥
नेपालनिम्बः शीतोष्णो योगवाही लघुस्तथा।
तिक्तोऽतिकफपित्तास्र-शोफतृष्णाज्वरापहः॥ १८॥

( मं नेपालनिम्बु। कं चिराथिता, चिराइती।)

अथ लघुकाश्मर्य्यनाम।—

कण्डूलः कृष्णगर्भश्च सोमवल्कप्रचेतसौ।
भद्रावती महाकुम्भी कैडर्य्यो रामसेनकः॥ १९॥
कुमुदा चोग्रगन्धश्च भद्रा रञ्जनकस्तथा।
कुम्भी च लघुकाश्मर्य्यः श्रीपर्णी च त्रिपञ्चधा॥ २०॥
कट्फलः कटुरुष्णश्च कासश्वासज्वरापहः।

उष्णदाहहरो रुच्यो मुखरोगशमप्रदः ॥ २१ ॥

( मं कायफल । कं किरुसिवल्लि । तें पापरवुड्म । हिं कायफर् । गौ कट्फल, कायफाल । )

अथ अग्निमन्थनाम ।—

अग्निमन्थोऽग्निमथनः तर्कारी वैजयन्तिका ।
वह्निमन्थोऽरणी केतुः श्रीपर्णी कर्णिका जया ।
नादेयी विजयाऽनन्ता नदी यावत् त्रयोदश ॥ २२ ॥
तर्कारी कटुरुष्णा च तिक्ताऽनिलकफापहा ।
शोफश्लेष्माग्निमान्द्यार्शो-विड्बन्धाध्माननाशनी ॥ २३ ॥

( मं नरुवल । तें चिरिनेल्लचेट्टु । उत्० अग्नित्रय । हिं अरणि, अगाथ्य, गणियारि । गौ गणिरि, आग्गान्त । )

अथ क्षुद्राग्निमन्थनाम ।—

क्षुद्राग्निमन्थस्तपनो विजया गणिकारिका ।
अरणिर्लघुमन्थश्च तेजोवृक्षस्तनुत्वचा ॥ २४ ॥
अग्निमन्थद्वयं चैव तुल्यं वीर्य्यरसादिषु ।
तत्प्रयोगानुसारेण योजयेत् स्वमनीषया ॥ २५ ॥

( मं टाकलि । कं वल्लि । गौ छोट गणिरि । )

अथ श्योनाकद्वयनाम ।—

श्योनाकः शुकनासश्च कट्वङ्गोऽथ कटम्भरः ।
मयूरजङ्घोऽरलुकः प्रियजीवः कुटन्नटः २६ ॥
श्योनीकः पृथुशिम्बोऽन्यो भल्लको दीर्घवृन्तकः ।
पीतवृक्षश्च टेण्टूको भूतसारो मुनिद्रुमः ॥ २७ ॥

निःसारः फल्गुवृन्ताकः पूतिपत्रो वसन्तकः।
मण्डूकपर्णः पीताङ्गो जम्बूकः पीतपादकः॥ २८॥
वातारिः पीतकः शोणः कुटनश्च विरेचनः।
भ्रमरेष्टो बर्हिजङ्घो नेत्रनेत्रमिताभिधः॥ २९॥ *
श्योनाकयुगलं तिक्तं शीतलं च त्रिदोषजित्।
पित्तश्लेष्मातिसारघ्नं सन्निपातज्वरापहम्॥ ३०॥
टेण्टुफलं कटूष्णञ्च कफवातहरं लघु।
दीपनं पाचनं हृद्यं रुचिकृल्लवणाम्लकम्॥ ३१॥
(मं टेण्टू। कं शाणाशोडिलमर। उत्० फणफणा। पञ्जा० मुलिन्। नेपा० करमकन्द। तां पन। हिं सोनापाठा, अलु। गो शोनागाछ।)

अथ अजशृङ्गीनाम।—

अजशृङ्गी मेषशृङ्गी वर्त्तिका सर्पदंष्ट्रिका।
चक्षुष्या तिक्तदुग्धा च पुत्रश्रेणी विषाणिका॥ ३२॥
अजशृङ्गी कटुस्तिक्ता कफार्शःशूलशोफजित्।
चक्षुष्या श्वासहृद्रोग-विषकासातिकुष्ठजित्॥ ३३॥
अजशृङ्गीफलं तिक्तं कटूष्णं कफवातजित्।
जठरानलकृत् हृद्यं रुचिरं लवणाम्लकम्॥ ३४॥
(मं मेषसेंग। कं उरियमर। गो म्याड़ाशिङे, छागलवेंटे, गाड़लशिङी।)

* नेत्रनेत्रमिताभिधः,—द्वेले द्वे, नेत्राणि त्रीणि, द्वात्रिंशत्संख्यका-नीत्यर्थः।

अथ काश्मरीनाम ।—

स्यात् काश्मर्यः काश्मरी कृष्णवृन्ता
हीरा भद्रा सर्वतोभद्रिका च ।
श्रीपर्णी स्यात् सिन्धुपर्णी सुभद्रा
कम्भारी सा कट्फला भद्रपर्णी ॥ ३५ ॥
कुमुदा च गोपभद्रा विदारिणी चोरिणी महाभद्रा ।
मधुपर्णी स्वभद्रा कृष्णा श्वेता च रोहिणी गृष्टिः ॥ ३६ ॥
स्थूलत्वचा मधुमती सुफला मेदिनी महाकुमुदा ।
सुदृढ़त्वचा च कथिता विज्ञेयोनत्रिंशतिर्नाम्नाम् ॥ ३७ ॥
काश्मरी कटुका तिक्ता गुरूष्णा कफशोफनुत् ।
त्रिदोषविषदाहार्त्ति-ज्वरतृष्णास्रदोषजित् ॥ ३८ ॥
( मं, कं, सीवमनी । तें गम्भारि । गो गाम्भारीगाछ । )

अथ अश्मन्तकनाम ।—

अश्मन्तकश्चेन्दुकश्च कुद्दालश्चाम्लपत्रकः ।
अच्छात्वक् पोलुपत्रश्च स्मृतो यमलपत्रकः ॥ ३९ ॥
अश्मान्तकेन्दुशफरी शिलान्तश्चाम्बुदः स्मृतः ।
पाषाणान्तक इत्युक्तो वह्निचन्द्रमिताह्वयः ॥ ४० ॥ *
अश्मन्तकः स्यान्मधुरः कषायः
सुशीतलः पित्तहरः प्रमेहजित् ।
विदाहतृष्णाविषमज्वरापहो
विषार्त्तिविच्छर्दिहरश्च भूतजित् ॥ ४१ ॥
( मं आबुटा । कं अश्मूर । )

---

* वह्निचन्द्रमिताह्वयः त्रयोदशसंख्यक इत्यर्थः ।

अथ कर्णिकारनाम।—

अथ भवति कर्णिकारो राजतरुः प्रग्रहश्च कृतमालः।
सुफलश्च परिव्याधो व्याधिरिपुः पङ्क्तिवीजको वसुसंज्ञः ॥४२॥*

कर्णिकारो रसे तिक्तः कटूष्णः कफशूलहृत्।
उदरक्रिमिमेहघ्नो व्रणगुल्मनिवारणः ॥ ४३ ॥

( भं लघुवाहव्या। कं, तें किरुगक्के। गो छोट सोणालुगाछ। )

अथ आरग्वधनाम।—

आरग्वधोऽन्यो मन्थानो रोचनश्चतुरङ्गुलः।
आरेवतो दीर्घफलो व्याधिघातो नृपद्रुमः ॥ ४४ ॥
हेमपुष्पो राजतरुः कण्डूघ्नश्च ज्वरान्तकः।
अरुजः स्वर्णपुष्पश्च स्वर्णद्रुः कुष्ठसूदनः ॥ ४५ ॥
कर्णाभरणकः प्रोक्तो महाराजद्रुमः स्मृतः।
कर्णिकारो महादिः स्यात् प्रोक्तश्चैकोनविंशतिः ॥ ४६ ॥
आरग्वधोऽतिमधुरः शीतः शूलापहारकः।
ज्वरकण्डूकुष्ठमेह-कफविष्टम्भनाशनः ॥ ४७ ॥

( मं वड़िलुवाहव्याचेभाड़। कं हेग्गके। तें रेल्लचेट्टु। उत्० सुनारि। हिं आमलटास्, धनबहेड़ा, शोणाहाली। गौ वड़ सोँदाल, लड़ियाशोणाल, राखाल-नड़ी, वानरनड़ी। )

अथ वृश्चिकालीनाम।—

वृश्चिकाली विषाणी च विषघ्नी नेत्ररोगहा।

---

* वसुसंज्ञः अष्टाह्वयः।

उष्ट्रिकाप्यलिपर्णी च दक्षिणावर्त्तको तथा ॥ ४८ ॥
कलिकाप्यागमावर्त्ता देवलाङ्गुलिका तथा ।
करभा भूरिदुग्धा च कर्कशा चामरा च सा ॥ ४९ ॥
स्वर्णपुष्पा युग्मफला तथा चीरविषाणिका ।
प्रोक्ता भासुरपुष्पा च वसुचन्द्रसमाह्वया ॥ ५० ॥ *
वृश्चिकाली कटुस्तिक्ता सोष्णा हृद्दक्तशुद्धिकृत् ।
रक्तपित्तहरा बल्या विबन्धारोचकापहा ॥ ५१ ॥
( मं वृश्चिकाली । कं हलिगुलु । तें ड़ुलघोंडो । तां कम्बुरि ।
बम्० मेढ़शिङ्गी । हिं वहण्टा । गो विछाति । )

अथ कुटजनाम ।—

कुटजः कौटजः शक्रो वत्सको गिरिमल्लिका ।
कलिङ्गो मल्लिकापुष्पः प्रावृष्यः शक्रपादपः ॥ ५२ ॥
वरतिक्तो यवफलः संग्राही पाण्डुरद्रुमः ।
प्रावृषेण्यो महागन्धः स्यात् पञ्चदशधाभिधः ॥ ५३ ॥
कुटजः कटुतिक्तोष्णः कषायश्चातिसारजित् ।
तत्रासितोऽस्रपित्तघ्नस्त्वग्दोषार्शोनिकृन्तनः ॥ ५४ ॥
( मं कुडा । कं कोडसिगेयमरनु । हिं कवैया । तें अङ्कुडुचेट्टु,
अग्निशचेट्टु, तुम्मिकचेट्टु । उत्० कुड़िया ।
गो कुड़चिगाछ । )

अथ इन्द्रयवनाम ।—

इन्द्रयवा तु शक्राह्वा शक्रबोजानि वत्सकः ।
तथा वत्सकबोजानि भद्रजा कुटजाफलम् ॥ ५५ ॥

---

* वसुचन्द्रसमाह्वया अष्टादशाभिधा ।

ज्ञेया भद्रयवा चैव बीजान्ता कुटजाभिधा ।
तथा कलिङ्गबीजानि पर्य्यायैर्दंशधाभिधा ॥ ५६ ॥
इन्द्रयवा कटुस्तिक्ता शीता कफवातरक्तपित्तहरा ।
दाहातिसारशमनो नानाज्वरदोषशूलमूलघ्नी ॥ ५७ ॥
( मं इन्द्रजव, कुड्याचेम्बीं । कं कोडसिगेयबीज ।
उत्० हिं, गौ, इन्द्रयव । )

अथ शिरीषनाम ।—

शिरीषः शीतपुष्पश्च भण्डिको मृदुपुष्पकः ।
शुकेष्टो वर्हिपुष्पश्च विषहन्ता सुपुष्पकः ॥ ५८ ॥
उद्दानकः शुकतरुर्ज्ञेयो लोमशपुष्पकः ।
कपीतनः कलिङ्गश्च श्यामलः शङ्खिनीफलः ।
मधुपुष्पस्तथा वृत्त-पुष्पः सप्तदशाह्वयः ॥ ५९ ॥
शिरीषः कटुकः शीतो विषवातहरः परः ।
पामासृक्कुष्ठकण्डूति-त्वग्दोषस्य विनाशनः ॥ ६० ॥
( मं सिरसु । तें दिरसन । हिं शिरिष, लररौनृ, कलसिस ।
गौ शिरीषगाछ । )

अथ करञ्जनाम ।—

करञ्जो नक्तमालश्च पूतिकश्चिरविल्वकः ।
पूतिपर्णो वृद्धफलो रोचनश्च प्रकीर्य्यकः ॥ ६१ ॥
करञ्जः कटुरुष्णश्च चक्षुष्यो वातनाशनः ।
तस्य स्नेहोऽतिस्निग्धश्च वातघ्नः स्थिरदोषिदः ॥ ६२ ॥
( मं करञ्ज । तें कानुगचेट्टु । हिं करोदा, कञ्जुवा ।
गौ डहरकरञ्ज । )

अथ घृतकरञ्जनाम ।—

अन्यो घृतकरञ्जः स्यात् प्रकीर्य्यो घृतपर्णकः ।
स्निग्धपत्रस्तपस्वी च विषारिश्च विरोचनः ॥ ६३ ॥
घृतकरञ्जः कटूष्णो वातहृद् व्रणनाशनः ।
सर्वत्वग्दोषशमनो विषस्पर्शविनाशनः ॥ ६४ ॥

( मं करञ्जभेद । कं तपसियमरनु । गौ घियाकरम्चा । )

अथ महाकरञ्जनाम ।—

ज्ञेयो महाकरञ्जोऽन्यः षड्ग्रन्थो हस्तिचारिणी ।
उदकीर्या विषघ्नी च काकघ्नी मदहस्तिनी ।
अङ्गारवल्ली शार्ङ्गेष्टा मधुसत्ताऽवमायिनी ॥ ६५ ॥
हस्तिरोहणकश्चैव ज्ञेयो हस्तिकरञ्जकः ।
सुमनाः काकभाण्डी च मदमत्तश्च षोड़श ॥ ६६ ॥
महाकरञ्जस्तीच्णोष्णः कटुको विषनाशनः ।
कण्डूविचर्चिकाकुष्ठ-त्वग्दोषव्रणनाशनः ॥ ६७ ॥

( मं वडिलकरञ्ज । कं हिरियहुलुगिलु । गौ डहरकरञ्जाभेद । )

अथ पुतिकरञ्जनाम ।—

प्रकीर्य्यो रजनीपुष्पः सुमनाः पूतिकर्णिकः ।
पूतिकरञ्जः कैड़र्य्यः कलिमालश्च सप्तधा ॥ ६८ ॥

( मं पूतीकरञ्ज । कं वाकव । तें हुलिगिलु । तां पेन्नाककय । वम्० सागरगोटा । हिं कण्टकरेजा । गौ नाटा करञ्जा । )

अथ गुच्छकरञ्जनाम ।—

अन्यो गुच्छकरञ्जः स्निग्धदलो गुच्छपुच्छको नन्दी ।

गुच्छी च मातृनन्दी सानन्दो दन्तधावनो वसवः ॥ ६९ ॥ *

करञ्जः कटुतिक्तोष्णो विषवातार्त्तिकृन्तनः ।
कण्डूविचर्च्चिकाकुष्ठ-स्पर्शत्वग्दोषनाशनः ॥ ७० ॥

( मं करञ्जभेद । कं हुलिगिलभेदउ । )

अथ रीठाकरञ्जनाम ।—

रीठाकरञ्जकस्त्वन्यो गुच्छलो गुच्छपुष्पकः ।
रीठा गुच्छफलोऽरिष्टो मङ्गल्यः कुम्भवीजकः ।
प्रकीर्य्यः सोमवल्कश्च फेनिलो रुद्रसंज्ञकः ॥ ७१ ॥ †
रीठाकरञ्जस्तिक्तोष्णः कटुः स्निग्धश्च वातजित् ।
कफघ्नः कुष्ठकण्डूति-विषविस्फोटनाशनः ॥ ७२ ॥

( मं, हिं, रीठा । कं अरिठाल । तें रीठाकरञ्जमनेचेट्टु, कुकुड़कयलु । वम्० रिथा । ता पोन्नानकोट्टइ । गौ वड़ रीठा । )

अथ अङ्कोलनाम ।—

अङ्कोलः कोठरो रेची गूढ़पत्रो निकोचकः ।
गुप्तस्नेहः पीतसारो मदनो गूढ़मल्लिका ॥ ७३ ॥
पीतस्ताम्रफलो ज्ञेयो दीर्घकालो गुणाढ्यकः ।
कोलः कोलम्बकर्णश्च गन्धपुष्पश्च रोचनः ।
विज्ञानतैलगर्भश्च स्मृतिसंख्याभिधा स्मृतः ॥ ७४ ॥ ‡

---

* वसवः अष्टाभिधाः इत्यर्थः ।

† रुद्रसंज्ञकः एकादशाह्वः ।

‡ स्मृतिसंख्याभिधा अष्टादशाह्वः ।

अङ्कोलः कटुकः स्निग्धो विषलूतादिदोषनुत्।
कफानिलहरः सूत-शुद्धिकृत् रेचनीयकः ॥ ७५ ॥
( मं अङ्कोल। कं अङ्कुले। हिं ढेरा। गौ धलाआँकोड़ गाछ। )

अथ नीलवृक्षनाम।—

नीलस्तु नीलवृक्षो वातारिः शोफनाशनो नखनामा।
नखवृक्षश्च नखालुर्नखप्रियो दिग्गजेन्द्रमितसंज्ञः ॥ ७६ ॥ *
नीलवृक्षस्तु कटुकः कषायोष्णो लघुस्तथा।
वातामयप्रशमनो नानाश्वयथुनाशनः ॥ ७७ ॥
( कों, माल०, मं, गौ नीलवृक्ष। )

अथ सर्जनाम।—

सर्जः सर्जरसः शालः कालकूटो रजोद्भवः।
वल्लीवृक्षश्चीरपर्णी रालः कार्श्योऽजकर्णकः ॥ ७८ ॥
वस्तकर्णः कषायी च ललनो गन्धवृक्षकः।
वंशश्च शालनिर्यासो दिव्यसारः सुरेष्टकः।
शूरोऽग्निवल्लभश्चैव यक्षधूपः सुसिद्धकः ॥ ७९ ॥
सर्जस्तु कटुतिक्तोष्णो हिमः स्निग्धोऽतिसारजित्।
पित्तास्रदोषकुष्ठघ्नः कण्डूविस्फोटवातजित् ॥ ८० ॥
( मं साजडा। कं सज्जरद्मर। तें मर्ज्जरसमु। पञ्जा० रालअलुं।
हिं किंलि।। गौ धूना। )

---

* दिग्गजेन्द्रेत्यनेन अष्टसंख्या बोद्धव्या। ऐरावतादिनामनिर्देशेन अमरसिंहपादेनापि तेषामष्टौ संख्याः परिगणिताः ; यथा,—
"ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः।
पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः ॥" इति।

अथ अश्वकर्णनाम :-

जरणद्रुमोऽश्वकर्णस्तार्च्यप्रसवश्च शस्यसंवरणः ।
धन्यश्च दीर्घपर्णः कुशिकतरुः कौशिकश्चापि ॥ ८१ ॥
अश्वकर्णः कटुस्तिक्तः स्निग्धः पित्तास्रनाशनः ।
ज्वरविस्फोटकण्डूघ्नः शिरोदोषार्त्तिकृन्तनः ॥ ८२ ॥
( मं शीवासर्जरसः । कं दमरनभेद । गो लताशाल । )

अथ तालद्रुमनाम ।—

तालस्तालद्रुमः पत्री दीर्घस्कन्धो ध्वजद्रुमः ।
तृणराजो मधुरसो मदाढ्यो दीर्घपादपः ॥ ८३ ॥
चिरायुस्तरुराजश्च गजभक्ष्यो दृढ़च्छदः ।
दीर्घपत्रो गुच्छपत्रोऽप्यासवद्रुश्च षोड़श ॥ ८४ ॥
तालश्च मधुरः शीत-पित्तदाहश्रमापहः ।
सरश्च कफपित्तघ्नो मदकृद्दाहशोषनुत् ॥ ८५ ॥
( खरताल इति अन्ध्रदेशे प्रसिद्धः । गुर्जं० तड़ । तां पनस ।
हिं, उत्०, ताड़ । गो ताल । )

अथ शीतालनाम ।—

शीतालो मधुतालश्च लक्ष्मीतालो मृदुच्छदः ।
विशालपत्रो लेखार्हो मसीलेख्यदलस्तथा ।
शिरालपत्रकश्चैव याम्योद्भूतो नवाह्वयः ॥ ८६ ॥
शीतालो मधुरोऽत्यन्तमीषच्चैव कषायकः ।
पित्तजित्कफकारी च वातमीषत्प्रकोपयेत् ॥ ८७ ॥
( शीताल इति मलियालदेशे प्रसिद्धः । )

अथ हिन्तालनाम ।—

हिन्तालः स्थूलतालश्च वल्कपत्रो वृहद्दलः ।
गर्भस्रावी लतातालो भीषणो बहुकण्टकः ॥ ८८ ॥
स्थिरपत्रो द्विधालेख्यः शिरापत्रः स्थिराङ्घ्रिपः ।
अम्लसारो वृहत्तालः स्याच्चतुर्दशधाऽभिधः ॥ ८९ ॥
हिन्तालो मधुराम्लश्च कफकृत् पित्तदाहनुत् ।
श्रमतृष्णापहारी च शिशिरो वातदोषनुत् ॥ ९० ॥

( हिन्तालु इति दक्षिणे प्रसिद्धः । गो हांताल्गाछ । )

अथ माड़नाम ।—

माड़ो माड़द्रुमो दीर्घो ध्वजवृक्षो वितानकः ।
मद्यद्रुमो मोहकारी मदद्रुर्नृत्वरङ्कधा ॥ ९१ ॥ *
माड़स्तु शिशिरो रुच्यः कषायः पित्तदाहकृत् ।
तृष्णापहो मदकारी श्रमहृत् श्लेष्मकारकः ॥ ९२ ॥

( मं माड़ । कं वैनो । कों जिर्कतुराड़ । वम्० भेलीमाड़ । )

अथ तूलनाम ।—

तूलं तूदं ब्रह्मकाष्ठं ब्राह्मणेष्टं च यूपकम् ।
ब्रह्मदारु सुपुष्पं च सुरूपं नीलवृन्तकम् ।
क्रमुकं विप्रकाष्ठं च मृदुसारं द्विभूमितम् ॥ ९३ ॥ †

---

* अङ्कधा इति नवसंख्या ज्ञेया ।

† द्विभूमितमिति ।—द्विः, भूः पृथ्वी, एक इत्यर्थः ; ततः एकस्य वामगत्या द्वादशसंख्या ।

तूलं तु मधुराम्लं स्यात् वातपित्तहरं सरम् ।
दाहप्रशमनं वृष्यं कषायं कफनाशनम् ॥ ९४ ॥

( मं पारिसापिम्पलु, बङ्करलि । तें कम्बलिचेट्टु । तां मघुकट्टइ-
चेड्डि । हिं तूतरी, साहुड़ । गौ तुँत्, पलाशपिपुल ।
आवलुष इति कश्चित् । )

अथ तमालनाम ।—

तमालो नीलतालः स्यात्कालस्कन्धस्तमालकः ।
नीलध्वजश्च तापिञ्छः कालतालो महाबलः ॥ ९५ ॥
तमालो मधुरो बल्यो वृष्यश्च शिशिरो गुरुः ।
कफपित्ततृषादाह-श्रमभ्रान्तिकरः परः ॥ ९६ ॥

( मं तमालु । कं कदालउ । गौ तमालगाछ । )

अथ कदम्बनाम ।—

कदम्बो वृत्तपुष्पश्च सुरभिर्ललनाप्रियः ।
कादम्बर्य्यः सिन्धुपुष्पो मदाढ्यः कर्णपूरकः ॥ ९७ ॥
कदम्बस्तिक्तकटुकः कषायो वातनाशनः ।
शीतलः कफपित्तार्त्ति-नाशनः शुक्रवर्द्धनः ॥ ९८ ॥

( मं कलम्बु । कं कडेव् । तें कड़िमिचेट्टु । गौ कदमगाछ । )

अथ धाराकदम्बनाम ।—

धाराकदम्बः प्रावृष्यः पुलको भृङ्गवल्लभः ।
मेघागमप्रियो नीपः प्रावृषेण्यः कदम्बकः ॥ ९९ ॥

( मं धाराकलम्बु । कं धारेयकड़उ । तें मोगुलुकड़िमि ।
हिं हलदु । गौ कैलिकदम् । )

अथ धूलीकदम्बनाम ।—

धूलीकदम्बः क्रमुकप्रसूनः परागपुष्पो बलभद्रसंज्ञकः ।
वसन्तपुष्पो मकरन्दवासो भृङ्गप्रियो रेणुकदम्बकोऽष्टौ ॥१००॥

( मं धूलिकदम्बु । कं धूलिगडब । )

अथ भूमीकदम्बनाम ।—

भूमीकदम्बो भूनिम्बो भूमिजो भृङ्गवल्लभः ।
लघुपुष्पो वृत्तपुष्पो विषघ्नो व्रणहारकः ॥ १०१ ॥

( मं भूमिकदम्बु । कं नेलगडबु । )

अथ त्रिकदम्बगुणाः ।—

त्रिकदम्बाः कटुवर्ण्या विषशोफहरा हिमाः ।
कषायाः पित्तलास्तिक्ता वीर्य्यवृद्धिकराः पराः ॥ १०२ ॥

अथ वानीरनाम ।—

वानीरो वृत्तपुष्पश्च शाखालो जलवेतसः ।
व्याधिघातः परिव्याधो नादेयो जलसम्भवः ॥ १०३ ॥
वानीरस्तिक्तशिशिरो रक्षोघ्नो व्रणशोधनः ।
पित्तास्रकफदोषघ्नः संग्राही च कषायकः ॥ १०४ ॥

( मं वञ्जालु । कं बेसियमरगु । गौ जलवेत । )

अथ कुम्भीनाम । —

कुम्भी रोमालुविटपी रोमशः पर्पटद्रुमः ।
कुम्भी कटुः कषायोष्णो ग्राही वातकफापहः ॥ १०५ ॥

( कुम्भीवृक्षः इति कोङ्कणे प्रसिद्धः । )

अथ वेतसनाम ।—

वेतसो निचुलो ज्ञेयो वञ्जुलो दीर्घपत्रकः ।
कललो मञ्जरीनम्रः सुषेणो गन्धपुष्पकः ॥ १०६ ॥
वेतसः कटुकः स्वादुः शीतो भूतविनाशनः ।
पित्तप्रकोपणो रुच्यो विज्ञेयो दीपनः परः ।
रक्तपित्तोद्भवं रोगं कुष्ठदोषं च नाशयेत् ॥ १०७ ॥

(मं बेडिसु । कं वेतसु, बेसयभेद्वु । तें जीतयुरकुलौ । गौ वेतगाछ ।)

अथ धवनाम ।—

धवो दृढतरुर्गौरः कषायो मधुरत्वचः ।
शुक्लत्वचः पाण्डुतरुर्धवलः पाण्डुरो नव ॥ १०८ ॥
धवः कषायः कटुकः कफघ्नोऽनिलनाशनः ।
पित्तप्रकोपणो रुच्यो विज्ञेयो दीपनः परः ॥ १०९ ॥

( मं धामोडा । कं सिरिवरु । तें नारिङ्गचेट्टु । गौ धवोगाछ । )

अथ धन्वननाम ।—

धन्वनो रक्तकुसुमो धनुर्वृक्षो महाबलः ।
रुजापहः पिच्छलको रूक्षः स्वादुफलश्च सः ॥ ११० ॥
धन्वनः कटुकोष्णश्च कषायः कफनाशनः ।
दाहशोषकरो ग्राही कण्ठामयशमप्रदः ॥ १११ ॥

( मं धामण्यु । कं उदुबे । हिं धामिनी । गौ धाम्ना गाछ ।

अथ भूर्जनाम ।—

भूर्जो वल्कद्रुमो भुर्जः सुचर्मा भूर्जपत्रकः ।
चित्रत्वग्बिन्दुपत्रश्च रक्षापत्रो विचित्रकः ।

भूतघ्नो मृदुपत्रश्च शैलेन्द्रस्थो द्विभूमितः ॥ ११२ ॥ *

भूर्जः कटुकषायोष्णो भूतरक्षाकरः परः ।

त्रिदोषशमनः पथ्यो दुष्टकौटिल्यनाशनः ॥ ११३ ॥

( वम० भूर्जपत्रत्वचः । शाकपादः, फटक इति हिमाचले प्रसिद्धः । गौ भूर्जपत्र । )

अथ तिनिशनाम ।—

तिनिशः स्यन्दनश्चक्री शताङ्गः शकटो रथः ।

रथिको भस्मगर्भश्च मेषी जलधरो दश ॥ ११४ ॥

तिनिशस्तु कषायोष्णः कफरक्तातिसारजित् ।

ग्राहको दाहजननो वातामयहरः परः ॥ ११५ ॥

( मं, कं, आनूपे च स्यन्दन इति प्रसिद्धः । हिं तिरिच्छ । गौ जारुलगाछ, सादन गाछ । )

अथ अर्जुननाम ।—

अर्जुनः शम्बरः पार्थश्चित्रयोधी धनञ्जयः ।

वीरान्तकः किरीटी च गाण्डीवी शिवमल्लकः ॥ ११६ ॥

सव्यसाची नदीसर्जः कर्णारिः कुरुवीरकः ।

कौन्तेय इन्द्रसूनुश्च वीरद्रुः कृष्णसारथिः ।

पृथाजः फाल्गुनो धन्वी ककुभश्चैकविंशतिः ॥ ११७ ॥

अर्जुनस्तु कषायोष्णः कफघ्नो व्रणनाशनः ।

पित्तश्रमतृषार्त्तिघ्नो मारुतामयकोपनः ॥ ११८ ॥

( मं अर्जुनसादड़ा । कं सारदोल । तें मद्दिचेट्टु । हिं कहू, कौह । तां तोरैमत्ति । गौ अर्जुन । )

---

* द्विभूमितः द्वादशाह्वय इत्यर्थः ।

अथ हरिद्रुनाम ।—

हरिद्रुः पीतदारुः स्यात् पीतकाष्ठश्च पीतकः ।
कदम्बकः सुपुष्पश्च सुराह्वः पीतकद्रुमः ॥ ११९ ॥
हरिद्रुः शीतलस्तिक्तो मङ्गल्यः पित्तवान्तिजित् ।
अङ्गकान्तिकरो बल्यो नानात्वग्दोषनाशनः ॥ १२० ॥

( मं हलदिवा । कं बिलिलु । गौ दारुहरिद्रा । )

अथ दग्धानाम ।—

दग्धा दग्धरुहा प्रोक्ता दग्धिका च स्थलेरुहा ।
रोमशा कर्कशदला भस्मरोहा सुदग्धिका ॥ १२१ ॥
दग्धा कटुकषायोष्णा कफवातनिकृन्तनी ।
पित्तप्रकोपणी चैव जठरानलदीपनी ॥ १२२ ॥

( कुरुहो इति कोङ्कणे प्रसिद्धा । )

अथ शाखोटनाम ।—

शाखोटः स्याद्भूतवृक्षो गवाक्षी यूकावासो भूर्जपत्रश्च पीतः ।
कौशिक्योऽजक्षीरनाशश्च सूक्तस्तिक्तोष्णोऽयं पित्तकृद्वातहारी॥१२३

( मं साहोड । कं आपोडमरनु । ते' भरिणिकेचेट्टु, बरनूको ।
बम्० साहोड़ा । हिं सहोड़ा, रुसा, सिओड़ ।
गौ श्याओड़ा गाछ । )

अथ शाकनाम ।—

शाकः क्रकचपत्रः स्यात् खरपत्रोऽतिपत्रकः ।
महीसहः श्रेष्ठकाष्ठः स्थिरसारो गृहद्रुमः ॥ १२४ ॥
शाकस्तु सारकः प्रोक्तः पित्तदाहश्रमापहः ।

कफघ्नं मधुरं रुच्यं कषायं शाकवल्कलम् ॥ १२५ ॥

( मं सोये। कं नेगु। तें टेकुचेट्टु। तां टेक। वम्० खरपत्र। उत्० सिङ्गुन। हिं शगुया। गौ शेगुया। )

अथ शिंशपानाम।—

शिंशपा तु महाश्यामा कृष्णसारा च धूम्रिका।
तीक्ष्णसारा च धीरा च कपिला कृष्णशिंशपा ॥ १२६ ॥
श्यामादिशिंशपा तिक्ता कटूष्णा कफवातनुत्।
नष्टाजीर्णहरा दीप्या शोफातीसारहारिणी ॥ १२७ ॥

( मं कालासिंसपा। कं करीय इबीडु। तें शिशुकर्र। तां जानुक्कुकट्टइ, पंशकेदर। हिं शीसव, शीसद। गौ शिशुगाछ। )

अथ श्वेतशिंशपानाम।—

शिंशपाऽन्या श्वेतपत्रा सिताह्वादिश्च शिंशपा।
श्वेतादिशिंशपा तिक्ता शिशिरा पित्तदाहनुत् ॥ १२८ ॥

( मं पांढरा सिंसपा। कं बिलिय इबीडु। गौ शादा शिशुगाछ। )

अथ कपिलाशिंशपानाम।—

कपिला शिंशपा चान्या पीता कपिलशिंशपा।
सारिणी कपिलाक्षी च भस्मगर्भा कुशिंशपा ॥ १२९ ॥
कपिला शिंशपा तिक्ता शीतवीर्य्या श्रमापहा।
वातपित्तज्वरघ्नी च छर्दिहिक्काविनाशिनी ॥ १३० ॥

( मं पिवला सिंसपा। कं होंबद इबीडु। )

अथ शिंशपात्रितयसामान्यगुणाः।—

शिंशपात्रितयं वर्ण्यं हिमशोफविसर्पजित्।
पित्तदाहप्रशमनं बल्यं रुचिकरं परम्॥ १३१॥

अथ असननाम। (सर्जकविशेषः)।—

असनस्तु महासर्जः सौरिर्बन्धूकपुष्पकः।
प्रियको वीजवृक्षश्च नीलकः प्रियशालकः॥ १३२॥
असनः कटुरुष्णश्च तिक्तो वातास्रदोषनुत्।
सारको गलदोषघ्नो रक्तमण्डलनाशनः॥ १३३॥
(मं वडिलुबिया। कं वारुपु। तें हिरियचोतेयमरनु। हिं असना। गो पियाशाल।)

अथ नीलवीजनाम।—

द्वितीयो नीलवीजः स्यान्नीलपत्रः सुनीलकः।
नीलद्रुमो नीलसारो नीलनिर्यासको रसैः॥ १३४॥ *
वीजवृक्षौ कटू शीतौ कषायौ कुष्ठनाशनौ।
सारकौ कण्डुदद्रुघ्नौ श्रेष्ठस्तत्रासितस्तयोः॥ १३५॥
(मं लोहिवांबोया। कं कैपिनहोने। गो नीलासनगाछ।)

अथ वरुणनाम।—

वरुणः श्वेतपुष्पश्च तिक्तशाकः कुमारकः।
श्वेतद्रुमः साधुवृक्षः तमालो मारुतापहः॥ १३६॥
वरुणः कटुरुष्णश्च रक्तदोषहरः परः।
शीर्षवातहरः स्निग्धो दीप्यो विद्रधिवातजित्॥ १३७॥

* रसैः षड्भिर्नामभिरुपलक्षित इत्यर्थः।

( मं वरुणा । कं मद्दवसले । तें उरुमट्टि, जाजिचेट्टु, उलिमिरिचेट्टु । वम्० वायवरणा । तां मरलिङ्गम् । हिं विलि । गौ वरुणागाछ । )

अथ पुत्रजीवनाम ।—

पुत्रजीवः पवित्रश्च गर्भदः सुतजीवकः ।
कुटजीवोऽपत्यजीवः सिद्धिदोऽपत्यजीवकः ॥ १३८ ॥
पुत्रजीवो हिमो वृष्यः श्लेष्मदो गर्भजीवदः ।
चक्षुष्यः पित्तशमनो दाहतृष्णानिवारणः ॥ १३९ ॥

( पुत्रजीव इति कोल्हापुरे प्रसिद्धः । मं, वम्, जीवनपुतर । तें कव्रजुवि । हिं जियापुटज, पितौंजिया । गौ जियापुता । )

अथ महापिण्डीतरुनाम ।—

महापिण्डीतरुः प्रोक्तः श्वेतपिण्डीतकश्च सः ।
करहाटः क्षुरश्चैव शस्त्रकोशतरुः सरः ॥ १४० ॥
पिण्डीतरुः कषायोष्णस्त्रिदोषशमनोऽपि च ।
चर्म्मरोगापहश्चैव विशेषाद्रक्तदोषजित् ॥ १४१ ॥

( मं पेण्डिरा । कं ओन्ददयमाडुवमरनु । हिं पेड़िरा । )

अथ कारस्करनाम ।—

कारस्करस्तु किम्पाको विषतिन्दुर्विषद्रुमः ।
गरद्रुमो रम्यफलः कुपाकः कालकूटकः ॥ १४२ ॥
कारस्करः कटूष्णश्च तिक्तः कुष्ठविनाशनः ।
वातामयास्रकण्डूति-कफामार्शोव्रणापहः ॥ १४३ ॥

( मं काञ्जिरा । कं काञ्जिवार, मकरतें दुश्रा, माकड़ाकेन्द । गौ कुंचिला । )

अथ कटभीनाम।—

कटभी नाभिका शौण्डी पाटली किणिही तथा।
मधुरेणुः चुद्रश्यामा कैडर्य्यः श्यामला नव ॥ १४४ ॥
( मं कालोकिणही । कं करियकिलगी । )

अथ शितादिकटभीनाम।—

शितादिकटभी श्वेता किणिही गिरिकर्णिका।
शिरीषपत्रा कालिन्दी शतपादी विषघ्निका ।
महाश्वेता महाशौण्डी महादिकटभी तथा ॥ १४५ ॥
( मं पाण्डरी किणही । कं बिलियवेल्लाल । )

अथ कटभीद्वयगुणाः ।—

कटभी भवेत्कटूष्णा गुल्मविषाध्मानशूलदोषघ्नी ।
वातकफाजीर्णरुजाशमनी श्वेता च तत्र गुणयुक्ता ॥ १४६ ॥
( मं दोन्हीकिणहीगुण । कं एरडुकिणिगेवेलाल । )

अथ चवकनाम।—

चवकः चुरकस्तीक्ष्णः क्रूरो भूताङ्कुशः चवः।
राजोद्वेजनसंज्ञश्च भूतद्रावी ग्रहाह्वयः ॥ १४७ ॥ *
भूताङ्कुशस्तीव्रगन्धः कषायोष्णः कटुस्तथा।
भूतग्रहादिदोषघ्नः कफवातनिकृन्तनः ॥ १४८ ॥
( भूताङ्कुशः इति देशविशेषे ख्यातः । वम॰ नाकशिङ्कनी, हरन्दोड्डी । हिं नाकछिक्नी । गौ हेँचेता, हाँचुटी । छिक्किनीति लोके । )

---

* ग्रहाह्वयः नवाह्वयः । राजोद्वेजनसंज्ञः राजसंज्ञः उद्वेजनसंज्ञश्च इति द्वे नामनीत्यर्थः ।

अथ देवसर्षपनाम ।—

देवसर्षपकश्चान्यो बदरो रक्तमूलकः ।
सुरसर्षपकश्चैन्द्रस्तथा सूक्ष्मदलः स्मृतः ।
सर्षपो निर्जरादिः स्यात् कुरराङ्घ्रिर्नवाभिधः ॥ १४९ ॥ *
देवसर्षपनामा तु कटूष्णः कफनाशनः ।
जन्तुदोषहरो रुच्यो वक्त्रामयविशोधनः ॥ १५० ॥

( मं देवशिरस । कं देवसिरसभेद । )

अथ लकुचनाम ।—

लकुचो लिकुचः शालः कषायो दृढवल्कलः ।
डहुः कार्श्यश्च शूरश्च स्थूलस्कन्धो नवाह्वयः ॥ १५१ ॥
लकुचः स्वरसे तिक्तः कषायोष्णो लघुस्तथा ।
कफदोषहरो दाही मलसंग्रहदायकः ॥ १५२ ॥

( मं आञ्झगु । हिं वड़हर । गो डेओगाछ, मान्दारगाछ । )

अथ विकङ्कतनाम ।—

विकङ्कतो व्याघ्रपादो ग्रन्थिलः स्वादुकण्टकः ।
कण्ठपादो बहुफलो गोपघोण्टा स्रुवद्रुमः ॥ १५३ ॥
मृदुफलो दन्तकाष्ठो यज्ञीयो ब्रह्मपादपः ।
पिण्डरोहिणकः पूतः किङ्किणी च त्रिपञ्चधा ॥ १५४ ॥
विकङ्कतोऽम्लमधुरः पाकेऽतिमधुरो लघुः ।
दीपनः कामलास्रघ्नः पाचनः पित्तनाशनः ॥ १५५ ॥

---

* निर्जरः आदिर्यस्य तथाभूतः, सर्षपस्य विशेषणपदमेतत्, तेन निर्जरसर्षपः इत्यर्थः ।

( मं गुलचोण्टो । कं ह्लमाणिका । तें कानवेगुचेट्ट् । ब्रत्॰ वड्डचक्रांड्ड् । पञ्जा॰ कुकोया । दां कण्टाड । चिं वञ्ज । गौ वोँच्, वँड्डाचगाछ । )

इत्थं वन्यमहीरुहाह्वयगुणाभिख्यानमुख्यानया
भङ्ग्या भङ्गुरिताभिधान्तरमहाभोगश्रिया भास्वरम् ।
वैद्यो वै द्यतु वर्गमेनमखिलं विज्ञाय वैज्ञानिकः
प्रज्ञालोकविजृम्भणेन सहसा स्वैरं गदानां गणम् ॥१५६॥*

ये वृश्चन्ति नृणां गदान् गुरुतरानाक्रम्य वीर्य्यासिना
ये स्थित्वापि वने गुणेन सरुजां स्वेनावनं तन्वते ।
तेषामेष महानसोममहिमा वन्यात्मनां वासभू-
र्वृक्षाणां भणितो भिषग्भिरसमो यो वृक्षवर्गाख्यया ॥१५७॥ †

* इत्थमिति ।— वैद्यः इत्थं वन्यमहीरुहाणां आह्वयगुणयोर्नाम-गुणयोरभिख्यानमुख्या अनया भङ्ग्या भङ्गुरिताभिधान्तरमहाभोगश्रिया भास्वरम् अखिलम् एनं वर्गं विज्ञाय वैज्ञानिकः सन् प्रज्ञालोकविजृम्भणेन सहसा झटिति स्वैरं स्वच्छन्दं यथा तथा गदानां गणं वै द्यतु दूरीकरोतु ।

† य इति ।—ये वृक्षाः वीर्य्यासिना आक्रम्य सरुजां पीड़ितानां नृणां गुरुतरान् गदान् वृश्चन्ति छिन्दन्ति । ये वने गहने स्थित्वापि स्वेन गुणेन अवनं वनातिरिक्तं स्थानं (अवनीमिति वा पाठः, अवनीं भूमण्डलं) तन्वते व्याप्नुवन्ति । असोममहिमा वृक्षवर्गाख्यया ( अत्र उप-लक्षणे तृतीया ) वृक्षवर्गनाम्नोपलक्षितः तेषां वन्यात्मनां वृक्षाणां यः एष वासभूः भिषग्भिः चिकित्सकैः असमः निरुपमः सर्वोत्कर्षेण स्थितः इत्यर्थः भणितः कथितः स संस्थितः इति परेणान्वयः ।

य: काश्मीरकुलोज्ज्वलाम्बुजवनोहंसोऽपि संसेव्यते
नित्योल्लासितनीलकण्ठमनसः प्रीत्याद्यभग्नश्रिया ।
तस्यायं नवमः कृतौ नरहरेर्वर्गः प्रभद्रादिको
भद्रात्मन्यभिधानशेखरशिखाचूड़ामणौ संस्थितः ॥१५८॥ *

इति श्रीनरहरिपण्डितविरचिते राजनिघण्टौ
प्रभद्रादिवर्गो नवमः समाप्तः ।

## अथ करवीरादिवर्गः ।

चतुर्धा करवीरोऽथ धत्तूरत्रितयं तथा ।
कोविदारोऽब्धिरर्कः स्यान्नमेरुः किंशुकस्तथा ॥ १ ॥ †
पुन्नागस्तिलकोऽगस्त्यः पाटल्यौ च द्विधा स्मृते ।
अशोकश्चम्पको धन्वी केतकी द्विविधा तथा ॥ २ ॥
सिन्दूरी च तथा जाती मुद्गरः शतपत्रिका ।
मल्लिका च चतुर्धा स्याद्वासन्ती नवमल्लिका ॥ ३ ॥

* य इति ।—काश्मीरकुलोज्ज्वलाम्बुजवनोहंसोऽपि काश्मीरदेश जातोऽपि यः प्रीत्याद्यभग्नश्रिया प्रीत्यादिभिः आनन्दादिभिः अभग्ना परिपूर्णा या श्रीस्तया संसेव्यते, नित्योल्लासितनीलकण्ठमनसः तस्य नरहरेः भद्रात्मनि कृतौ अभिधानशेखरशिखाचूड़ामणौ संस्थितः प्रभद्रादिकः अयं नवमः वर्गः संस्थितः समाप्तः इत्यर्थः ।

† अर्कः अब्धिः चतुर्द्धा इत्यर्थः । यद्यपि अब्धिः सप्तसंख्यां बोधयति तथापि उत्तरादिभेदतः अत्र चतुःसंख्या एव ग्राह्या ।

अतिमुक्तो द्विधा यूथी कुब्जको मुचकुन्दकः।
करुणी माधवी चाथ गणिकारी च कुन्दकः॥ ४॥
वकर्केविकबन्धूकास्त्रिसन्धिश्च जपा तथा।
प्रोक्ता भ्रमरमारी च तरुण्यम्लानकस्तथा॥ ५॥
किङ्किरातोऽथ बालाख्यो भिण्टिका चोष्ट्रकाण्डिका।
तगरं दमनद्वन्द्वं तुलसी मरुवो द्विधा॥ ६॥
अर्जकश्च चतुर्गङ्गा-पत्री पाची च बालकः।
बर्बरो मञ्जिकापत्रः प्रोक्ताचाराम शीतला॥ ७॥
अथ कमलपुण्डरीकाह्वयकोकनदानि पद्मिनी चैव।
पद्माक्षं च मृणालं तत्कन्दः केसरश्च तथा॥ ८॥
उत्पलकुमुदकुवलयमुत्पलिनीचाङ्कवसुमित्या।
उत्तंसनाम्निवर्गे द्रव्याण्यत्रोपदिश्यन्ते॥ ८॥

अथ करवीरनाम।—

करवीरो महावीरो हयमारोऽश्वमारकः।
हयघ्नः प्रतिहासश्च शतकुन्दोऽश्वरोधकः॥ १०॥
हयारिर्वीरकः कुन्दः शकुन्दः श्वेतपुष्पकः।
अश्वान्तकस्तथाऽश्वघ्नो नखराह्वोऽश्वनाशकः॥ ११॥
स्थलादिकुमुदः प्रोक्तो दिव्यपुष्पो हरप्रियः। *
गौरीपुष्पः सिद्धपुष्पो द्विकराह्वः प्रकीर्त्तितः॥ १२॥ †
करवीरः कटुस्तीक्ष्णः कुष्ठकण्डूतिनाशनः।

---

* स्थल इति पदमादौ यस्य स चासौ कुमुदश्चेति एवं विग्रहे स्थल-कुमुद इति बोद्धव्यः।

† द्विकराह्वः द्वाविंशतिसंज्ञक इत्यर्थः।

व्रणार्त्तिविषविस्फोट-शमनोऽश्वमतिप्रदः ॥ १३ ॥

( मं कणेर, कञ्चेर । कं वाकणालिङ्ग । तें गन्नेरु । हिं कणैली । गौ करवी गाछ । )

अथ रक्तकरवीरनाम ।—

रक्तकरवीरकोऽन्यो रक्तप्रसवो गणेशकुसुमश्च ।
चण्डीकुसुमः क्रूरो भूतद्रावी रविप्रियो मुनिभिः ॥ १४ ॥ *
रक्तस्तु करवीरः स्यात्कटुस्तीक्ष्णो विशोधकः ।
त्वग्दोषव्रणकण्डूति-कुष्ठहारी विषापहः ॥ १५ ॥

( मं रक्तकरवीर । कं केङ्गणलिगे । हिं लालकनेल । गौ लालकरवीगाछ । )

अथ पीतकृष्णकरवीरनामगुणाः ।—

पीतकरवीरकोऽन्यः पीतप्रसवः सुगन्धिकुसुमश्च ।
कृष्णस्तु कृष्णकुसुमश्चतुर्विधोऽयं गुणे तुल्यः ॥ १६ ॥

अथ धत्तूरनाम । ( उपविषम् ) ।— †

धत्तूरः कितवो धूर्त्त उन्मत्तः कनकाह्वयः ।
शठो मातुलकः श्यामो मदनः शिवशेखरः ॥ १७ ॥
खर्जूघ्नः काहलापुष्पः खलः कण्टफलस्तथा ।
मोहनः कलभोन्मत्तः शैवः सप्तदशाह्वयः ॥ १८ ॥
धत्तूरः कटुकृष्णश्च कान्तिकारी व्रणार्त्तिनुत् ।

---

* मुनिभिः सप्तभिर्नामभिरुपलक्षित इत्यर्थः ।

† धत्तूरशोधनम्,—

"धत्तूरबीजं गोमूत्रे चतुर्य्यामोषितं पुनः ।
कण्डितं निस्तुषं कृत्वा योगेषु विनियोजयेत् ॥" इति ।

त्वग्दोषखर्जूकण्डूति ज्वरहारी भ्रमप्रदः ॥ १९ ॥

( मं धत्तूर। कं मदकुणिके। तें उन्मेत्तचेट्टु, नल्लउन्मेत्त। तां कारुऊमतै। हिं धातुरा। गौ धुतुरागाछ। )

अथ कृष्णधत्तूरनाम।—

कृष्णधत्तूरकः सिद्धः कनकः सचिवः शिवः।
कृष्णपुष्पो विषारातिः क्रूरधूर्त्तश्च कीर्त्तितः ॥ २० ॥

( मं कालाधत्तूर। कं करियमदकुणिके। गौ कनकधुतुरा, कालधुतुरा। )

अथ राजधत्तूरनाम।—

राजधत्तूरकश्चान्यो राजधूर्त्तो महाशठः।
निःश्रेणिपुष्पको भ्रान्तो राजस्वर्णः षड़ाह्वयः ॥ २१ ॥
सितनीलकृष्णलोहितपीतप्रसवाश्च सन्ति धत्तूराः।
सामान्यगुणोपेतास्तेषु गुणाढ्यस्तु कृष्णकुसुमः स्यात् ॥ २२ ॥

अथ कोविदारनाम।—

कोविदारः काञ्चनारः कुद्दालः कनकारकः।
कान्तपुष्पश्च करकः कान्तारो यमलच्छदः ॥ २३ ॥
पीतपुष्पः सुवर्णारो गिरिजः काञ्चनारकः।
युग्मपत्रो महापुष्पः स्याच्चतुर्दशधाभिधः ॥ २४ ॥
कोविदारः कषायः स्यात्संग्राही व्रणरोपणः।
दीपनः कफवातघ्नो मूत्रकृच्छ्रनिवर्हणः ॥ २५ ॥

( मं काञ्चन। कं कोचाले। तां कचनार। तें देवकाञ्चन। हिं कचनारभेद। गौ रक्तकाञ्चनभेद। )

अथ अर्कनाम । ( उपविषम् ) ।—

अर्कः क्षीरदलः पुच्छी प्रतापः क्षीरकाण्डकः ।
विक्षीरो भास्करः क्षीरी खर्जूघ्नः शिवपुष्पकः ॥ २६ ॥
भञ्जनः क्षीरपर्णी स्यात् सविता च विकीरणः ।
सूर्य्याह्वश्च सदापुष्पो रविरास्फोटकस्तथा ।
तूलफलः शुकफलो विंशतिश्च समाह्वयः ॥ २७ ॥
अर्कस्तु कटुरुष्णश्च वातजिद्दीपनीयकः ।
शोफव्रणहरः कण्डू-कुष्ठक्रिमिविनाशनः ॥ २८ ॥

( मं रूई । कं अर्के । तें जिल्लेटुचेट्टु । हिं मन्दार, आकन् । गो आकन्दगाछ । )

अथ शुक्लार्कनाम ।—

शुक्लार्कस्तपनः श्वेतः प्रतापश्च सितार्ककः ।
सुपुष्पः शङ्करादिः स्यादत्यर्को वृत्तमल्लिका ॥ २९ ॥
श्वेतार्कः कटुतिक्तोष्णो मलशोधनकारकः ।
मूत्रकृच्छ्रास्रशोफार्त्ति-व्रणदोषविनाशनः ॥ ३० ॥

( मं पाढरीरूई । कं बिलियअर्के । गो श्वेत आकन्द । )

अथ राजार्कनाम ।—

राजार्को वसुकोऽलर्को मन्दारो गणरूपकः ।
काष्ठीलश्च सदापुष्पो ज्ञेयोऽत्र सप्तसम्मितः ॥ ३१ ॥
राजार्कः कटुतिक्तोष्णः कफमेदोविषापहः ।
वातकुष्ठव्रणान् हन्ति शोफकण्डूविसर्पनुत् ॥ ३२ ॥

( मं मन्दार । कं मन्दारअर्के । )

अथ श्वेतमन्दारनाम

श्वेतमन्दारकस्त्वन्यः पृथ्वी कुरवकः स्मृतः ।
दीर्घपुष्पः सितालर्को दीर्घात्यर्कः रसाह्वयः ॥ २३ ॥
श्वेतमन्दारकोऽत्युष्णस्तिक्तो मलविशोधनः ।
मूत्रकृच्छ्रव्रणान् हन्ति क्रिमीनत्यन्तदारुणान् ॥ २४ ॥

( वम्० श्वेतमन्दार । कं बिलियमन्दारणु । )

अथ नमेरुनाम ।—

नमेरुः सुरपुन्नागः सुरेष्टः सुरपर्णिका ।
सुरतुङ्गश्च पञ्चाह्वः पुन्नागगुणसंयुतः ॥ २५ ॥

( मं सुरपुनाग । कं सुरबने । गो छवियानाफुल । )

अथ पलाशनाम ।—

पलाशः किंशुकः पर्णो वातपोथोऽथ याज्ञिकः ।
त्रिपर्णो वक्रपुष्पश्च पूतद्रुर्ब्रह्मवृक्षकः ।
ब्रह्मोपनेता काष्ठद्रुः पर्य्यायैकादश स्मृताः ॥ २६ ॥
पलाशस्तु कषायोष्णः क्रिमिदोषविनाशनः ।
तद्बीजं पामकण्डूति-दद्रुत्वग्दोषनाशकृत् ॥ २७ ॥
तस्य पुष्पञ्च सोष्णञ्च कण्डूकुष्ठार्त्तिनाशनम् ।
रक्तः पीतः सितो नीलः कुसुमैस्तु विभज्यते ॥ २८ ॥
किंशुकैर्गुणसाम्येऽपि सितो विज्ञानदः स्मृतः ॥ २९ ॥

( मं पलस । कं मुत्तलु । तें मोदुग । उत्० पराशु । वम्० खाकरो । तां परशन् । हिं धारा, ढाक । गो पलाशफुल । )

अथ पुन्नागनाम ।—

पुन्नागः पुरुषस्तुङ्गः पुन्नामा पाटलः पुमान् ।

रक्तपुष्पो रक्तरेणुररुणोऽयं नवाह्वयः ॥ ४० ॥
पुन्नागो मधुरः शीतः सुगन्धिः पित्तनाशकृत् ।
भूतविद्रावणश्चैव देवतानां प्रसादनः ॥ ४१ ॥

( मं पुन्नाग । कं सुरहोन्नेयभेद । तें सुरपोन्नचेट्टु । उत्० पुन्नां । बम्० उदि । तां पिन्नय । हिं सुलतानचम्पक । गौ राजचम्पक । )

अथ तिलकनाम ।—

तिलको विशेषकः स्यान्मुखमण्डनकश्च पुण्ड्रकः पुण्ड्रः ।
स्थिरपुष्पः छिन्नरुहो दग्धरुहो रेचकश्च मृतजीवी ॥ ४२ ॥
तरुणीकटाक्षकामो वासन्तः सुन्दरोऽभीष्टः ।
भालविभूषणसंज्ञो विज्ञेयः पञ्चदशनामा ॥ ४३ ॥
तिलको मधुरः स्निग्धो वातपित्तकफापहः ।
बलपुष्टिकरो हृद्यो लघुर्मेदोविवर्द्धनः ॥ ४४ ॥

( गौ मरुयाफुल । )

अथ तिलकत्वग्गुणाः ।—

तिलकत्वक् कषायोष्णा पुंस्त्वघ्नी दन्तदोषनुत् ।
क्रिमिशोफव्रणान् हन्ति रक्तदोषविनाशनी ॥ ४५ ॥

अथ अगस्त्यनाम ।—

*अगस्त्यः शीघ्रपुष्पः स्यात् अगस्तिस्तु मुनिद्रुमः ।
व्रणारिर्दीर्घफलको वक्रपुष्पः सुरप्रियः ॥ ४६ ॥
सितपीतनीललोहितकुसुमविशेषाच्चतुर्विधोऽगस्तिः ।
मधुरश्शिशिरस्त्रिदोषश्रमकासविनाशनश्च भूतघ्नः ॥ ४७ ॥

अगस्त्यं शिशिरं गौल्यं त्रिदोषघ्नं श्रमापहम् ।
बलासकासवैवर्ण्य-भूतघ्नञ्च बलापहम् ॥ ४८ ॥

( मं अगस्ता, हदगा । तैं लल्लयविसेचेट्टु । हिं हतिया, वहत् वौलसरौ । तां हेतिया । कं अगसेयमरनु । गौ वकफुल । )

अथ पाटलीनाम ।—

पाटली ताम्रपुष्पी च कुम्भिका रक्तपुष्पिका ।
वसन्तदूती चामोघा स्थाली च विटवल्लभा ।
स्थिरगन्धाऽम्बुवासी च कालवृन्तीन्दुभूह्वया ॥ ४९ ॥ *
पाटली तु रसे तिक्ता कटूष्णा कफवातजित् ।
शोफाध्मानवमिश्वास-शमनी सन्निपातनुत् ॥ ५० ॥

( मं पाडली । कं हादरि । तैं कलगोरु, कलिगोट्टुचेट्टु । उत्० पाटुड़ि । तां पद्रि । हिं पदृ, पाड़री । गौ पारुल । )

अथ सितपाटलिनाम ।—

सितपाटलिका चान्या सितकुम्भी फलेरुहा ।
सिता मोघा कुबेराची सिताह्वा काष्ठपाटला ।
पाटली धवला प्रोक्ता ज्ञेया वसुमिताह्वया ॥ ५१ ॥ †
सितपाटलिका तिक्ता गुरूष्णा वातदोषजित् ।
वमिहिक्काकफघ्नी च श्रमशोषापहारिका ॥ ५२ ॥

( मं श्वेतपाड़लि । कं बिलियहादरि । गौ श्वेतपारुल । )

अथ अशोकनाम ।—

अशोकः शोकनाशः स्याद्विशोको वञ्जुलद्रुमः ।

---

* इन्दुभूह्वया एकादशसंज्ञिका इत्यर्थः ।

† वसुमिताह्वया अष्टपर्य्याया इत्यर्थः ।

मधुपुष्पोऽपशोकश्च कङ्केलिः केलिकस्तथा ॥ ५३ ॥
रक्तपल्लवकश्चित्रो विचित्रः कर्णपूरकः ।
सुभगः स्मराधिवासो दोषहारी प्रपल्लवः ॥ ५४ ॥
रागी तरुर्हैमपुष्पो रामावामाङ्घ्रिघातकः ।
पिण्डीपुष्पो नटश्चैव पल्लवद्रुर्द्विविंशतिः ॥ ५५ ॥
अशोकः शिशिरो हृद्यः पित्तदाहश्रमापहः ।
गुल्मशूलोदराध्मान-नाशनः क्रिमिकारकः ॥ ५६ ॥
( मं, कं, गौ, अशोक । हिं अशोगो । )

अथ चम्पकनाम ।—

चम्पकः स्वर्णपुष्पश्च चाम्पेयः शीतलच्छदः ।
सुभगो भृङ्गमोही च शीतलो भ्रमरातिथिः ॥ ५७ ॥
सुरभिर्दीपपुष्पश्च स्थिरगन्धोऽतिगन्धकः ।
स्थिरपुष्पो हेमपुष्पः पीतपुष्पस्तथाऽपरः ।
हेमाह्वः सुकुमारस्तु वनदीपोऽष्टभूह्वयः ॥ ५८ ॥ *
तल्लिका गन्धफली बहुगन्धा गन्धमोदिनी त्वेधा ॥ ५९ ॥
चम्पकः कटुकस्तिक्तः शिशिरो दाहनाशनः ।
कुष्ठकण्डूव्रणहरो गुणाढ्यो राजचम्पकः ॥ ६० ॥
( हिं, मं, चम्पा । कं चम्पगे । गौ चांपाफुल । )

अथ क्षुद्रचम्पकनाम ।—

क्षुद्रादिचम्पकस्त्वन्यः स ज्ञेयो नागचम्पकः ।
फणिचम्पकनागाह्वश्चम्पको वनजः शराः ॥ ६१ ॥

* अष्टभूह्वयः अष्टादशाख्यः ।

वनचम्पकः कटूष्णो वातकफध्वंसनो वर्ण्यः।
चक्षुष्यो व्रणरोपी वह्निस्तम्भं करोति योगगुणात्॥ ६२॥
( मं नागिणि। कं नागचम्पगे। गौ नागेश्वरचाँपा। )

अथ बकुलनाम।—

बकुलस्तु सीधुगन्धः स्त्रीमुखमधुदोहलश्च मधुपुष्पः।
सुरभिर्भ्रमरानन्दः स्थिरकुसुमः केसरश्च शारदिकः॥ ६३॥
करकः सीधुसंज्ञस्तु विशारदो गूढ़पुष्पको धन्वी।
मदनो मद्यामोदश्चिरपुष्पश्चेति सप्तदशसंज्ञः॥ ६४॥
बकुलः शीतलो हृद्यो विषदोषविनाशनः।
मधुरश्च कषायश्च मदाढ्यो हर्षदायकः॥ ६५॥
बकुलकुसुमं च रुच्यं स्नेहाढ्यं सुरभि शीतलं मधुरम्।
स्निग्धकषायं कथितं मलसंग्रहकारकं चैव॥ ६६॥
( तें पोगड़चेट्टु। उत्० वउड़कड़ि। वम्० बकुलो। द्रां चोलसरो।
तां मोगदम्। हिं मौलसरो। गौ वकुलफुल। )

अथ श्वेतकेतकीनाम।—

केतकी तीक्ष्णपुष्पा च विफला धूलिपुष्पिका।
मेध्या कण्टदला चैव शिवद्विष्टा नृपप्रिया॥ ६७॥
क्रकचा दीर्घपत्रा च स्थिरगन्धा तु पांशुला।
गन्धपुष्पेन्दुकलिका दलपुष्पा त्रिपञ्चधा॥ ६८॥

अथ स्वर्णकेतकीनाम।—

स्वर्णादि केतकी त्वन्या ज्ञेया सा हेमकेतकी।
कनकप्रसवा पुष्पी हैमी छिन्नरुहा तथा।
विष्टरुहा स्वर्णपुष्पी कामखड्गदला च सा॥ ६९॥

केतकीकुसुमं वर्ण्यं केशदौर्गन्ध्यनाशनम् ।
हेमाभं मदनोन्माद-वर्द्धनं सौख्यकारि च ॥ ७० ॥
तस्याः स्तनोऽतिशिशिरः कटुः पित्तकफापहः ।
रसायनकरो बल्यो देहदार्ढ्यकरः परः ॥ ७१ ॥

( मं केतकी । कं केदगी । तें मोगलिचेट्टु । हिं केवड़ा । गौ केयाफुल । )

अथ सिन्दूरीनाम ।—

सिन्दूरी वीरपुष्पश्च तृणपुष्पी करच्छदः ।
सिन्दूरपुष्पी शोणादि-पुष्पी षड़ाह्वयः स्मृतः ॥ ७२ ॥
सिन्दूरी कटुका तिक्ता कषाया श्लेष्मवातजित् ।
शिरोऽर्त्तिशमनी भूत-नाशा चण्डीप्रिया भवेत् ॥ ७३ ॥

( मं शेन्द्री । कं सिन्दूरी । हिं सेन्दरिया । )

अथ जातीनाम ।—

जाती सुरभिगन्धा स्यात् सुमना तु सुरप्रिया ।
चेतकी सुकुमारा तु सन्ध्यापुष्पी मनोहरा ॥ ७४ ॥
राजपुत्री मनोज्ञा च मालती तैलभाविनी ।
जनेष्टा हृद्यगन्धा च नामान्यस्याश्चतुर्दश ॥ ७५ ॥
मालती शीततिक्ता स्यात् कफघ्नी मुखपाकनुत् ।
कुड्मलं नेत्ररोगघ्नं व्रणविस्फोटकुष्ठनुत् ॥ ७६ ॥

( मं जाई । कं जाजि । हिं चम्बेली, खर्यांजाती । गौ चामेली, मालती । )

अथ मुद्गरनाम ।—

मुद्गरो गन्धसारस्तु सप्तपत्रश्च कर्दमो ।
वृत्तपुष्पोऽतिगन्धश्च गन्धराजो विटप्रियः ।
गेयप्रियो जनेष्टश्च मृगेष्टो रुद्रसम्मितः ॥ ७७ ॥
मुद्गरो मधुरः शीतः सुरभिः सौख्यदायकः ।
मनोज्ञो मधुपानन्द-कारी पित्तप्रकोपहृत् ॥ ७८ ॥

( गौ काठमल्लिका ; गन्धराज इति मतान्तरम् । )

अथ शतपत्रिकानाम ।—

शतपत्री तु सुमना सुशीता शिववल्लभा ।
सौम्यगन्धा शतदला सुवृत्ता शतपत्रिका ॥ ७९ ॥
शतपत्री हिमा तिक्ता कषाया कुष्ठनाशनी ।
मुखस्फोटहरा रुच्या सुरभिः पित्तदाहनुत् ॥ ८० ॥

( मं सेवती । कं सेम्बतिगे । तें चेमन्तिचेट्टु । हिं सेवती, गोलाव । गौ सेउती ; श्वेत वा पाटलवर्ण गोलाप इति केचित् । )

अथ मल्लिकानाम ।—

मल्लिका भद्रवल्ली तु गौरी च वनचन्द्रिका ।
शीतभीरुः प्रिया सौम्या नारीष्टा गिरिजा सिता ।
मल्ली च दमयन्ती च चन्द्रिका मोदिनी मनुः ॥ ८१ ॥
मल्लिका कटुतिक्ता स्याच्चक्षुष्या मुखपाकनुत् ।
कुष्ठविस्फोटकण्डूति-विषव्रणहरा परा ॥ ८२ ॥

( मं वेलिमोगरा । कं बल्लिमल्लिगे । तें मल्लेचेट्ट । गौ मल्लिकाफुल । )

अथ वल्लिकानाम ।—

वल्लिका मोदिनी चान्या वटपत्रा कुमारिका ।
सुगन्धाढ्या वृत्तपुष्पा मुक्ताभा वृत्तमल्लिका ॥ ८३ ॥
नेत्ररोगापहन्त्री स्यात् कटूष्णा वृत्तमल्लिका ।
व्रणघ्नी गन्धबहुला दारयत्यास्यजान् गदान् ॥ ८४ ॥

( मं वाटोगरें । कं कुन्दुभिमल्लिगे । वम्० वटमोगरा । गो वेलफुल । )

अथ वार्षिकानाम ।—

वार्षिका त्रिपुटा त्र्यस्रा सुरूपा सुलभा प्रिया ।
श्रीवल्ली षट्पदानन्दा सुत्तबन्धा नवाभिधा ॥ ८५ ॥
वार्षिका शिशिरा हृद्या सुगन्धिः पित्तनाशनी ।
कफवातविषस्फोट-क्रिमिदोषामनाशनी ॥ ८६ ॥
सा दीर्घवर्त्तुलपुष्प-विशेषादनेकनिर्देशा ।

( तें साटचीमोगराचाभेद । )

अथ कस्तूरीमल्लिकानाम ।—

मृगमदवासा त्वन्या कस्तूरीमल्लिका ज्ञेया ॥ ८७ ॥
प्रातर्विकस्वरैका सायोद्भिदुराऽपि मल्लिका काऽपि ।
वनमल्लिका नु सा स्यादास्फोता किन्तु समगुणोपेता ॥ ८८ ॥

अथ वासन्तीनाम ।—

वासन्ती प्रहसन्ती वसन्तजा माधवी महाजातिः ।
शीतसहा मधुबहुला वसन्तदूती च वसुनाम्नी ॥ ८९ ॥
वासन्ती शिशिरा हृद्या सुरभिः श्रमहारिणी ।

धम्मिल्लामोदिनी मन्द-मदनोन्मादादायिनी ॥ ८० ॥
मं बिरवन्ति। कं बिरवन्तिगे। हिं वसन्तीनेवारि।)

अथ नवमल्लिका।—

नवमल्लिकाऽतिमोदा ग्रैष्मी ग्रीष्मोद्भवा च सा।
सप्तला सुकुमारा च सुरभी सूचिमल्लिका।
सुगन्धा शिखरिणी स्यान्नेवाली चेन्दुभूह्वया ॥ ८१ ॥
नवमल्लिकाऽतिशैत्या सुरभिः सर्वरोगहृत् ॥ ८२ ॥
( मं रोमाली। कं बिरवन्तिभेदा। वम्० मोगरा। गौ वासन्ती।
"नेयाली" "सेउती" "नेवारी" इति च लोके।)

अथ अतिमुक्तनाम। (नवमल्लिकाभेदः)।—

सैवातिमुक्तकाख्या पुण्ड्रकनाम्नी च काचिदुक्ताऽन्या।
मदनी भ्रमरानन्दा कामकान्ता च पञ्चाख्या ॥ ८३ ॥
अतिमुक्तः कषायः स्याच्छिशिरः श्रमनाशनः।
पित्तदाहज्वरोन्माद-हिक्काच्छर्दिनिवारणः ॥ ८४ ॥
( मं, तें, रायबिरवन्ते गौ रायबेल; माधवीलता इति केचित्।)

अथ यूथिकानाम —

यूथिका गणिकाऽम्बष्ठा मागधी बालपुष्पिका।
मोदनी बहुगन्धा च भृङ्गानन्दा गजाह्वया ॥ ८५ ॥ *
( मं पाण्ढरी जूई। कं बिलियमोल्ले। हिं यूही। गौ युँइ।)

अथ सुवर्णयूथिकानामगुणाः।—

अन्या यूथी सुवर्णाह्वा सुगन्धा हेमयूथिका।
युवतीष्टा व्यक्तगन्धा शिखण्डी नागपुष्पिका ॥ ८६ ॥

---

* गजाह्वया अष्टपर्य्यायिका इत्यर्थः।

हरिणी पीतयूथी च पीतिका कनकप्रभा ।
मनोहरा च गन्धाढ्या प्रोक्ता त्रयोदशाह्वया ॥ ९७ ॥
यूथिकायुगलं स्वादु शिशिरं शर्करार्त्तिनुत् ।
पित्तदाहतृषाहारि नानात्वग्दोषनाशनम् ॥ ९८ ॥
( मं सोने जुई । कं यरड्मोल्ले । गौ स्वर्णयुँइ । )

अथ साधारणयूथिकानामगुणाः ।—

सितपीतनीलमेचकनाम्न्यः कुसुमेन यूथिकाः कथिताः ।
तिक्ताहिमपित्तकफामयज्वरघ्न्यो व्रणादिदोषहराः ॥ ९९ ॥
सर्वासां यूथिकानां तु रसवीर्य्यादिसाम्यता ।
सुरूपं तु सुगन्धाढ्यं स्वर्णयूथ्या विशेषतः ॥ १०० ॥

अथ कुब्जनामगुणाः ।—

कुब्जको भद्रतरुणी वृत्तपुष्पोऽतिकेसरः ।
महासहः कण्टकाढ्यः खर्वोऽलिकुलसङ्कुलः ॥ १०१ ॥
कुब्जकः सुरभिः शीतो रक्तपित्तकफापहः ।
पुष्पं तु शीतलं वर्ण्यं दाहघ्नं वातपित्तजित् ॥ १०२ ॥
( मं काण्टे शेवती । कुब्जः इति कोङ्कणे प्रसिद्धः । हिं, गौ, कूजा । )

अथ मुचकुन्दनामगुणाः ।—

मुचकुन्दो बहुपत्रः सुदलो हरिवल्लभः सुपुष्पश्च ।
अर्घ्यार्हो लक्ष्मणको रक्तप्रसवश्च वसुनामा ॥ १०३ ॥
मुचकुन्दः कटुतिक्तः कफकासविनाशनश्च कण्ठदोषहरः ।
त्वग्दोषशोफशमनो व्रणपामाविनाशनश्चैव ॥ १०४ ॥
( मुचुकुन्दः इति कोङ्कणे प्रसिद्धः । तें लोलगु । तां टङ्डो । उत्० वङ्कलो । हिं मेचकन्द । गौ मुचकुन्दफुल, कनकचाँपाफुल । )

अथ करुणीनामगुणाः।—

करुणी ग्रीष्मपुष्पी स्याद्रक्तपुष्पी च वारुणी।
राजप्रिया राजपुष्पी सूक्ष्मा च ब्रह्मचारिणी॥ १०५॥
करुणी कटुतिक्तोष्णा कफमारुतनाशिनी।
आध्मानविषविच्छर्दि-जन्तुश्वासहारिणी॥ १०६॥

( करवीरुणी इति कोङ्कणे प्रसिद्धा। )

अथ माधवीनामगुणाः।—

माधवी चन्द्रवल्ली च सुगन्धा भ्रमरोत्सवा।
भृङ्गप्रिया भद्रलता भूमिमण्डपभूषणी॥ १०७।
माधवी कटुका तिक्ता कषाया मदगन्धिका।
पित्तकासव्रणान् हन्ति दाहशोषविनाशिनी॥ १०८॥

( मं. माधवी। कं इन्द्रगीचे। तां गुरुविन्द। तें माधवतीगे। द्रां पुव्वुल गुरिविन्द। गौ माधवीलतार फुल। )

अथ गणिकारीनामगुणाः।—

गणिकारी काञ्चनिका काञ्चनपुष्पी वसन्तदूती च।
गन्धकुसुमाऽतिमोदा वासन्ती मदमादिनी चैव॥ १०९॥
गणिकारी सुरभितरा त्रिदोषशमनी च दाहशोषहरा।
कामक्रीडाऽऽडम्बरशम्बरहरचापलप्रसरा॥ ११०॥

( मं गणेरी। गणिकारी इति कोङ्कणे प्रसिद्धा। गौ वासन्तीफुल। )

अथ कुन्दनामगुणाः।—

कुन्दस्तु मकरन्दश्च महामोदो मनोहरः।
मुक्तापुष्पः सदापुष्पस्तारपुष्पोऽट्टहासकः।

दमनो वनहासश्च मनोज्ञो रुद्रसम्मितः ॥ १११ ॥
कुन्दोऽतिमधुरः शीतः कषायः केश्यभावनः ।
कफपित्तहरश्चैव सरो दीपनपाचनः ॥ ११२ ॥

( मं कुन्दे । कं सुरगि । तें मोल्ल । गौ कुँदफुल । )

अथ वकनामगुणाः ।—

वकः पाशुपतः शैवः शिवपिण्डश्च सुव्रतः ।
वसुकश्च शिवाङ्कश्च शिवेष्टः क्रमपूरकः ।
शिवमल्ली शिवाह्लादः शाम्भवो रविसम्मितः ॥ ११३ ॥ *
वकोऽतिशिशिरस्तिक्तो मधुरो मधुगन्धकः ।
पित्तदाहकफश्वास-श्रमहारी च दीपनः ॥ ११४ ॥

( मं बागौजे । कं वगेटाहु । वम्० बुक । )

अथ केविकानामगुणाः ।—

केविका कविका केवा भृङ्गारिर्नृपवल्लभा ।
भृङ्गमारी महागन्धा राजकन्याऽलिमोहिनी ॥ ११५ ॥
केविका मधुरा शीता दाहपित्तश्रमापहा ।
वातश्लेष्मरुजां हन्त्री पित्तच्छर्दिविनाशिनी ॥ ११६ ॥

( केरव इति कोङ्कणे प्रसिद्धा । )

अथ बन्धूकनामगुणाः ।—

बन्धूको बन्धुजीवः स्यादोष्ठपुष्पोऽर्कवल्लभः ।
मध्यन्दिनो रक्तपुष्पो रागपुष्पो हरिप्रियः ॥ ११७ ॥

---

* रविसम्मितः द्वादशाख्यकः ।

असितसितपीतलोहितपुष्पविशेषाच्चतुर्विधो बन्धूकः।
ज्वरहारी विविधग्रहपिशाचशमनः प्रसादनः सवितुः स्यात्॥११८

( मं बान्दुजा। कं बन्दुवे। हिं दोपरिया, गेजुलिया। गौ बांधुलिफुल, बांधुनी, दोपाटी। )

अथ त्रिसन्धिनामगुणाः।—

त्रिसन्धिः सान्ध्यकुसुमा सन्धिवल्ली सदाफला।
त्रिसन्ध्यकुसुमा कान्ता सुकुमारा च सन्धिजा॥ ११९॥
त्रिसन्धिस्त्रिविधा ज्ञेया रक्ता चान्या सिताऽसिता।
कफकासहरा रुच्या त्वग्दोषशमनी परा॥ १२०॥

( मं त्रिसन्धि। कं त्रिसञ्जि। गौ कृष्णकलि, सन्ध्यामणि। )

अथ जपानामगुणाः।—

जपाख्या ओड्रकाख्या च रक्तपुष्पी जवा च सा।
अर्कप्रिया रक्तपुष्पी प्रातिका हरिवल्लभा॥ १२१॥
जपा तु कटुरुष्णा स्यादिन्द्रलुप्तकनाशकृत्।
विच्छर्दिजन्तुजननी सूर्य्याराधनसाधनी॥ १२२॥

( मं जासविन्द। कं दासनल। हिं वोड़हुल। गौ जवाफुल। )

अथ भ्रमरारिनामगुणाः।—

भ्रमरारिर्भृङ्गमारी भृङ्गारिर्मांसपुष्पिका।
कुष्ठारिर्भ्रमरी चैव ज्ञेया यष्टिलता मुनिः॥ १२३॥ *
तिक्ता भ्रमरमारी स्याद्वातश्लेष्मज्वरापहा।

* मुनिः सप्तपर्य्याया इत्यर्थः।

शोफकण्डूतिकुष्ठघ्नी व्रणदोषास्थिदोषनुत् ॥ १२४ ॥

( भ्रमरमारी इति मालवे प्रसिद्धा । )

अथ तरुणीनामगुणाः ।—

तरुणी सहा कुमारी गन्धाढ्या चारुकेसरा भृङ्गेष्टा ।
रामतरुणी तु सुदला बहुपत्रा भृङ्गवल्लभा च दशाह्वा ॥ १२५

तरुणी शिशिरा स्निग्धा पित्तदाहज्वरापहा ।
मधुरा मुखपाकघ्नी तृष्णाविच्छर्दिवारिणी ॥ १२६ ॥

( मं तरणी । कं चेम्बडे । गौ सेंउती । )

अथ राजतरुणीनामगुणाः ।—

महती तु राजतरुणी महासहा वर्ण्यपुष्पकोऽम्लानः ।
अमिलातकः सुपुष्पः सुवर्णपुष्पश्च सप्ताह्वः ॥ १२७ ॥

विज्ञेया राजतरुणी कषाया कफकारिणी ।
चक्षुष्या हर्षदा हृद्या सुरभिः सुरवल्लभा ॥ १२८ ॥

( मं राजतरणी । कं हिरियचेम्बडे । गौ बड़ सेंउती । )

अथ रक्ताम्लाननामगुणाः ।—

अथ रक्ताम्लानः स्याद्रक्तसहाख्यः स चापरिम्लानः ।
रक्तामलान्तकोऽपि च रक्तप्रसवश्च कुरवकश्चैव ॥ १२९ ॥
रामालिङ्गनकामो रागप्रसवो मधूत्सवः प्रसवः ।
सुभगो भ्रमरानन्दः स्यादित्ययं पञ्चचन्द्रमितः ॥ १३० ॥ *

उष्णः कटुः कुरवको वातामयशोफनाशनो ज्वरनुत् ।

* पञ्चचन्द्रमितः द्वादशसंज्ञकः ।

आध्मानशूलकासश्वासार्त्तिप्रशमनो वर्ण्यः ॥ १३१ ॥

( मं बनझाड । कं बणदगिडु । हिं लाल्‌कटसरैया ।
गौ रक्तझाँटी । )

अथ किङ्किरातनामगुणाः ।—

पीतः स किङ्किरातः पीताम्लानः कुरण्टकः कनकः ।
पीतकुरवः सुपीतः स पीतकुसुमश्च सप्तसंज्ञकः स्यात् ॥ १३२ ॥

किङ्किरातः कषायोष्णस्तिक्तश्च कफवातजित् ।
दीपनः शोफकण्डूति-रक्तत्वग्दोषनाशनः ॥ १३३ ॥

( मं पीवलागोरटा । कं होवणदगोरटे । तें कोंड़गोगु । हिं कटसरैया । गौ पीतझाँटि, काँटाझाँटी । )

अथ नीलपुष्पानामगुणाः ।—

नीलपुष्पा तु सा दासी नीलाम्लानस्तु छादनः ।
बाला चार्त्तगला चैव नीलपुष्पा च षड्विधा ॥ १३४ ॥
आर्त्तगला कटुस्तिक्ता कफमारुतशूलनुत् ।
कण्डूकुष्ठव्रणान् हन्ति शोफत्वग्दोषनाशनी ॥ १३५ ॥

( मं कालाकोराण्टा । कं करियगोरटे । गौ नीलझाँटी । )

अथ झिण्टिकानामगुणाः ।—

कण्टकरण्टो झिण्टी सा वन्यसहचरी तु सा पीता ।
शोणी कुरवकनाम्नी कण्टकिनी शोणझिण्टिका चैव ॥१३६॥
साऽन्या तु नीलझिण्टी नीलकुरण्टश्च नीलकुसुमा च ।
बाणी बाणा दासी कण्टार्त्तगला च सप्तसंज्ञा स्यात् ॥ १३७ ॥
झिण्टिकाः कटुकास्तिक्ता दन्तामयशान्तिदाश्च शूलघ्नाः ।

वातकफशोफकासत्वग्दोषविनाशकारिण्यः ॥ १३८ ॥

( मं तिन्दिकीराण्टे । कं सुरमुल्लगीरटेगल्लु । गौ कुलभाँटो । )

अथ उष्ट्रकाण्डीनामगुणाः ।—

उष्ट्रकाण्डी रक्तपुष्पी ज्ञेया करभकाण्डिका ।

रक्ता लोहितपुष्पी च वर्णपुष्पी षडाह्वया ॥ १३९ ॥

उष्ट्रकाण्डी तु तिक्तोष्णा रुच्या हृद्रोगहारिणी ।

तद्वीजं मधुरं शीतं वृष्यं सन्तर्पणं स्मृतम् ॥ १४० ॥

( मं उटांटी । कं कावण । तें उटकटारा । गो उटकाँटा । )

अथ तगरनामगुणाः ।—

तगरं कुटिलं वक्रं विनम्रं कुञ्चितं नतम् ।

शठञ्च नहुषाख्यञ्च दद्रुहस्तञ्च वर्हणम् ॥ १४१ ॥

पिण्डीतगरकं चैव पार्थिवं राजहर्षणम् ।

कालानुसारकं चक्रं दीनं जिह्मं मुनीन्दुधा ॥ १४२ ॥ *

तगरं शीतलं तिक्तं दृष्टिदोषविनाशनम् ।

विषार्त्तिशमनं पथ्यं भूतोन्मादभयापहम् ॥ १४३ ॥

( पिण्डीतगर इति कोङ्कणे प्रसिद्धम् । तें नन्दिवर्द्धनचेट्टु, गन्धि-
तगरपुचेट्टु । उ० पाणिफलरा । हिं तगरचण्डी । गौ
तगरपादुका ; शिउलीझोप् । )

[ इति पुष्पाणि । ]

अथ दमननामगुणाः ।—

अथ दमनकस्तु दमनो दान्तो गन्धोत्कटो मुनिर्जटिलः ।

दण्डी च पाण्डुरागो ब्रह्मजटा पुण्डरीकश्च ॥ १४४ ॥

* मुनीन्दुधा सप्तदशविधा ।

तापसपत्रः पत्री पवित्रको देवशेखरश्चैव ।
कुलपत्रश्च विनीतस्तपस्विपत्रश्च सप्तधात्रीकः ॥ १४५ ॥ *
दमनः शीतलतिक्तः कषायकटुकश्च कुष्ठदोषहरः ।
द्वन्द्वत्रिदोषशमनो विषविस्फोटविकारहरणः स्यात् ॥ १४६ ॥

( मं, हिं, दवणा । पञ्जा० दोणा । गौ दोना । )

अथ वन्यदमननामगुणाः ।—

अन्यश्च वन्यदमनो वनादिनामा च दमनपर्य्यायः । †
वीर्य्यस्तम्भनकारी बलदायी चामदोषहारी च ॥ १४७ ॥

( मं रानदवणा । कं कादवना । )

अथ तुलसीनामगुणाः ।—

तुलसी सुभगा तीव्रा पावनी विष्णुवल्लभा ।
सुरेज्या सुरसा ज्ञेया कायस्था सुरदुन्दुभी ॥ १४८ ॥
सुरभिर्बहुपत्री च मञ्जरी सा हरिप्रिया ।
अपेतराक्षसी श्यामा गौरी त्रिदशमञ्जरी ।
भूतघ्नी पूतपत्री च ज्ञेया चैकोनविंशतिः ॥ १४९ ॥
तुलसी कटुतिक्तोष्णा सुरभिः श्लेष्मवातजित् ।
जन्तुभूतक्रिमिहरा रुचिकृद्वातशान्तिकृत् ॥ १५० ॥

( मं तुलसीचेझाड़ । तें कृष्ण, गग्गेरचेट्टु, ह्युलसी, तुलसीचेट्टु ।
तां तुलशी । दां तुलसी । बम्० तुलस । हिं बरा्बा,
तुलसी । गौ तुलसी । )

---

* सप्तधात्रीकः सप्त, धात्री पृथिवी, एकः सप्तद्वीपाख्य इत्यर्थः ।

† वनादिनामा दमनपर्य्याय इत्यस्यायमेव पिण्डितार्थो यत् दमनपर्य्याये ये ये शब्दाः उक्ताः तेषां पूर्वतः वन इति शब्दं संयोज्य वन्यदमनपर्य्यायः बोद्धव्यः ।

अथ तुलसीसाधारणनामगुणाः ।—

कृष्णा तु कृष्णतुलसी श्वेता लक्ष्मीः सिताह्वया ।
कासवातक्रिमिवमि-भूतापहारिणी पूता ॥ १५१ ॥

( मं दोन्हीतुलसी । कं एरडतुलसी । गौ कालतुलसी, शादातुलसी । )

अथ मरुवनामगुणाः । –

मरुवः खरपत्रस्तु गन्धपत्रः फणिज्झकः ।
बहुवीर्य्यः शीतलकः सुराह्वश्च समीरणः ॥ १५२ ॥
जम्बीरः प्रस्थकुसुमो ज्ञेयो मरुवकस्तथा ।
आजन्मसुरभिपत्रो मरीचश्च त्रयोदश ॥ १५३ ॥
द्विधा मरुवकः प्रोक्तो श्वेतश्चैव सितेतरः ।
श्वेतो भेषजकार्य्ये स्यादपरः शिवपूजने ॥ १५४ ॥
मरुवः कटुतिक्तोष्णः क्रमिकुष्ठविनाशनः ।
विड्बन्धाध्मानशूलघ्नो मास्यत्वग्दोषनाशनः ॥ १५५ ॥

( मं मरुवा । गौ मरुयाफुलेर गाछ, सुगन्धतुलसीविशेष । )

अथ अर्जकनाम ।—

अर्जकः क्षुद्रतुलसी क्षुद्रपर्णी मुखार्जकः ।
उग्रगन्धश्च जम्बीरः कुठेरश्च कठिञ्जरः ॥ १५६ ॥

( मं आजवला । कं कगोरैले । तें तेल्लग॰गेरचेट्टु । तां गगैर । हिं वावरी । गौ वावुइतुलसी । )

अथ सितार्जकनाम ।—

सितार्जकस्तु वैकुण्ठो वटपत्रः कुठेरकः ।
जम्बीरो गन्धबहुलः सुमुखः कटुपत्रकः ॥ १५७ ॥

( मं पाण्ढरा आजवला । हिं श्वेताजवला । गौ छोटश्वेततुलसी । )

अथ कृष्णार्जकनाम ।—

कृष्णार्जकः कालमालो मालूकः कृष्णमालुकः ।
स्यात् कृष्णमल्लिका प्रोक्ता गरघ्नो वनवर्वरः ॥ १५८ ॥

(मं कालाआजवला । कं करियकगोरले । गौ कालवनवावुइतुलसी ।)

अथ त्रिविधार्जकगुणाः ।—

त्रयोऽर्जका कटूष्णाः स्युः कफवातामयापहाः ।
नेत्रामयहरा रुच्याः सुखप्रसवकारकाः ॥ १५९ ॥

अथ वनवर्वरिकानामगुणाः ।—

वनवर्वरिकाऽन्या तु सुगन्धिः सुप्रसन्नकः ।
दोषोत्क्लेशो विषघ्नश्च सुमुखः सूक्ष्मपत्रकः ।
निद्रालुः शोफहारी च सुवक्त्रश्च दशाह्वयः ॥ १६० ॥
वनवर्वरिका चोष्णा सुगन्धा कटुका च सा ।
पिशाचवान्तिभूतघ्नी घ्राणसन्तर्पणी परा ॥ १६१ ॥

( मं आजवलाभेद । कं सुगन्धिअजरा । गौ वनवावुइतुलसी । )

अथ गङ्गापत्रीनामगुणाः ।—

गङ्गापत्री तु पत्री स्यात् सुगन्धा गन्धपत्रिका ।
गङ्गापत्री कटूष्णा च वातजिद्व्रणरोपणी ॥ १६२ ॥

( मं गङ्गावती । कं बहुगान्धारी । गौ पचापाता । )

अथ पाचीनामगुणाः ।—

पाची मरकतपत्री हरितलता हरितपा... ...पत्री ।
सुरभिर्मैत्रारिष्टा गा... ...मतपात्रिका चैव ॥ १६३ ॥

पाची कटुतिक्तोष्णा सकषाया वातदोषहन्त्री च ।
ग्रहभूतविकारकारी त्वग्दोषप्रशमनी व्रणेषु हिता ॥१६४॥
( मं पाचि । कं पच्चे । )

अथ बालकनामगुणाः ।—

बालकं वारिपर्य्यायैरुक्तं ह्रीवेरकं तथा ।
केश्यं वज्रमुदीच्यञ्च पिङ्गञ्च ललनाप्रियम् ।
बालञ्च कुन्तलोशीरं कचामोदं शशीन्दुधा ॥ १६५ ॥ *
बालकं शीतलं तिक्तं पित्तवान्तितृषापहम् ।
ज्वरकुष्ठातिसारघ्नं केश्यं श्वित्रव्रणापनुत् ॥ १६६ ॥
( मं करम्बालु । कं मुखिडवाल । हिं सुगन्धबाला । गौ गन्धबाला । )

अथ वर्वरनामगुणाः ।—

वर्वरः सुमुखश्चैव गरघ्नः कृष्णवर्वरः ।
सुकन्दनो गन्धपत्रः पूतगन्धः सुरार्हकः ॥ १६७ ॥
वर्वरः कटुकोष्णश्च सुगन्धिर्वान्तिनाशनः ।
विसर्पविषविध्वंसी त्वग्दोषशमनस्तथा ॥ १६८ ॥
( हिं कालीवावरी । गौ कालवावुइ । )

अथ सुरपर्णनामगुणाः ।—

सुरपर्णं देवपर्णं वीरपर्णं सुगन्धिकम् ।
मक्षिपत्रं सूक्ष्मपत्रं देवार्हं गन्धपत्रकम् ॥ १६९ ॥
कटूष्णं सुरपर्णञ्च क्रिमिश्वासबलासजित् ।
दीपनं कफवातघ्नं वर्ण्यं बालहितं तथा ॥ १७० ॥
( मं सुरपर्नि । कं मक्षिपत्रे । गौ पुन्नागभेद । )

---

* शशीन्दुधा एकादशसंख्याविशिष्टा इत्यर्थः ।

अथ आरामशीतलानामगुणाः ।—

आरामशीतला नन्दा शीतला सा सुनन्दिनी ।
रामा चैव महानन्दा गन्धाढ्यारामशीतला ॥ १७१ ॥
आरामशीतला तिक्ता शीतला पित्तहारिणी ।
दाहशोषप्रशमनी विस्फोटव्रणरोपणी ॥ १७२ ॥

( मं, कं, रामशालि । )

[ इति पत्राणि । ]

अथ कमलनामगुणाः ।—

पाथोजं कमलं नभञ्च नलिनाम्भोजाम्बुजन्माम्बुजं
श्रीपद्माम्बुरुहाब्जपद्मजलजान्यम्भोरुहं सारसम् ।
पङ्केजं सरसीरुहं च कुटपं पाथोरुहं पुष्करं
वार्जं तामरसङ्कुशेशयकजे कञ्जारविन्दे तथा ॥ १७३ ॥
शतपत्रं विसकुसुमं सहस्रपत्रं महोत्पलं वारिरुहम् ।
सरसिजसलिलजपङ्केरुहराजीवानि वेदवह्निमितानि ॥१७४॥ *
कमलं शीतलं स्वादु रक्तपित्तश्रमार्त्तिनुत् ।
सुगन्धि भ्रान्तिसन्ताप-शान्तिदं तर्पणं परम् ॥ १७५ ॥

( मं कमल । तें तामर । गो पद्म । )

अथ पुण्डरीकनामगुणाः ।—

पुण्डरीकं श्वेतपत्रं सिताब्जं श्वेतवारिजम् ।
हरिनेत्रं शरत्पद्मं शारदं शम्भुवल्लभम् ॥ १७६ ॥
पुण्डरीकं हिमं तिक्तं मधुरं पित्तनाशनम् ।

* वेदवह्निमितानि चतस्त्रिंशतसंख्याकानीत्यर्थः ।

दाहास्रश्रमदोषघ्नं पिपासादोषनाशनम् ॥ १७७ ॥
( मं पाण्ढरें कमल । कं बिलियतावरे । तें तेल्लतामर । गो श्वेतपद्म ।)

अथ कोकनदनामगुणाः ।—

कोकनदमरुणकमलं रक्ताम्भोजं च शोणपद्मं च ।
रक्तोत्पलमरविन्दं रविप्रियं रक्तवारिजं वसवः ॥ १७८ ॥ *
कोकनदं कटुतिक्तं मधुरं शिशिरं च रक्तदोषहरम् ।
पित्तकफवातशमनं सन्तर्पणकारणं वृष्यम् ॥ १७९ ॥
( मं रक्तकमल । कं केंदावरे । गो रक्तपद्म । )

अथ नीलकमलनामगुणाः ।—

उत्पलं नीलकमलं नीलाब्जं नीलपङ्कजम् ।
नीलपद्मं च बाणाह्वं नीलादिकमलाभिधम् ॥ १८० ॥
नीलाब्जं शीतलं स्वादु सुगन्धि पित्तनाशकृत् ।
रुच्यं रसायने श्रेष्ठं केश्यञ्च देहदार्ढ्यदम् ॥ १८१ ॥
( मं नीलकमल । कं करियताम्बरे । गौ नीलपद्म । )

अथ त्रिविधकमलनामगुणाः ।—

ईषत्श्वेतं पद्मं नलिनं च तदुक्तमीषदारक्तम् ।
उत्पलमीषन्नीलं त्रिविधमितीदं भवेत् कमलम् ॥ १८२ ॥
उत्पलादिरयं दाह-रक्तपित्तप्रसादनः ।
पिपासादाहहृद्रोग-च्छर्दिमूर्च्छाहरो गणः ॥ १८३ ॥

अथ पद्मिनीनामगुणाः ।—

पद्मिनी नलिनी प्रोक्ता कूटपिन्यब्जिनी तथा ।
इत्थं तत्पर्याय-नाम्नी ज्ञेया प्रयोगतः ॥ १८४ ॥

---

* वसवः अष्टसंख्यकानि ।

पद्मिनी मधुरा तिक्ता कषाया शिशिरा परा।
पित्तकृमिशोषवान्ति-भ्रान्तिसन्तापशान्तिकृत् ॥ १८५ ॥
( मं पद्मिनी। कं ताम्बरेयभेद। गौ पद्मलता। )

अथ पद्मबीजनामगुणाः।—

पद्मबीजन्तु पद्माक्षं गालोड्यं कन्दली च सा।
भेड़ा क्रौञ्चादनी क्रौञ्चा श्यामा स्यात्पद्मकर्कटी ॥ १८६ ॥
पद्मबीजं कटु स्वादु पित्तच्छर्दिहरं परम्।
दाहास्रदोषशमनं पाचनं रुचिकारकम् ॥ १८७ ॥
( मं, कं, पद्माच। हिं कमलगट्टा। गौ पद्मबीज। )

अथ मृणालनामगुणाः।—

मृणालं पद्मनालञ्च मृणाली च मृणालिनी।
विसञ्च पद्मतन्तुश्च विसिनी नलिनीरुहम् ॥ १८८ ॥
मृणालं शिशिरं तिक्तं कषायं पित्तदाहजित्।
मूत्रकृच्छ्रविकारघ्नं रक्तवान्तिहरं परम् ॥ १८९ ॥
( मं कमलतन्तु। कं कमलदनूलु। तें तामरतुण्ड, तामरतीगे।
गौ पद्मडाँटा। )

अथ शालूकनामगुणाः।—

पद्मकन्दस्तु शालूकं पद्ममूलं कटाह्वयम्।
शालीनं च जलालूकं स्यादित्येवं षडाह्वयम् १९० ॥
शालूकं कटु विष्टम्भि रूक्षं रुच्यं कफापहम्।
कषायं कासपित्तघ्नं तृष्णादाहनिवारणम् ॥ १९१ ॥
( हिं कमलकन्द। गौ पद्मेर गेंड़ो। )

अथ किञ्जल्कनामगुणाः ।—

किञ्जल्कं मकरन्दश्च केसरं पद्मकेसरम् ।
किञ्जं पीतं परागं च तुङ्गं चाम्पेयकं नव ॥ १८२ ॥
किञ्जल्कं मधुरं रूक्षं कटु चाऽऽस्यव्रणापहम् ।
पित्तघ्नं शिशिरं रुच्यं तृष्णादाहनिवारणम् ॥ १८३ ॥

( मं, कं, गौ, पद्मकेसर ।। )

[ इति कमलानि । ]

अथ उत्पलसाधारणनामगुणाः ।—

अनूष्णं चोत्पलं चैव रात्रिपुष्पं जलाश्रयम् ।
हिमाब्जं शीतजलजं निशाफुल्लञ्च सप्तधा ॥ १८४ ॥
उत्पलं शिशिरं स्वादु पित्तरक्तार्त्तिदोषनुत् ।
दाहश्रमवमिभ्रान्ति-क्रिमिज्वरहरं परम् ॥ १८५ ॥

( मं उत्पल । कं मेदिलु । हिं कोञि । गौ हेलाफुल ;
नालफुल, शुँदिफुल । )

अथ धवलोत्पलनामगुणाः ।—

धवलोत्पलन्तु कुमुदं कह्लारं कैरवं च शीतलकम् ।
शशिकान्तमिन्दुकमलं चन्द्राब्जं चन्द्रिकाऽम्बुजं च नव ॥१८६॥
कुमुदं शीतलं स्वादु पाके तिक्तं कफापहम् ।
रक्तदोषहरं दाह-श्रमपित्तप्रशान्तिकृत् ॥ १८७ ॥

( मं पाण्ढरे उत्पल । कं बिलियने दैदिलु । हिं कोइ ।
गौ शादानालिफुल ; श्वेतशुँदि । )

अथ नीलोत्पलनामगुणाः।—

नीलोत्पलमुत्पलकं कुवलयमिन्दीवरञ्च कन्दोत्थम्।
सौगन्धिकं सुगन्धं कुड्मलकं चासितोत्पलं नवधा॥ १९८॥

नीलोत्पलमतिस्वादु शीतं सुरभि सौख्यकृत्।
पाके तु तिक्तमत्यन्तं रक्तपित्तापहारकम्॥ १९९॥

( मं नीलोत्पलकं। कं नेईदिलु। तें नल्लकुलुव। हिं नीलोफर। गौ नीलशुंदि, नीलोत्पल। )

अथ उत्पलिनीनामगुणाः।—

उत्पलिनी कैरविणी कुमुद्वती कुमुदिनी च चन्द्रेष्टा।
कुवलयिनीन्दीवरिणी नीलोत्पलिनी च विज्ञेया॥ २००॥

उत्पलिनी हिमतिक्ता रक्तामयहारिणी च पित्तघ्नी।
तापकफकासतृष्णाश्रमवमिशमनी च विज्ञेया॥ २०१॥

( मं उत्पलिनी। हिं कोञ्जि कोटी। गौ शुंदिलता। )

[ इति उत्पलानि। ]

अथ पुष्पद्रवनामगुणाः।—

पुष्पद्रवः पुष्पसारः पुष्पस्वेदश्च पुष्पजः।
पुष्पनिर्य्यासकश्चैव पुष्पाम्बुजः षडाह्वयः॥ २०२॥

पुष्पद्रवः सुरभिशीतकषायगौल्यो
दाहश्रमातिवमिमोहतृषामयघ्नः।
तृष्णार्त्तिपित्तकफदोषहरः सरश्च
सन्तर्पणश्चिरमरोचकहारकश्च॥ २०३॥

( मं पखोर। गौ फुलेर रस। गोलापजल इत्यादि। मधु इति केचित्। )

अथ जात्यादीनामामोदस्थितिकालः ।—

जाती भाति मृदुर्मनोज्ञमधुरामोदा मुहूर्त्तद्वयं
द्वैगुण्येन च मल्लिका मदकरी गन्धाधिका यूथिका ।
एकाहं नवमालिका मदकरं चाङ्गं त्र्यं चम्पकं
तीव्रामोदमथाष्टवासरमितामोदान्विता केतकी ॥२०४॥

इत्थं नानाप्रथितसुमनःपत्रपद्माभिधान-
संस्थानोक्तिप्रगुणिततया तद्गुणाख्याप्रवीणम् ।
वाचोयुक्तिस्थिरपरिमलं वर्गमेनं पठित्वा
नित्यामोदैर्मुखसरसिजं वासयत्वाशु वैद्यः ॥२०५॥ *

---

* इत्थमिति ।—वैद्यः भिषक् "भिषक् वैद्यश्चिकित्सकः" इत्यमरः । एनं मया उक्तमिति भावः वर्गं पठित्वा समभ्यस्य नित्यं ये आमोदाः तैः अविच्छिन्नतया प्रवर्त्तमानसुगन्धिभिः मुखं सरसिजमिव इति उपमित-समासः तत् आशु शीघ्रं यथा स्यात्तथा वासयतु गन्धयुक्तं करोतु । वर्गं कीदृशमित्यत आह ।—इत्थम् अनेन प्रकारेण नाना विविधानि प्रथितानि ख्यातिमापन्नानि यानि सुमन.पत्रपद्मानि तेषां अभिधान-संस्थानोक्तिभ्यां संज्ञानिवासकथनाभ्यां या प्रगुणितता उत्कर्षता तया उपलक्षितम् । तेषां सुमनःप्रभृतीनां गुणाख्यया गुणकथनेन च प्रवीणं निपुणतरं, गुणवर्णनपारिपाट्यमपि वर्गेऽस्मिन् वर्त्तते इति भावः । वाचो वाक्यस्य युक्तिरेव स्थिरः अविनश्वरः परिमलः यत्र तथाभूतं नापि किञ्चित् अप्रामाणिकमुक्तमिति भावः । यद्वा,—पद्मशब्देनाऽत्र चरम-संख्या ग्राह्या, तेन सुमनःपत्रयोः पुष्पवर्गपत्रवर्गयोः पद्माभिः अनेकाभिः अभिधानसंस्थानोक्तिभिः या प्रगुणितता उत्कर्षता तया उपलक्षितमिति ।

स्थैर्य्ये शैलशिलोपमान्यपि शनैरासाद्य तद्भावनां
भेद्यत्वं यमिनां मनांस्यपि ययुः पुष्पाशुगस्याशुगैः ।
तेषां भूषयतां सुरादिकशिरः पत्रप्रसूनात्मनां
वर्गोऽयं वसतिर्मता सुमनसामुत्तंसवर्गाख्यया ॥ २०६ ॥*
लोकान् स्पर्शनयोगतः प्रसृमराण्यामोदयन्त्यञ्जसा
प्रोत्फुल्लानि च यद्यशांसि विशदान्युत्तंसयन्ते दिशः ।
तस्यायं दशमः कृतौ स्थितिमगाद्वर्गो नृसिंहेशितुः
सूरीन्दोः करवीरकादिरभिधासम्भारचूड़ामणौ ॥२०७॥†

इति श्रीनरहरिपण्डितविरचिते राजनिघण्टौ
करवीरादिवर्गो दशमः समाप्तः ।

---

सुमनःशब्देनैव पद्मप्राप्तौ पुनः पद्मपदग्रहणात् अधिकपदताव्युदासार्थं साधीयः खलु इदं शेषोक्तं व्याख्यानम् ॥ २०५ ॥

* स्थैर्य्ये इति।—अत्र यैः इति पदमध्याहार्य्यम्। यैः पुष्पाशुगस्य प्रसूनशरस्य आशुगैः बाणैः स्थैर्य्ये स्थिरतायां शैलशिलोपमान्यपि अद्रि-प्रस्तरसदृशानि अपि यमिनां मनांसि चित्तानि तद्भावनां तेषां पुष्पाणां भावनां चिन्तां शनैः अल्पम् आसाद्य प्राप्य ( किं बहिति ध्वनिः ) भेद्यत्वं चपलत्वं ययुः समुत्कण्ठन्ते स्म इत्यर्थः। सुरादिकशिरः देवोत्तमाङ्गं भूषयतां तेषां पत्रप्रसूनात्मनां सुमनसां वसतिः निवासः अयं वर्गः उत्तंस-वर्गाख्यया मौलिमण्डनेति नाम्ना मता बुधैरिति शेषः ॥ २०६ ॥

† लोकानिति।—प्रसृमराणि सर्वतो विस्फुरितानि प्रोत्फुल्लानि विकसितानि विशदानि विमलानि यस्य नृसिंहस्य यशांसि स्पर्शनयोगतः स्पर्शनमात्रेण लोकान् मनुष्यान् अञ्जसा झटिति "द्राक् झटित्यञ्जसा समाः" इत्यमरः। आमोदयन्ति प्रीणयन्ति इति भावः। दिशश्च उत्तंस-

# अथ आम्रादिवर्गः ।



आम्राः पञ्चविधाः प्रोक्ता जम्बूश्चैव चतुर्विधा ।
पनसः कदली चाब्धिः नारिकेलद्वयं तथा ॥ १ ॥
खर्जूरो पञ्चधा चैव चारो भल्लातरायणी ।
दाडिमं तिन्दुकौ चाथो अक्षोटः पीलुको द्विधा ॥ २ ॥
पारेवते मधूकं तु द्विधा भव्यारुके क्रमात् ।
द्राक्षा त्रिधाऽथ कर्मारः परुषः पिप्पली वटः ॥ ३ ॥
वटी चाश्वत्थिका प्लक्षस्तथा चोदुम्बरस्त्रिधा ।
तत्त्वचा बदरश्चाब्धि बीजपूरं त्रिधा मतम् ॥ ४ ॥
आमलक्यौ द्विधा चैव चिञ्चा चिञ्चारसस्तथा ।
आम्रातकोऽथ नारङ्गो निम्बूजम्बीरकद्वयम् ॥ ५ ॥
कपित्थस्तुम्बरश्चाथ रुद्राक्षो विल्वशल्लकी ।
कतकः कर्कटश्चैव द्विधा श्लेष्मातकस्तथा ॥ ६ ॥
मुष्ककः करमर्दश्च तथा तेजःफलस्तथा ।
विकङ्कतः शिवा समाप्यन्तः पूगोऽष्टधा स्मृतः ॥ ७ ॥

---

यन्ते भूषिताः कुर्वन्ति तस्य सूरीन्द्रोः पण्डितश्रेष्ठस्य नृसिंहः एव ईश्विता सर्वप्रभुः तस्य अभिधानां ये सम्भाराः समूहाः तेषां चूडामणी प्रधाने इति भावः, कृतौ अयं करवीरकादिः वर्गः परिच्छेदः स्थितिं समाप्तिम् अगात् गतः ॥ २०७ ॥

सप्तधा नागवल्ली स्याच्चूर्णं चैवाष्टधा स्मृतम् ।
उक्ता आम्रादिके वर्गे शून्यचन्द्रेन्दुसङ्ख्यया ॥ ८ ॥

अथ साधारणाम्रनामगुणाः ।—

आम्रः कामशरश्चूतो रसालः कामवल्लभः ।
कामाङ्गः सहकारश्च कीरेष्टो माधवद्रुमः ॥ ९ ॥
भृङ्गाभीष्टः सीधुरसो मधूली कोकिलोत्सवः ।
वसन्तदूतोऽम्लफलो मदाढ्यो मन्मथालयः ॥ १० ॥
मध्वावासः सुमदनः पिकरागो नृपप्रियः ।
प्रियाम्बुः कोकिलावासः स प्रोक्तस्त्रिकराह्वयः ॥ ११ ॥ *
आम्रः कषायाम्लरसः सुगन्धिः कण्ठामयघ्नोऽग्निकरश्च बालः ।
पित्तप्रकोपानिलरक्तदोषप्रदः पटुत्वादिरुचिप्रदश्च ॥ १२ ॥

( मं बालाम्बा । कं एलेयमाविनकायि । गो आम ।)

अथास्य पक्वापक्वतो विभिन्नावस्थतया विशेषगुणाः ।—

बालं पित्तानिलकफकरं तच्च बद्धास्थि तादृक् †
पक्वं दोषत्रितयशमनं स्वादु पुष्टिं गुरुञ्च ।
दत्ते धातुप्रचयमाधिकं तर्पणं कान्तिकारि
ख्यातं तृष्णाश्रमशमकृतौ चूतजातं फलं स्यात् ॥ १३ ॥

( मं आम्बाफल । कं माविनफल । तें माविड्डि । )

---

* त्रिकराह्वयः त्रयोविंशतिनामकः ।

† बद्धं सञ्जातम् अस्थि वीजं ( आँटीति भाषा ) यत्र तथाभूतम् ।

अथ कोशाम्रनामगुणाः ।—

कोशाम्रश्च घनस्कन्धो वनाम्रो जन्तुपादपः । *
क्षुद्राम्रश्चेति रक्ताम्रो लाक्षावृक्षः सुरक्तकः ॥ १४ ॥

कोशाम्रमम्लमनिलापहरं कफार्त्ति-
पित्तप्रदं गुरु विदाहविशोफकारि ।
पक्वं भवेन्मधुरमीषदपारमम्लं
पट्वादियुक्तरुचिदीपनपुष्टिबल्यम् ॥ १५ ॥ †

( मं भरौ आम्बा । कं जूरिमावु । हिं कोशम्भ । गौ केओड़ा । )

अथ राजाम्रनाम ।—

राजाम्रोऽन्यो राजफलः स्मराम्रः कोकिलोत्सवः ।
मधुरः कोकिलानन्दः कामेष्टो नृपवल्लभः ॥ १६ ॥

( मं राजाम्बा । कं राजमावु । तें राचमामिड़िचेट्टु ।
गौ मालदये आम । )

अथ महाराजाम्रनाम ।—

अन्यो महाराजचूतो महाराजाम्रकस्तथा ।
स्थूलाम्रो मन्मथावासः कङ्को नीलकपित्थकः ॥ १७ ॥
कामायुधः कामफलो राजपुत्रो नृपात्मजः ।
महाराजफलः कामो महाचूतस्त्रयोदश ॥ १८ ॥

( मं महाराजाम्बा । कं महाराजमावु । )

---

* धन्वन्तरीये निघण्टौ जतुद्रुमेतिपदं कोशाम्रपर्य्यायवाचित्वेन उद्दङ्कि । तस्मात् अत्रापि जन्तुपादपस्थाने जतुपादपेति पाठः नाप्रामाणिकः ।

† पट्वादि लवणादि ।

अथ बङ्गरसालाम्रनाम।—

तस्यापि श्रेष्ठतोऽन्याम्रो रसालो बङ्गपूर्वकः।
ज्ञेयश्चक्रलताम्रश्च मध्वाम्रः सितजाम्रकः।
वनेज्यो मन्मथानन्दो मदनेच्छाफलो मुनिः॥ १८॥ *

( मं बङ्गरसालु महाराज अम्बा। कं चकतला आम्बा। )

अथ राजाम्रगुणाः।—

राजाम्राः कोमलाः सर्वे कटूम्लाः पित्तदाहदाः।
सुपक्वाः स्वादुमाधुर्य्याः पुष्टिवीर्य्यबलप्रदाः॥ २०॥
राजाम्रेषु त्रिषु प्रोक्तं साम्यमेव रसाधिकम्।
गुणाधिकं तु विज्ञेयं पर्य्यायादुत्तरोत्तरम्॥ २१॥
बालं राजफलं कफास्रपवनश्वासार्त्तिपित्तप्रदं
मध्यं तादृशमेव दोषबहुलं भूयः कषायाम्लकम्।
पक्वञ्चेन्मधुरं त्रिदोषशमनं तृषाविदाहश्रम-
श्वासारोचकमोचकं गुरु हिमं तृष्यातिचूताह्वयम्॥ २२॥

( मं तान्द्दीराजाम्बेगुण। कं सुकराजमाविनगुण। )

अथ आम्रत्वचादीनां गुणाः।—

आम्रत्वचा कषाया च मूलं सौगन्धि तादृशम्। †
रूक्षं संग्राहि शिशिरं पुष्पं तु रुचिदीपनम्॥ २३॥

( इति आम्रप्रकरणम्। )

---

* मुनिः सप्तसंख्यकः।

† तादृशं तत्तल्यं कषायमित्यर्थः।

अथ जम्बूनामगुणाः ।—

जम्बूस्तु सुरभिपत्रा नीलफला श्यामला महास्कन्धा ।
राजार्हा राजफला शुकप्रिया मेघमोदिनी नवाह्वा ॥ २४ ॥

जम्बूः कषायमधुरा श्रमपित्तदाह-
कण्ठार्त्तिशोषशमनी क्रिमिदोषहन्त्री ।
श्वासातिसारकफकासविनाशनी च
विष्टम्भिनी भवति रोचनपाचनी च ॥ २५ ॥

( मं जाम्बुकः । कं नेरिलुस । तें नेरडुचेट्टु । हिं जामून् । गौ जाम । )

अथ महाजम्बूनामगुणाः ।—

महाजम्बू राजजम्बूः स्वर्णमाता महाफला ।
शुकप्रिया कोकिलेष्टा महानीला बृहत्फला ॥ २६ ॥

महाजम्बूरुष्णा समधुरकषाया श्रमहरा
निरस्यत्यास्यस्थं झटिति जड़िमानं स्वरकरी ।
विधत्ते विष्टम्भं शमयति च शोषं वितनुते
श्रमातीसारार्त्तिश्वसितकफकासप्रशमनम् ॥ २७ ॥

( मं महाराजजाम्बु । कं दोड्डनिरलु । गौ बड़जाम । )

अथ काकजम्बूनामगुणाः ।—

काकजम्बूः काकफला नादेयी काकवल्लभा ।
भृङ्गेष्टा काकनीला च ध्वाङ्क्षजम्बूर्धनप्रिया ॥ २८ ॥

काकजम्बूः कषायाम्ला पाके तु मधुरा गुरुः ।
दाहश्रमातिसारघ्नी वीर्य्यपुष्टिबलप्रदा ॥ २९ ॥

( मं नदीतीरजाम्बू । कं तीरेनेरिलु । गौ क्षुद्रेजाम । )

अथ भूमिजम्बूनामगुणाः ।—

अन्या च भूमिजम्बूर्ह्रस्वफला भृङ्गवल्लभा ह्रस्वा ।
भूजम्बूर्भ्रमरेष्टा पिकभक्षा काष्ठजम्बूश्च ॥ ३० ॥
भूमिजम्बूः कषाया च मधुरा श्लेष्मपित्तनुत् ।
हृद्या संग्राहिहृत्कण्ठ-दोषघ्नी वीर्य्यपुष्टिदा ॥ ३१ ॥

( मं क्षुद्रजम्बु । कं किरनेरिलु । गौ भूँइजाम । )

अथ पनसनामगुणाः ।—

पनसस्तु महासर्जः फलिनः फलवृक्षकः ।
स्थूलः कण्टफलश्चैव स्यान्मूलफलदः स्मृतः ।
अपुष्पफलदः पूत-फलो ह्यङ्कमितस्तथा ॥ ३२ ॥ *
पनसं मधुरं सुपिच्छिलं गुरु हृद्यं बलवीर्य्यवृद्धिदम् ।
श्रमदाहविशोषनाशनं रुचिकृद्ग्राहि च दुर्जरं परम् ॥ ३३ ॥

( मं फणसुपिकलागुण । कं हलसिनहण्णु । वम्० फनस,
उत्तराषाढ़ा । तां पिल्ला । उत्० पणस । हिं
कटहल । गौ काँटाल । )

अथ पनसबीजगुणाः ।—

ईषत्कषायं मधुरं तद्बीजं वातलं गुरु ।
तत्फलस्य विकारघ्नं रुच्यं त्वग्दोषनाशनम् ॥ ३४ ॥

( मं फणस बीजगुण । कं हलसिन बीजगुण । )

अथास्य पक्वापक्वतो विभिन्नावस्थतया विशेषगुणाः ।—

बालं तु नीरसं हृद्यं मध्यपक्वं तु दीपनम् ।

---

* अङ्कमितं नवाभिधमित्यर्थः ।

रुचिदं लवणाद्युक्तं पनसस्य फलं स्मृतम् ॥ ३५ ॥

( मं छिरिवाफणसु । कं हैसियहलसु । )

अथ कदलीनामगुणाः :—

कदली सुफला रम्भा सुकुमारा सकृत्फला ।
मोचा गुच्छफला हस्ति-विषाणी गुच्छदन्तिका ॥ ३६ ॥
काष्ठीरसा च निःसारा राजेष्टा बालकप्रिया ।
ऊरुस्तम्भा भानुफला वनलक्ष्मीश्च षोडश ॥ ३७ ॥

बालं फलं मधुरमल्पतया कषायं
पित्तापहं शिशिररुच्यमथापि नालम् ।
पुष्पं तदप्यनुगुणं क्रिमिहारि कन्दं
पर्णञ्च शूलशमकं कदलीभवं स्यात् ॥ ३८ ॥

अपि च ।—

रम्भापक्वफलं कषायमधुरं बल्यञ्च शीतं तथा
पित्तं चास्रविमर्दनं गुरुतरं पथ्यं न मन्दानले ।
सद्यः शुक्रविवृद्धिदं क्लमहरं तृष्णापहं कान्तिदं
दीप्ताग्नौ सुखदं कफामयकरं सन्तर्पणं दुर्जरम् ॥ ३९ ॥

( मं केल । कं कदली । तें अरटिचेट्टु, वुरुगचेट्टु, दीव्वडतीगे ।
हिं केरा, सवेज, केला । गौ कला ।)

अथ काष्ठकदलीनामगुणाः ।—

काष्ठकदली सुकाष्ठा वनकदली काष्ठिका शिलारम्भा ।
दारुकदली फलाढ्या वनमोचा चाश्मकदली च ॥ ४० ॥

स्यात्काष्ठकदली रुच्या रक्तपित्तहरा हिमा।
गुरुर्मन्दाग्निजननी दुर्जरा मधुरा परा ॥ ४१ ॥

( मं काष्ठकेलें। कं मरवाले। गौ काटकला। )

अथ गिरिकदलीनामगुणाः।—

गिरिकदली गिरिरम्भा पर्वतमोचाऽप्यरण्यकदली च।
बहुवीजा वनरम्भा गिरिजा गजवल्लभाऽभिहिता ॥ ४२ ॥
गिरिकदली मधुरहिमा बलवीर्य्यविवृद्धिदायिनी रुच्या।
तृट्पित्तदाहशोषप्रशमनकर्त्री च दुर्जरा च गुरुः ॥ ४३ ॥

( मं रायकेलि। कं कावाले। गौ दयाकला, पाहाड़ेकला। )

अथ सुवर्णकदलीनामगुणाः।—

अन्या सुवर्णकदली सुवर्णरम्भा च कनकरम्भा च।
पीता सुवर्णमोचा चम्पकरम्भा सुरभिका सुभगा ॥ ४४ ॥
हेमफला स्वर्णफला कनकस्तम्भा च पीतरम्भा च।
गौरा च गौररम्भा काञ्चनकदली सुरप्रिया षड्भूः ॥४५॥ *
सुवर्णमोचा मधुरा हिमा च स्वल्पाशने दीपनकारिणी च।
तृष्णापहा दाहविमोचनी च कफावहा वृष्यकरी गुरुश्च ॥४६॥

( सोनेकेलि इति कोङ्कणे प्रसिद्धा। उत्० पाटीया।
गौ चाँपाकला। )

अथ नारिकेलनामगुणाः।— †

नारिकेलो रसफलः सुतुङ्गः कूर्चशेखरः।
दृढनीलो नीलतरुर्मङ्गल्योच्चतरुस्तथा ॥ ४७ ॥

---

* षड्भूः षोड्शपर्य्याया इत्यर्थः।

† रलयोरभेदं मत्वा केचित् नारिकेरमित्यपि पठन्ति।

तृणराजः स्कन्धतरुर्दीर्घफलाख्यो दुरारुहः ।
लाङ्गली त्र्यम्बकफलस्तथा दृढ़फलस्थितिः ॥ ४८ ॥
नारिकेलो गुरुः स्निग्धः शीतः पित्तविनाशनः ।
अर्द्धपक्वस्तृषाशोष-शमनो दुर्जरः परः ॥ ४९ ॥

नारिकेलसलिलं लघु बल्यं शीतलं च मधुरं गुरु पाके
पित्तपीनसतृषाश्रमदाहशान्ति शोषशमनं सुखदायि ।
पक्वमेतदपि किञ्चिदिहोक्तं पित्तकारि रुचिदं मधुरं च
दीपनं बलकरं गुरु वृष्यं वीर्य्यवर्द्धनमिदं तु वदन्ति ॥ ५० ॥

(मं नारियलरसु। कं नारियलरसः। तें नारिकदम। उत्० नड़िया। वम्० नारलो। तां टेन्ना, टेङ्गा। हिं नारिएल्। गौ नारिकेल।)

अथ नालिकेलखुवरगुणाः।—

खुवरं नारिकेलस्य स्निग्धं गुरु च दुर्जरम् ।
दाहविष्टम्भदं रुच्यं बलवीर्य्यविवर्द्धनम् ॥ ५१ ॥

(मं नारियलखोबरें।)

अथ मधुनारिकेलनामगुणाः।—

मधुनारिकेलकोऽन्यो माध्वीकफलश्च मधुफलोऽसितजफलः ।
माक्षिकफलो मृदुफलो बहुकूर्चो ह्रस्वफलश्च वसुगणिताह्वः॥५२॥
मधुरं मधुनारिकेलमुक्तं शिशिरं दाहतृषार्त्तिपित्तहारि ।
बलपुष्टिकरं च कान्तिमग्र्यां कुरुते वीर्य्यविवर्द्धनं च रुच्यम्॥५३॥

किञ्च।—

माध्वीकं नारिकेलं फलमतिमधुरं दुर्जरं जन्तुकारि
स्निग्धं वातातिसारश्रमशमनमथ ध्वंसनं वह्निदीप्तेः ।

आमश्लेषप्रकोपं जनयति कुरुते चारुकान्तिं बलञ्च
स्थैर्य्यं देहस्य धत्ते घनमदनकलावर्द्धनं पित्तनाशम् ॥ ५४ ॥

( मं, कं, मह्लनारियल। एरनारिकेर इति कोङ्कणे प्रसिद्धः।
वम्० मद्दाजारल। गौ वामननारिकेल। )

अथ खर्जूरीनामगुणाः ।—

खर्जूरी तु खरस्कन्धा दुष्प्रधर्षा दुरारुहा ।
निःश्रेणी च कषाया च यवनेष्टा हरिप्रिया ॥ ५५ ॥
खर्जूरी तु कषाया च पक्वा गौल्यकषायका ।
पित्तघ्नी कफदा चैव क्रिमिकृद्दृष्यबृंहणी ॥ ५६ ॥

( मं सिन्धी। कं ईचिलु। गौ खेजुर। )

अथ मधुखर्जूरीनामगुणाः ।—

मधुखर्जूरी लव्या मधुकर्कटिका च कोलकर्कटिका ।
कण्टकिनी मधुफलिका माध्वी मधुरा च मधुरखर्जूरी ॥५७॥
मधुखर्जूरी मधुरा वृष्या सन्तापपित्तशान्तिकरी ।
शिशिरा च जन्तुकरी बहुवीर्य्यविवर्द्धनं तनुते ॥ ५८ ॥

( मं मिष्टसिन्धी। कं सौंद इचिलु। गौ मिष्टिखेजुर। )

अथ भूखर्जूरीनामगुणाः ।—

भूखर्जूरी भुक्ता वसुधाखर्जूरिका च भूमिखर्जूरी ।
भूखर्जूरी मधुरा शिशिरा च विदाहपित्तहरा ॥ ५९ ॥

( मं लघुसिन्धी। कं किरि इचिलु। गौ छोटखेजुर। )

अथ पिण्डखर्जूरीनाम ।—

दीप्या च पि॰ खर्जूरी स्थलपिण्डा मधुस्रवा ।

फलपुष्पा स्वादुपिण्डा हयभक्ष्या स्वराभिधा ॥ ६० ॥ *

अथ राजखर्जूरीनामगुणाः ।—

तथाऽन्या राजखर्जूरी राजपिण्डा नृपप्रिया ।
मुनिखर्जूरिका वन्या राजेष्टा रिपुसम्मिता ॥ ६१ ॥ †
पिण्डखर्जूरिकायुग्मं गौल्यं स्वादे हिमं गुरु ।
पित्तदाहार्त्तिश्वासघ्नं श्रमहृद्वीर्य्यवृद्धिदम् ॥ ६२ ॥

( मं एरण्डपिण्डखर्जूरी । गौ पिण्डिखेजुर । )

अन्यच्च ।—

दाहघ्नी मधुराऽस्रपित्तशमनी तृष्णार्त्तिदोषापहा
शीता श्वासकफश्रमोदयहरा सन्तर्पणी पुष्टिदा ।
वक्त्रेर्मान्द्यकरी गुरुर्विषहरा हृद्या च दत्ते बलं
स्निग्धा वीर्य्यविवर्द्धनी च कथिता पिण्डाख्यखर्जूरिका ॥६३॥

अथ चारनामगुणाः ।—

चारः खद्रुः खरस्कन्धो ललनश्चारकस्तथा ।
बहुवल्कः प्रियालश्च नवद्रुस्तापसप्रियः ।
स्नेहबीजश्चोपवटो भक्ष्यबीजः करेन्दुधा ॥ ६४ ॥ ‡
चारस्य च फलं पक्वं वृष्यं गौल्याम्लकं गुरु ।
तद्बीजं मधुरं वृष्यं पित्तदाहार्त्तिनाशनम् ॥ ६५ ॥
( मं चारबी । कं चारबीज । गौ चार दाना ; पियालबीज । )

---

* स्वराभिधा सप्तनामकाः ।

† रिपुसम्मिता षट्पर्य्याया इत्यर्थः ।

‡ करेन्दुधा द्वादशाभिधा इत्यर्थः ।

अथ भल्लातकनामगुणाः।— *

भल्लातकोऽग्निर्दहनस्तपनोऽरुष्करोऽनलः।
क्रिमिघ्नस्तैलवीजश्च वातारिः स्फोटवीजकः॥ ६६॥
पृथग्वीजो धनुर्वीजो भल्लातो वीजपादपः।
वह्निर्वीरतरुश्चेति विज्ञेयः षोड़शाह्वयः॥ ६७॥
भल्लातकः कटुस्तिक्तः कषायोष्णः क्रिमीञ्जयेत्।
कफवातोदरानाह-मेहदुर्नामनाशनः॥ ६८॥

अपरः।—

भल्लातस्य फलं कषायमधुरं कोष्णं कफार्त्तिश्रम-
श्वासानाहविबन्धशूलजठराध्मानक्रिमिध्वंसनम्।
तन्मज्जा च विशोषदाहशमनी पित्तापहा तर्पणी
वातारोचकहारिदीप्तिजननी पित्तापहा त्वञ्जसा॥ ६९॥

(मं विव। हिं भिलावा। तें जिड़िचेट्टु, जिड़िविट्टुलु। वम्० विवक्ष। तां शनकोट्टइ। दां भिलवन्। पारस्य भिलादुर। उत्० भल्लिय। कं गोडम्वो, केरवीज। गो भेला।)

अथ रायणीनामगुणाः। (राजादनः)।—

राजादनो राजफलः चीरवृक्षो नृपद्रुमः।
निम्बवीजो मधुफलः कपोष्टो माधवोद्भवः॥ ७०॥

---

* भल्लातकशोधनम्;—
"भल्लातकानि पक्वानि समानीय क्षिपेज्जले।
मज्जन्ति यानि तत्रैव शुद्ध्यर्थं तानि योजयेत्।
इष्टकाचूर्णनिकरैर्घर्षणान्निर्विषं भवेत्॥" इति।

क्षीरी गुच्छफलः प्रोक्तः शुकेष्टो राजवल्लभः ।
श्रीफलोऽथ दृढस्कन्धः क्षीरशुक्लस्त्रिपञ्चधा ॥ ७१ ॥
राजादनी तु मधुरा पित्तघ्नी गुरुतर्पणी ।
वृष्या स्थौल्यकरी हृद्या सुस्निग्धा मेहनाशकृत् ॥ ७२ ॥
( मं रायणी । कं रेवणी । तें मारिले । खिरनी इति गुर्जरे प्रसिद्धः । तां पल्ल । वम्० केर्णी । हिं क्षीरी । गौ क्षीरखेजुर । )

अथ दाडिमनामगुणाः ।—

दाडिमो दाडिमीसारः कुट्टिमः फलषाडवः ।
करको रक्तबीजश्च सुफलो दन्तबीजकः ॥ ७३ ॥
मधुबीजः कुचफलो रोचनः शुकवल्लभः ।
मणिबीजस्तथा वल्क-फलो वृत्तफलश्च सः ।
सुनीलो नीलपत्रश्च ज्ञेयः सप्तदशाह्वयः ॥ ७४ ॥
दाडिमं मधुरमम्लकषायं कासवातकफपित्तविनाशि ।
ग्राहि दीपनकरञ्च लघूष्णं शीतलं श्रमहरं रुचिदायि ॥ ७५ ॥
दाडिमं द्विविधमीरितमार्यैरम्लमेकमपरं मधुरञ्च ।
तत्र वातकफहारि किलाम्लं तापहारि मधुरं लघु पथ्यम् ॥७६॥
( मं दाडिम । कं दाडिम्ब । तें डानिम्मचेट्टु । तां मादलइचेडि । गुर्जं० डालम् । उत्० दालिम्ब । हिं अनार । गौ डालिम । )

अथ तिन्दुकनामगुणाः ।—

तिन्दुको नीलसारश्च कालस्कन्धोऽतिमुक्तकः ।
स्फूर्जको रामणश्चैव स्फूर्जनः स्यन्दनाह्वयः ॥ ७७ ॥

तिन्दुकस्तु कषायः स्यात् संग्राही वातकृत्परः।
पक्वस्तु मधुरः स्निग्धो दुर्जरः श्लेष्मलो गुरुः ॥ ७८ ॥
( मं टेम्बुरु। कं तुम्बुरु। तें तेमिक। तां तुम्बिक। वम्० तिम्बोरी। हिं तेंदु। गो गाब।)

अथ काकतिन्दुकनामगुणाः।—

तिन्दुकोऽन्यः काकपीलुः काकाण्डः काकतिन्दुकः।
काकस्फूर्जश्च काकेन्दुः काकाह्वः काकबीजकः॥ ७९ ॥
काकतिन्दुः कषायोऽम्लो गुरुर्वातविकारजित्।
पक्वस्तु मधुरः किञ्चित् कफकृत्पित्तवान्तिहृत् ॥ ८० ॥
( मं काग्टटेम्बुरु। कं किरितुम्बुरु। तें तुमि, तुम्कि। तां तुम्बि। गौ माकड़ागाव, माकड़ा तेंद, केंद; आवलुग्र। हिं केन्दु, तेन्दु।)

अथ अक्षोटनामगुणाः।—

अक्षोटः पार्वतीयश्च फलस्नेहो गुडाशयः।
कोरिष्टः कन्दरालश्च मधुमज्जा बृहच्छदः॥ ८१ ॥
अक्षोटो मधुरो बल्यो स्निग्धोष्णो वातपित्तजित्।
रक्तदोषप्रशमनः शीतलः कफकोपनः॥ ८२ ॥
( आखोट इति हिमवति प्रसिद्धः। कोङ्कणदेशे अखोड़ इति ख्यातः। हिं खरोटनासपाती। प्राकृतः अक्खोड़। गौ: आखरोट।)

अथ पीलुनामगुणाः।—

पीलुः शीतः सहस्रांशी धानी गुडफलस्तथा।
विरेचनफलः शाखी श्यामः करभवल्लभः॥ ८३ ॥

अङ्काह्वः कटुकः पीलुः कषायो मधुराम्लकः । *
सरः स्वादुश्च गुल्मार्शः-शमनो दीपनः परः ॥ ८४ ॥
(मं लघुपीलु । कं मिरियें, अङ्कनि । तें गोलुगुचेट्टु, पिन्नवरगोग्ड ।
तां कोकु । व॰ कक्हन् । हिं झाल । गो, कौं, पीलु । )

अथ बृहत्पीलुनामगुणाः ।—

अन्यश्चैव बृहत्पीलुर्महापीलुर्महाफलः ।
राजपीलुर्महावृक्षो मधुपीलुः षडाह्वयः ॥ ८५ ॥
मधुरस्तु महापीलुर्वृष्यो विषविनाशनः ।
पित्तप्रशमनो रुच्य आमघ्नो दीपनीयकः ॥ ८६ ॥
( मं वड़िलपीलु । कं दोडुपीलु । गुर्जरे स्वनाम्ना प्रसिद्धः । )

अथ पारेवतनामगुणाः ।—

पारेवतन्तु रैवतमारेवतकञ्च किञ्च रैवतकम् ।
मधुफलममृतफलाख्यं पारेवतकञ्च सप्ताह्वम् ॥ ८७ ॥
पारेवतन्तु मधुरं क्रिमिवातहारि
वृष्यं तृषाज्वरविदाहहरञ्च हृद्यम् ।
मूर्च्छाभ्रमश्रमविशोषविनाशकारि
स्निग्धञ्च रुच्यमुदितं बहुवीर्य्यदायि ॥ ८८ ॥
( मं साधारण उत्तरौ । कं उत्तरिगे । कामरूपे रैवात इति
प्रसिद्धम् । उत्॰ प्याड़ा । गौ पेयारा । )

अथ महापारेवतनामगुणाः ।—

महापारेवतं चान्यत् स्वर्णपारेवतं तथा ।

---

* अङ्काह्वेति नवसंख्या ज्ञेया ।

साम्राणिजं खारिकं च रक्तरैवतकश्च तत् ।
बृहत्पारेवतं प्रोक्तं द्वीपजं द्वीपखर्जूरी ॥ ८९ ॥
महापारेवतं गौल्यं बलकृत्पुष्टिवर्द्धनम् ।
वृष्यं मूर्च्छाज्वरघ्नञ्च पूर्वोक्तादधिकं गुणैः ॥ ९० ॥

( मं वड़िल उत्तरि । कं दोड्ड उत्तरिगि । )

अथ मधूकनामगुणाः ।—

मधूको मधुवृक्षः स्यात् मधुष्ठीलो मधुस्रवः ।
गुड़पुष्पो लोध्रपुष्पो वानप्रस्थश्च माधवः ॥ ९१ ॥
मधुकं मधुरं शीतं पित्तदाहश्रमापहम् ।
वातलं जन्तुदोषघ्नं वीर्य्यपुष्टिविवर्द्धनम् ॥ ९२ ॥

( कं मड्डू इप्पे । तां काटइलुपि । तें पिना । वम्० मोहा ।
हिं महुया । गो मउल । )

अथ जलमधूकनामगुणाः ।—

अन्यो जलमधूको मङ्गल्यो दीर्घपत्रको मधुपुष्पः ।
क्षौद्रप्रियः पतङ्गः कोरेष्टो गैरिकाख्यश्च ॥ ९३ ॥
ज्ञेयो जलमधूकस्तु मधुरो व्रणनाशनः ।
वृष्यो वान्तिहरः शीतो बलकारी रसायनः ॥ ९४ ॥

( मं जलमधूक ; जलमहे । कं तोरे इप्पे । गो जलमौया । )

अथ मधूकपुष्पफलगुणाः ।—

मधूकपुष्पं मधुरञ्च वृष्यं हृद्यं हिमं पित्तविदाहहारि ।
फलञ्च वातामयपित्तनाशि ज्ञेयं मधूकद्वयमेवमेतत् ॥ ९५ ॥
( मं दोड्डमहु । कं यरडु इप्पे । गो मौयाफुल, मौयाफल । )

अथ भव्यनामगुणाः ।—

भव्यं भवं भविष्यञ्च भावनं वक्त्रशोधनम् ।
तथा पिच्छलवीजञ्च तच्च लोमफलं मतम् ॥ ९६ ॥
भव्यमम्लं कटूष्णञ्च बालं वातकफापहम् ।
पक्वन्तु मधुराम्लञ्च रुचिकृत्सामशूलहृत् ॥ ९७ ॥

( नीवे इति कोङ्कणे प्रसिद्धम् । गौ चालता । )

अथ आरुकनामगुणाः ।—

आरुकं वीरसेनञ्च वीरं वीरारुकं तथा ।
तच्च विद्याच्चतुर्जातीः पत्रपुष्पादिभेदतः ॥ ९८ ॥
आरुकाणि च सर्वाणि मधुराणि हिमानि च ।
अर्शःप्रमेहगुल्मास्र-दोषविध्वंसनानि च ॥ ९९ ॥

( आरुक इति हिमवति प्रसिद्धम् । गौ आलुवोखारा । )

अथ द्राक्षानामगुणाः ।—

द्राक्षा चारुफला कृष्णा प्रियाला तापसप्रिया ।
गुच्छफला रसाला च ज्ञेयाऽमृतफला च सा ॥ १०० ॥
द्राक्षाऽतिमधुराऽम्ला च शीता पित्तार्त्तिदाहजित् ।
मूत्रदोषहरा रुच्या वृष्या सन्तर्पणी परा ॥ १०१ ॥

( मं द्राक्षा । कं द्राक्षे । तें द्राक्षपोण्डु, द्राक्षचेट्टु । तां कोडि-मुन्दिरिप्पषाम् । हिं दाख, आङ्गुर । गौ किस्मिस्, आङ्गुर । )

अथ गोस्तनीनामगुणाः ।—

अन्या कपिलद्राक्षा मृद्वीका गोस्तनी च कपिलफला ।
अमृतरसा दीर्घफला मधुवल्ली मधुफला मधूली च ॥ १०२ ॥

हरिता च हारहूरा सुफला मृद्वी हिमोत्तरापथिका।
हैमवती शतवीर्य्या काश्मीरो गजराजमहिगणिता ॥ १०३ ॥ *

गोस्तनी मधुरा शीता हृद्या च मदहर्षणी।
दाहमूर्च्छाज्वरश्वास-तृषाहृल्लासनाशिनी ॥ १०४ ॥

( मं गोस्तनीद्राक्षा। कं वेड़गणद्राचे। गौ मनेक्का। )

अथ काकलीद्राक्षानामगुणाः। -

अन्या सा काकलीद्राक्षा जम्बुका च फलोत्तमा।
लघुद्राक्षा च निर्बीजा सुवृत्ता रुचिकारिणी।
शिशिरा श्वासहृल्लास-नाशिनी जनवल्लभा ॥ १०५ ॥

( मं लघुद्राक्षा। कं पिकुद्राचे। )

अथास्य पक्वापक्वतो विभिन्नावस्थतया विशेषगुणाः।—

द्राक्षाबालफलं कटूष्णविशदं पित्तास्रदोषप्रदं
मध्यं चाम्लरसं रसान्तरगते रुच्यातिवह्निप्रदम्।
पक्वं चेन्मधुरं तथाऽम्लसहितं तृष्णास्रपित्तापहं
पक्वं शुष्कतमं श्रमार्त्तिशमनं सन्तर्पणं पुष्टिदम् ॥ १०६ ॥

अपरञ्च।—

शीता पित्तास्रदोषं दमयति मधुरा स्निग्धपाकाऽतिरुच्या
चक्षुष्या श्वासकासश्रमवमिशमनी शोफतृष्णाज्वरघ्नी।
दाहाध्मानभ्रमादीनपनयति परा तर्पणी पक्वशुष्का
द्राक्षा रक्षोणवीर्य्यानपि मदनकलाकेलिदक्षान्विधत्ते ॥ १०७ ॥

* ऐरावतादिनामभेदात् अत्र गजराजशब्देन अष्टौ संख्या ग्राह्याः, महीशब्देन च एकः, ततश्च अष्टादशसंख्या ज्ञेया।

अथ कर्म्मारनामगुणाः ।—

कर्म्मारः कर्मरकः पीतफलः कर्मरश्च मुद्गरकः ।
मुद्गरफलश्च धाराफलकस्तु कर्म्मारकश्चैव ॥ १०८ ॥
कर्म्मारकोऽम्ल उष्णश्च वातहृत्पित्तकारकः ।
पक्वस्तु मधुराम्लः स्यात् बलपुष्टिरुचिप्रदः ॥ १०९ ॥

( कर्म्मार इति कोङ्कणे प्रसिद्धः । मं कर्म्मराचें झाड़ ।
गौ कामराङ्गा । )

अथ परूषनामगुणाः ।—

परूषकं तोलपर्णं गिरिपीलु परावरम् ।
नीलमण्डलमल्पास्थि परुषञ्च परुस्तथा ॥ ११० ॥
परूषमम्लं कटुकं कफार्त्तिजिद्वातापहं तत्फलमेव पित्तदम् ।
सोष्णञ्च पक्वं मधुरं रुचिप्रदं पित्तापहं शोफहरञ्च पीतम् ॥ १११ ॥

( मं पर्पंका । कं बेट्टहा । तां दोगलि । तें पुटिकौ । हिं फालूचे,
शुकरी, फरुषा । गौ फल्सा । )

अथ पिप्पलनामगुणाः ।—

अश्वत्थश्चाच्युतावासश्चलपत्रः पवित्रकः ।
शुभदो बोधिवृक्षश्च याज्ञिको गजभक्षकः ॥ ११२ ॥
श्रीमान् क्षीरद्रुमो विप्रो मङ्गल्यः श्यामलश्च सः ।
पिप्पलो गुह्यपुष्पश्च सेव्यः सत्यः शुचिद्रुमः ।
चैत्यद्रुमो धर्मवृक्षो ज्ञेयो विंशतिसंज्ञकः ॥ ११३ ॥
पिप्पलः सुमधुरस्तु कषायः शीतलश्च कफपित्तविनाशी ।
रक्तदाहशमनः स हि सद्यो योनिदोषहरणः किल पक्वः ॥ ११४ ॥

अन्यच्च । —

अश्वत्थवृक्षस्य फलानि पक्वान्यतीवहृद्यानि च शीतलानि ।
कुर्वन्ति पित्तास्रविषार्त्तिदाहं विच्छर्दिशोषारुचिदोषनाशम् ॥११५॥

( मं पिम्पलु । कं अरलि । तें राविचेट्टु, कुलुञ्विचेट्टु ।
हिं पिपर । गो अश्वत्थ । )

अथ वटनामगुणाः ।—

स्यादथ वटो जटालो न्यग्रोधो रोहिणोऽवरोही च ।
विटपी रक्तफलश्च स्कन्धरुहो मण्डली महाच्छायः ॥ ११६ ॥
शृङ्गी यक्षावासो यक्षतरुः पादरोहिणो नीलः ।
क्षीरी शिफारुहः स्याद्बहुपादः स तु वनस्पतिर्नवभूः ॥ ११७॥ *
वटः कषायो मधुरः शिशिरः कफपित्तजित् ।
ज्वरदाहतृषामोह-व्रणशोफापहारकः ॥ ११८ ॥

( मं वट । कं आल । तें मरिचेट्टु, मारि, पेड्डि मरि । उत्० बोरु ।
तां अल । हिं वर, बर्गट । गो वट । )

अथ वटीनामगुणाः ।—

नदीवटो यक्षवृक्षः सिद्धार्थो वटको वटी ।
अमरा सङ्गिनी चैव क्षीरकाष्ठा च कीर्त्तिता ॥ ११९ ॥
वटी कषायमधुरा शिशिरा पित्तहारिणी ।
दाहतृष्णाश्रमश्वास-विच्छर्दिशमनी परा ॥ १२० ॥

( मं दुंजावडु । कं गालि आल । गो नदीवट । )

अथ अश्वत्थिकानामगुणाः ।—

अश्वत्थी लघुपत्री स्यात्पवित्रा ह्रस्वपत्रिका ।

---

* नवभूः एकोनविंशत्याख्यः ।

पिप्पलिका वनस्था च क्षुद्रा चाश्वत्थसन्निभा ॥ १२१ ॥
अश्वत्थिका तु मधुरा कषाया चास्रपित्तजित् ।
विषदाहप्रशमनी गुर्विण्या हितकारिणी ॥ १२२ ॥
( मं अश्वत्थी । कं हेब्बरलि । हिं पिप्ली । गो गया अश्वत्थ । )

अथ प्लक्षद्वयनामगुणाः ।—

प्लक्षः कपीतनः क्षीरी सुपार्श्वोऽथ कमण्डलुः ।
शृङ्गी वरोहशाखी च गर्दभाण्डः कपीतकः ।
दृढप्ररोहः प्लवकः प्लवङ्गश्च महाबलः ॥ १२३ ॥
प्लक्षश्चैवापरो ह्रस्वः सुशीतः शीतवीर्य्यकः ।
पुण्ड्रो महाऽवरोहश्च ह्रस्वपर्णस्तु पिम्परिः ।
भिदुरो मङ्गलच्छायो ज्ञेयो द्वाविंशधाभिधः ॥ १२४ ॥
प्लक्षः कटुकषायश्च शिशिरो रक्तदोषजित् ।
मूर्च्छाभ्रमप्रलापघ्नो ह्रस्वप्लक्षो विशेषतः ॥ १२५ ॥
( मं पिंम्परि । कं बसुरि । तें गङ्गरयजुब्वि । तां पोरिशुरावि ।
हिं पाकड़ि, पखर, गजदन्तसहोरा । गो पाकुड़ । )

अथ उदुम्बरनामगुणाः ।—

उदुम्बरः क्षीरवृक्षो हेमदुग्धः सदाफलः ।
कालस्कन्धो यज्ञयोग्यो यज्ञीयः सुप्रतिष्ठितः ॥ १२६ ॥
शीतवल्को जन्तुफलः पुष्पशून्यः पवित्रकः ।
सौम्यः शीतफलश्चेति मनुसंज्ञः समीरितः ॥ १२७ ॥ *
उदुम्बरं कषायं स्यात्पक्वन्तु मधुरं हिमम् ।
कृमिकृत्पित्तरक्तघ्नं मूर्च्छादाहतृषापहम् ॥ १२८ ॥

* मनूनां चतुर्दशत्वादत्र मनुसंज्ञः चतुर्दशसंज्ञो ज्ञेयः ।

अपि च।—

औदुम्बरं फलमतीव हिमं सुपक्वं
पित्तापहं च मधुरं श्रमशोफहारि।
आमं कषायमतिदीपनरोचनं च
मांसस्य वृद्धिकरमस्रविकारकारि॥ १२९॥

( मं उम्बर। कं अत्ति। तें गूलर। गुर्ज॰, हिं, गुलार। उत्॰ उडुम्बर। गो यज्ञडुमुर।)

अथ नद्युदुम्बरिकानामगुणाः।—

नद्युदुम्बरिका चान्या लघुपत्रफला तथा।
प्रोक्ता लघुक्षेमदुग्धा लघुपूर्वसदाफला॥ १३०॥
लघ्वाद्युम्बराह्वा स्याद्दाणाह्वा च प्रकीर्त्तिता। *
रसवीर्य्यविपाकेषु किञ्चिन्न्यूना च पूर्वतः॥ १३१॥

( मं नदीतीर उदुम्बर। कं नारे अत्ति। गो बलाडुमुर।)

अथ काकोदुम्बरिकानामगुणाः।—

कृष्णोदुम्बरिका चान्या खरपत्री च राजिका।
उदुम्बरी च कठिना कुष्ठघ्नी फल्गुवाटिका॥ १३२॥
अजाक्षी फल्गुनी चैव मलपूश्चित्रभेषजा।
काकोदुम्बरिका चैव ध्वाङ्क्षनाम्नी त्रयोदश॥ १३३॥
काकोदुम्बरिका शीता पक्वा गौल्याऽम्लिका कटुः।
त्वग्दोषपित्तरक्तघ्नी तद्वल्कं चातिसारजित्॥ १३४॥

---

* बाणाह्वा पञ्चसंज्ञका।

( मं काला उदुम्बर, काला उम्बा । कं काअत्ति । तें ब्रह्ममेडि-
पेट्ट । चिं तटमिला, कटुम्भरो, गोडुम्बरा ।
गो काठडुमुर । )

अथ उदुम्बरत्वग्गुणाः ।—

उदुम्बरत्वचा शीता कषाया व्रणनाशिनी ।
गुर्विणी गर्भसंरक्षे हिता स्तन्यप्रदायिनी ॥ १३५ ॥

अथ बदरनामगुणाः ।—

बदरो बदरी कोली कर्कन्धूः कोलफेनिली ।
सौवीरको गुडफलो बालेष्टः फलशैशिरः ॥ १३६ ॥
दृढ़बीजो वृत्तफलः कण्टकी वक्रकण्टकः ।
सुबीजः सुफलः स्वच्छः सुरसः स्मृतिसम्मितः ॥ १३७ ॥ *
बदरं मधुरं कषायमम्लं परिपक्वं मधुराम्लमुष्णमेतत् ।
कफकृत्पचनातिसाररक्तश्रमशोषार्त्तिविनाशनं च रुच्यम् ॥१३८॥
( मं साधारणबोर । कं येरनु । गो कुल । )

अथ बदरपत्रत्वग्बीजगुणाः ।—

बदरस्य पत्रलेपो ज्वरदाहविनाशनः ।
त्वचा विस्फोटशमनी बीजं नेत्रामयापहम् ॥ १३९ ॥

अथ राजबदरनामगुणाः ।—

राजबदरो नृपेष्टो नृपबदरो राजवल्लभश्चैव ।
पृथुकोलस्तनुबीजो मधुरफलो राजकोलश्च ॥ १४० ॥
राजबदरः सुमधुरः शिशिरो दाहार्त्तिपित्तवातहरः ।

* स्मृतिसम्मितः अष्टादशाह्वः ।

वृष्यश्च वीर्य्यवृद्धिं कुरुते शोषश्रमं हरते ॥ १४१ ॥

( मं राजबोर। कं रायबरतल। हिं बैरी, बेर, बयेर। तें रेगु-चेट्टु, रेंच। उत्०:कुड़ि। वम्० बोर। तां रेयन्ति। गौ नारकेली कुल। )

अथ भूबदरनामगुणाः।—

भूबदरी क्षितिबदरी वल्लीबदरी च बदरिवल्ली च।
बहुफलिका लघुबदरी बदरफली सूक्ष्मबदरी च ॥ १४२ ॥
भूबदरी मधुराऽम्ला कफवातविकारहारिणी पथ्या।
दीपनपाचनकर्त्री किञ्चित्पित्तास्रकारिणी रुच्या ॥ १४३ ॥

( भूबोरि इति कोल्हापुरप्रान्ते प्रसिद्धा। हिं झड़बेर। गौ मेटोकुल। )

अथ लघुबदरनामगुणाः।—

सूक्ष्मफलो लघुबदरो बहुकण्टः सूक्ष्मपत्रको दुःस्पर्शः।
मधुरः शबराहारः शिखिप्रियश्चैव निर्दिष्टः ॥ १४४ ॥ *
लघुबदरं मधुराम्लं पक्वं कफवातनाशनं रुच्यम्।
स्निग्धं तु जन्तुकारकमीषत्पित्तार्त्तिदाहशोषघ्नम् ॥ १४५ ॥

( मं चुद्रबोरि। कं किरुयरतल। गौ डेमाकुल। )

अथ बीजपूरनामगुणाः।—

बीजपूरो बीजपूर्णः पूर्णबीजः सुकेसरः।
बीजकः केसराम्लश्च मातुलुङ्गः सुपूरकः ॥ १४६ ॥
रुचको बीजफलको जन्तुघ्नो दन्तुरत्वचः।

* शबराहार इत्यपि क्वचित् पाठः।

पूरको रोचनफलो द्विदेवमुनिसम्मितः ॥ १४७ ॥ *

बीजपूरफलमम्लकटूष्णं श्वासकासशमनं पचनं च ।
कण्ठशोधनपरं लघु हृद्यं दीपनं च रुचिकृज्जरणं च ॥ १४८ ॥

तथाच ।—

बालं पित्तमरुत्कफास्रकरणं मध्यं च तादृग्विधं
पक्वं वर्णकरं च हृद्यमथ तत्पुष्णाति पुष्टिं बलम् ।
शूलाजीर्णविबन्धमारुतकफश्वासार्त्तिमन्दाग्निजित्
कासारोचकशोफशान्तिदमिदं स्यान्मातुलुङ्गं सदा ॥१४९॥

अन्यच्च ।—

त्वक्तिक्ता दुर्जरा स्यात् कृमिकफपवनध्वंसिनी स्निग्धमुष्णं
मध्यं शूलार्त्तिपित्तप्रशमनमखिलारोचकघ्नं च गौल्यम् ।
वातार्त्तिघ्नं कटूष्णं जठरगदहरं केसरं दीप्यमम्लं
बीजं तिक्तं कफार्शःश्वयथुशमकरं बीजपूरस्य पथ्यम् ॥ १५० ॥

( मं मातुलिङ्ग । कं मावलः । तें मादीफलपुचेट्टु । उत्० कलम्बा ।
हिं बिजौरा । गौ टावालेबु । )

अथ वनबीजपूरनामगुणाः ।—

वनबीजपूरकोऽन्यो वनजो वनपूरकश्च वनबीजः ।
अत्यम्ला गन्धाढ्या वनोद्भवा देवदूती च ॥ १५१ ॥
पीता च देवदासी देवेष्टा मातुलुङ्गिका चैव ।
पवनी महाफला च स्यादियमिति वेदभूमिमिता ॥ १५२ ॥ †

---

* द्विः द्विरावृत्ता देवमुनयः सप्तर्षयः तेन चतुर्दश इत्यर्थः ।

† वेदभूमिमितः चतुर्दशाख्या ।

अम्लः कटूष्णो वनवीजपूरो रुचिप्रदो वातविनाशनश्च।
स्यादम्लदोषक्रिमिनाशकारी कफापहः श्वासनिषूदनश्च ॥१५३॥
( मं वनमातुलिङ्ग। कं कामाधशल।)

अथ मधुरवीजपूरनामगुणाः।—

मधुरवीजपूरो मधुपर्णी मधुरकर्कटी मधुवल्ली।
मधुकर्कटी मधुरफला महाफला वर्द्धमाना च ॥ १५४ ॥
मधुकर्कटी मधुरा शिशिरा दाहनाशनी।
त्रिदोषशमनी रुच्या वृष्या च गुरुदुर्जरा ॥ १५५ ॥
( मं मधुकाकड़ी। कं सखरेमाधवल। हिं मउफुटी।)

अथ आमलकीनामगुणाः।—

आमलकी वयःस्था च श्रीफला धात्रिका तथा।
अमृता च शिवा शान्ता शीताऽमृतफला तथा ॥ १५६ ॥
जातीफला च धात्रेयी ज्ञेया धात्रीफला तथा।
वृष्या वृत्तफला चैव रोचनी शरभूहया ॥ १५७ ॥ *
आमलकं कषायाम्लं मधुरं शिशिरं लघु।
दाहपित्तवमीमेह-शोफघ्नं च रसायनम् ॥ १५८ ॥

अपि च।—

कटु मधुरकषायं किञ्चिदम्लं कफघ्नं
रुचिकरमतिशीतं हन्ति पित्तास्रतापम्।
श्रमवमनविबन्धाध्मानविष्टम्भदोष-
प्रशमनममृताभं चामलक्याः फलं स्यात् ॥ १५९ ॥

* शरभूहया पञ्चदशनामकां।

( मं आंवला । कं नेल्लि । उत्० अंड़ा । हिं अवोरा ।
गौ आमला । )

अथ काष्ठधात्रीनामगुणाः ।—

अन्यच्चामलकं प्रोक्तं काष्ठधात्रीफलं तथा ।
क्षुद्रामलकसंप्रोक्तं क्षुद्रजातीफलञ्च तत् ॥ १६० ॥
काष्ठधात्रीफलं स्वादे कषायं कटुकं तथा ।
शीतं पित्तास्रदोषघ्नं पूर्वोक्तमधिकं गुणैः ॥ १६१ ॥

( मं काष्ठा आंवला । कं किरुनेल्लि । गौ काठ् आमला । )

अथ चिञ्चानामगुणाः ।—

चिञ्चा तु चुक्रिका चुक्रा साम्लिका शाकचुक्रिका ।
अम्ली सुतिन्तिड़ी चाम्ला चुक्रीका च नवाभिधा ॥ १६२ ॥
चिञ्चाऽत्यम्ला भवेदामा पक्वा तु मधुराम्लिका ।
वातघ्नी पित्तदाहास्र-कफदोषप्रकोपणी ॥ १६३ ॥
अम्लिकायाः फलं त्वाममत्यम्लं लघु पित्तकृत् ।
पक्वन्तु मधुराम्लं स्याद्भेदि विष्टम्भवातजित् ॥ १६४ ॥

( मं चिञ्चा । हिं इमली, अमली । कं हुणिसे । तें किएट । उत्०
कँआँ । तां पुलि । वम्० टिन्टज । गौ तेँतुल । )

अथ पक्वचिञ्चाफलरसगुणाः ।—

पक्वचिञ्चाफलरसो मधुराम्लो रुचिप्रदः ।
शोफपाककरो लेपाद्‌व्रणदोषविनाशनः ॥ १६५ ॥

( मं चिञ्चबरबड़ु । कं हुणिसेहण्णु । तें बरकट । )

अथ चिञ्चापत्रत्वग्गुणाः ।—

चिञ्चापत्रञ्च शोफघ्नं रक्तदोषव्यथापहम् ।

तस्याः शुष्कत्वचाऽऽसारं शूलमन्दाग्निनाशनम् ॥ १६६ ॥

अथ चिञ्चापत्ररसनामगुणाः ।— *

अम्लसारस्तु शाकाम्लं चुक्राम्लं चाम्लचुक्रिका ।
चिञ्चाम्लमम्लचूड़श्च चिञ्चारसोऽपि सप्तधा ॥ १६७ ॥
अम्लसारस्त्वतीवाम्लो वातघ्नः कफदाहकृत् ।
साम्येन शर्करामिश्रो दाहपित्तकफार्त्तिनुत् ॥१६८॥ †
( मं चिञ्चापत्र। कं हुणसिनयले । गो तं तुलपातार रस। )

अथ आम्रातकनामगुणाः ।—

आम्रातकः पीतनकः कपिचूतोऽम्लवाटकः ।
शृङ्गी कपिरसाढ्यश्च तनुक्षीरः कपिप्रियः ॥ १६९ ॥
आम्रातकं कषायाम्लमामहृत् कण्ठहर्षणम् ।
पक्वन्तु मधुराम्लाढ्यं स्निग्धं पित्तकफापहम् ॥ १७० ॥

---

* नन्वस्मिन् आम्रादिवर्गे केवलं वृक्षादिनामामेवावश्यवक्तव्यत्वमङ्गीक्रियते ; कथमत्र चिञ्चापत्ररसस्य ग्रहणम् ? किञ्च तद्ग्रहणे चिञ्चापत्रस्य चिञ्चाफलस्य च पृथक् ग्रहणं कार्य्यम् ? सत्यं, न हि चिञ्चापत्रफलानां कश्चित् विभिन्नपर्य्यायः। तेषां नामकथनं तु चिञ्चापर्य्यायस्य पदमेकमादितो गृहीत्वा अन्ते च पत्रं फलं वा प्रयुज्य कर्त्तव्यम्। चिञ्चारसस्य च परम् अन्येऽपि सप्त पर्य्यायवाचका शब्दाः सन्ति। तेनात्र रसोल्लेखो न दोषावहः। इति । अत्र चिञ्चासारेति पाठभेदोऽपि दृश्यते। पाठयोरनयोः साधीयस्त्वनिरूपणे वयमुदासीना एव ।

† साम्येन समभागतया इत्यर्थः । यावत्परिमितः अम्लसारः तावती एव शर्करा देया ।

( मं आम्बाडे, दूरसालआंबा । कं आम्बाडेश्काथि । हिं आम्बाड़ा । गौ आमड़ा । )

अथ नारङ्गनामगुणाः ।—

नारङ्गः स्यान्नागरङ्गः सुरङ्गस्त्वग्गन्धश्चैरावतो वक्त्रवासः ।
योगीरङ्गो नागरो योगरङ्गः गन्धाढ्योऽयं गन्धपत्रो रवीष्टः ॥१७१

नारङ्गं मधुरं चाम्लं गुरूष्णञ्चैव रोचनम् ।
वातामक्रिमिशूलघ्नं श्रमहृद्बलरुच्यदम् ॥ १७२ ॥

( मं नारङ्ग । तें गंजनिम्म, नारंजिचेट्टु । तां किचिलिचेट्टु । उत्० नारिङ्गो । हिं नाराङ्गी, सन्तरा । गौ कमलालेबु । )

अथ निम्बूकनामगुणाः ।—

निम्बूकः स्यादम्लजम्बीरकाख्यो वह्निर्दीप्यो वह्निबीजोऽम्लसारः ।
दन्ताघातः शोधनो जन्तुमारो निम्बूश्च स्याद्रोचनो रुद्रसंज्ञः
॥ १७३ ॥ *

निम्बूफलं प्रथितमम्लरसं कटूष्णं
गुल्मामवातहरमग्निविवृद्धिकारि ।
चक्षुष्यमेतदथ कासकफार्त्तिकण्ठ-
विच्छर्दिहारि परिपक्वमतीव रुच्यम् ॥ १७४ ॥

( मं निम्बे । कं निम्बू । गौ पातिलेबु । )

अथ जम्बीरनामगुणाः ।—

जम्बीरो दन्तशठो जम्भो जम्भीरजम्भलौ चैव ।
रोचनको मुखशोधी जाड्यारिर्जन्तुजिन्नवधा ॥ १७५ ॥

जम्बीरस्य फलं रसेऽम्लमधुरं वातापहं पित्तकृत्

---

* रुद्रसंज्ञः एकादशाङ्कः ।

पथ्यं पाचनरोचनं बलकरं वह्नेर्विवृद्धिप्रदम् ।
पक्वञ्चेन्मधुरं कफार्त्तिशमनं पित्तास्रदोषापनुत्
वर्ण्यं वीर्य्यविवर्द्धनञ्च रुचिकृत्पुष्टिप्रदं तर्पणम् ॥ १७६ ॥

( मं ईड । कं कञ्चिले । तें निम्मचेट्टु । हिं जम्बीरी, निम्बू ।
गौ गोँड़ा लेवु, जामीर लेवु । )

अथ मधुजम्बीरनामगुणाः ।—

अन्यो मधुजम्बीरो मधुजम्भो मधुरजम्भलश्चैव ।
शङ्खद्रावी शर्करकः पित्तद्रावो च षट्संज्ञः ॥ १७७ ॥

मधुरो मधुजम्बीरः शिशिरः कफपित्तनुत् ।
शोषघ्नस्तर्पणो वृष्यः श्रमघ्नः पुष्टिकारकः ॥ १७८ ॥

( मं साखरनिम्बु । कं किचिले । गौ मिठा जामीर, सरवति लेवु । )

अथ कपित्थनामगुणाः ।—

मालूरस्तु कपित्थो मङ्गल्यो नीलमल्लिका च दधि ।
ग्राहिफलश्चिरपाकी ग्रन्थिफलः कुचफलो दधिफलश्च ॥१७९॥
गन्धफलश्च कपीष्टो वृत्तफलः करभवल्लभश्चैव ।
दन्तशठः कठिनफलः करण्डफलकश्च सप्तदशसंज्ञः ॥ १८० ॥

कपित्थो मधुराम्लश्च कषायस्तिक्तशीतलः ।
वृष्यः पित्तानिलं हन्ति संग्राही व्रणनाशनः ॥ १८१ ॥
आमं कपित्थमम्लोष्णं कफघ्नं ग्राहि वातलम् ।
दोषत्रयहरं पक्वं मधुराम्लरसं गुरु ॥ १८२ ॥

अथास्य पक्वापक्वतो विभिन्नावस्थतया विशेषगुणाः ।—

आमं कण्ठरुजं कपित्थमधिकं जिह्वाजड़त्वावहं
तद्दोषत्रयवर्द्धनं विषहरं संग्राहकं रोचकम् ।

पक्वं श्वासवमिश्रमक्लमहरं हिक्काऽपनोदक्षमं
सर्वं ग्राहि रुचिप्रदं च कथितं सेव्यं ततः सर्वदा ॥ १८३ ॥

( मं कंविठ । कं बेललु । तें वेलगचेट्टु । हिं कोइथ् ।
गौ कत्‌बेल । )

अथ तुम्बरुनामगुणाः । ( तुम्बरः ) ।—

तुम्बरुः सौरभः सौरो वनजः सानुजो द्विजः ।
तीक्ष्णवल्कस्तीक्ष्णफलस्तीक्ष्णपत्रो महामुनिः ।
स्फुटफलः सुगन्धिश्च स प्रोक्तो द्वादशाह्वयः ॥ १८४ ॥
तुम्बरुर्मधुरस्तिक्तः कटूष्णः कफवातनुत् ।
शूलगुल्मोदराध्मान-क्रमिघ्नो वह्निदीपनः ॥ १८५ ॥
( मं तेन्दु । कं तुम्बुरु । हिं तुमरु । गौ ताम्बुलफल । )

अथ रुद्राक्षनामगुणाः ।—

रुद्राक्षश्च शिवाक्षश्च शर्वाक्षो भूतनाशनः ।
पावनो नीलकण्ठाक्षो हराक्षश्च शिवप्रियः ॥ १८६ ॥
रुद्राक्षमम्लमुष्णञ्च वातघ्नं कफनाशनम् ।
शिरोऽर्त्तिशमनं रुच्यं भूतग्रहविनाशनम् ॥ १८७ ॥
( मं, कं, गौ, रुद्राक्ष । )

अथ विल्वनामगुणाः ।—

विल्वः शल्यो हृद्यगन्धः शलाटुः
शाण्डिल्यः स्याच्छ्रीफलः कर्कटाह्वः ।
शैलूषः स्याच्छैवपत्रः शिवेष्टः
पत्रश्रेष्ठो गन्धपत्रस्त्रिपत्रः ॥ १८८ ॥

लक्ष्मीफलो गन्धफलो दुरारुह-
स्त्रिशाकपत्रस्त्रिशिखः शिवद्रुमः।
सदाफलः सत्फलदः सुभूतिकः
समीरसारः शिखिनेत्रसंज्ञितः॥ १८९॥ *

विल्वस्तु मधुरो हृद्यः कषायः पित्तजित् गुरुः।
कफज्वरातिसारघ्नो रुचिकृद्दीपनः परः॥ १९०॥
विल्वमूलं त्रिदोषघ्नं मधुरं लघु वातनुत्।
फलं तु कोमलं स्निग्धं गुरु संग्राहि दीपनम्॥ १९१॥
तदेव पक्वं विज्ञेयं मधुरं सरसं गुरु।
कटुतिक्तकषायोष्णं संग्राहि च त्रिदोषजित्॥ १९२॥
( मं बेल। कं बेल्लवन। तें मारडु। तां विल्व। वम् विल।
हिं, गो, बेल। )

अथ सल्लकीनामगुणाः। ( शल्लकी )।—

सल्लकः सल्लकी सल्ली सुगन्धा सुरभिस्रवा।
सुरभिर्गजभक्ष्या च सुवहा गजवल्लभा॥ १९३॥
गन्धमूला मुखामोदा सुश्रीका जलविक्रमा।
हृद्या कुण्टरिका चैव प्रोक्ता त्रयस्त्रफला च सा।
छिन्नरुहा गन्धफला ज्ञेया चाष्टादशाह्वया॥ १९४॥
सल्लकी तिक्तमधुरा कषाया ग्राहिणी परा।
कुष्ठास्रकफवातार्शो-व्रणदोषार्त्तिनाशिनी॥ १९५॥
( मं सल्लकि। कं तदिकु। वम् शालइ। )

---

* शिखा विद्यतेऽस्य इति मत्वर्थे इन् प्रत्ययः ; अतः शिखी अग्निः, त्रयः, नेत्रं च द्वे, तेन त्रयोविंशतिसंख्या ग्राह्या।

अथ कतकनामगुणाः।—

कतकोऽम्बुप्रसादश्च कतस्तिक्तफलस्तथा।
रुच्यस्तु छेदनीयश्च ज्ञेयो गुड़फलः स्मृतः।
प्रोक्तः कतफलस्तिक्त-मरीचश्च नवाह्वयः॥ १९६॥
कतकः कटुतिक्तोष्णश्चक्षुष्यः क्रिमिदोषनुत्।
रुचिकृच्छूलदोषघ्नो वीजमम्बुप्रसादनम्॥ १९७॥
( मं चोलु। कं चिल्लिकायि। गौ निर्मलिफल। )

अथ कर्कटनामगुणाः।—

कर्कटः कार्कटः कर्कः क्षुद्रधात्री च स स्मृतः।
क्षुद्रामलकसंज्ञश्च प्रोक्तः कर्कफलश्च षट्॥ १९८॥
कार्कटन्तु फलं रुच्यं कषायं दीपनं परम्।
कफपित्तहरं ग्राहि चक्षुष्यं लघु शीतलम्॥ १९९॥
( मं काकडें। कं वालिगी। गौ कां।कुगोल्। )

अथ श्लेष्मातकनामगुणाः।—

श्लेष्मातको बहुवारः पिच्छलो द्विजकुत्सितः।
शेलुः शीतफलः शीतः शाकटः कर्वुदारकः।
भूतद्रुमो गन्धपुष्पः ख्यात एकादशाह्वयः॥ २००॥
श्लेष्मातकः कटुहिमो मधुरः कषायः
स्वादुश्च पाचनकरः क्रिमिशूलहारी।
आमास्रदोषमलरोधवहुव्रणार्त्ति-
विस्फोटशान्तिकरणः कफकारकश्च॥ २०१॥
( मं सेलवखिट। कं चेलु। वम्० भोकर। उत्० अव। पारस्य
शुग्पिस्तन्। तां विड़ि। हिं बहुआर, लसोरा। गौ चालता। )

अथ भूकर्वुदारकनामगुणाः । (श्लेष्मातकभेदः ) ।—

भूकर्वुदारकश्चान्यः क्षुद्रश्लेष्मातकस्तथा ।
भूशेलुर्लघुशेलुश्च पिच्छलो लघुपूर्वकः ।
लघुशीतः सूक्ष्मफलो लघुभूतद्रुमश्च सः ॥ २०२ ॥
भूकर्वुदारो मधुरः क्रिमिदोषविनाशनः ।
वातप्रकोपणः किञ्चित् सशीतः स्वर्णमारकः ॥ २०३ ॥

( मं गोन्दिणि । हि छोटा लसोड़ा । )

अथ मुष्ककनामगुणाः ।—

मुष्कको मोचको मुष्को मोत्तको मुञ्चकस्तथा ।
गोलिको मेहनश्चैव चारवृत्तश्च पाटलिः ॥ २०४ ॥
विषापहो जटालश्च वनवासी सुतीक्ष्णकः ।
श्वेतः कृष्णश्च स द्वेधा स्यात्त्रयोदशसंज्ञकः ॥ २०५ ॥
मुष्ककः कटुकोऽम्लश्च रोचनः पाचनः परः ।
प्लीहगुल्मोदरार्त्तिघ्नो द्विधा तुल्यगुणान्वितः ॥ २०६ ॥

( मं मोखे । कं मोखदलाइ । तें मोक्कपुचेट्टु, मुष्कतुक्कुचेट्टु ।
हिं मोखा । गौ घण्टापारुल । )

अथ करमर्दनामगुणाः ।—

करमर्दः सुषेणश्च कराम्लः करमर्द्दकः ।
अविग्नः पाणिमर्द्दश्च कृष्णपाकफलो मुनिः ॥ २०७ ॥ *
करमर्दः सतिक्ताम्लो बालो दीपनदाहकः ।
पक्वस्त्रिदोषशमनोऽरुचिघ्नो विषनाशनः ॥ २०८ ॥

( मं करवन्दे । कं करिजिगे । हिं करौंदा । गौ करमचा । )

---

* मुनिः सप्तसंज्ञकः ।

अथ तेजःफलनामगुणाः ।—

तेजःफलो बहुफलस्तथोक्तः शाल्मलीफलः ।
फलस्तीक्ष्णादिसंयुक्तः फलान्तस्तवकादिकः ।
स्तेयीफलो गन्धफलः कण्टवृत्तः प्रकीर्त्तितः ॥ २०९ ॥
तेजःफलः कटुस्तीक्ष्णः सुगन्धिर्दीपनः परः ।
वातश्लेष्माऽरुचिघ्नश्च बालरक्षाकरः परः ॥ २१० ॥

( मं काइफल । कं गावटे । गो तेजबल । )

अथ विकण्टकनामगुणाः ।—

विकण्टको मृदुफली ग्रन्थिलः स्वादुकण्टकः ।
गोकण्टकः काकनाशो व्याघ्रपादो घनद्रुमः ॥ २११ ॥
गर्जाफलो घनफलो मेघस्तनितोद्भवश्च मुदिरफलः ।
प्रावृष्यो ह्रास्यफलः स्तनितफलः पञ्चदशसंज्ञः ॥ २१२ ॥
विकण्टकः कषायः स्यात् कटू रूक्षो रुचिप्रदः ।
दीपनः कफहारी च वस्त्ररङ्गविधायकः ॥ २१३ ॥

( मं हासी । कं मोलगु । )

अथ हरीतकीनामगुणाः ।— *

हरीतकी हैमवती जयाऽभया
शिवाऽव्यथा चेतनिका च रोहिणी ।
पथ्या प्रपथ्याऽपि च पूतनाऽमृता
जीवप्रिया जीवनिका भिषग्वरा ॥ २१४ ॥

"हरस्य भवने जाता हरिता च स्वभावतः ।
हरते सर्वरोगांश्च तेन प्रोक्ता हरीतकी ॥"

इति निरुक्तिः ।

जीवन्ती प्राणदा जीव्या कायस्था श्रेयसी च सा।
देवी दिव्या च विजया वह्निनेत्रमिताभिधा ॥ २१५ ॥ *
हरीतकी पञ्चरसा च रेचनी कोष्ठामयघ्नी लवणेन वर्जिता।
रसायनी नेत्ररुजापहारिणी त्वगामयघ्नी किल योगवाहिनी ॥२१६॥

अन्यच्च।—

बीजास्थितिक्ता मधुरा तदन्तस्त्वग्भागतः सा कटुरुष्णवीर्य्या।
मांसांशतस्त्वाम्लकषाययुक्ता हरीतकी पञ्चरसा स्मृतेयम् ॥ २१७ ॥

अथ हरीतकीभेदाः।—

हरीतक्यमृतोत्पन्ना सप्तभेदैरुदीरिता।
तस्या नामानि वर्णांश्च वक्ष्याम्यथ यथाक्रमम् ॥ २१८ ॥
विजया रोहिणी चैव पूतना चामृताऽभया।
जीवन्ती चेतकी चेति नाम्ना सप्तविधा मता ॥ २१९ ॥
अलावुनाभिर्विजया सुवृत्ता रोहिणी मता।
स्वल्पत्वक् पूतना ज्ञेया स्थूलमांसाऽमृता स्मृता ॥ २२० ॥
पञ्चास्रा चाभया ज्ञेया जीवन्ती स्वर्णवर्णभाक्।
त्र्यस्रान्तु चेतकीं विद्यादित्यासां रूपलक्षणम् ॥ २२१ ॥

विभिन्नहरीतकीनां प्रत्येकशो जन्मस्थानानि, तत्प्रभावाश्च।—

विन्ध्याद्रौ विजया हिमाचलभवा स्याच्चेतकी पूतना
सिन्धौ स्यादथ रोहिणी तु विजया जाता प्रतिष्ठानके।
चम्पायाममृताऽभया च जनिता देशे सुराष्ट्राह्वये
जीवन्तीति हरीतकी निगदिता सप्तप्रभेदा बुधैः ॥ २२२ ॥

---

* वह्निनेत्रमिताभिधाऽत्रयोविंशतिनामका।

सर्वप्रयोगे विजया च रोहिणी
क्षतेषु लेपेषु तु पूतनोदिता ।
विरेचने स्यादमृता गुणाधिका
जीवन्तिका स्यादिह जीर्णरोगजित् ॥ २२३ ॥
स्याच्चेतकी सर्वरुजापहारिका
नेत्रामयघ्नीमभयां वदन्ति ।
इत्थं यथायोगमियं प्रयोजिता
ज्ञेया गुणाढ्या न कदाचिदन्यथा ॥ २२४ ॥

चेतकी च धृता हस्ते यावत्तिष्ठति देहिनः ।
तावद्विरिच्यते वेगात्तत्प्रभावान्न संशयः ॥ २२५ ॥
सप्तानामपि जातीनां प्रधानं विजया स्मृता ।
सुखप्रयोगसुलभा सर्वव्याधिषु शस्यते ॥ २२६ ॥
क्षिप्ताऽप्सु निमज्जति या सा ज्ञेया गुणवती भिषग्वर्य्यैः ।
यस्या यस्या भूयो निमज्जनं सा गुणाढ्या स्यात् ॥ २२७ ॥
हरते प्रसभं व्याधीन् भूयस्तरति यद्वपुः ।
हरीतकी तु सा प्रोक्ता तत्र कीर्तिमिवाचकः ॥ २२८ ॥
हरीतकी तु तृष्णायां हनुस्तम्भे गलग्रहे ।
शोषे नवज्वरे जीर्णे गुर्विण्यां नैव शस्यते ॥ २२९ ॥

( मं हिरडा। कं अणिले। तें करकचेट्टु। उत्० हरिड़ा, करेड़ा।
दां कलुरा। तां करकै। हिं हरड़ा। गौ हत्तुकी। )

अथ विभीतकनामगुणाः ।—

विभीतकस्तैलफलो भूतावासः कलिद्रुमः ।
संवर्त्तकस्तु वासन्तः कलिवृक्षो वहेड़कः ॥ २३० ॥

हार्य्यः कर्षफलः कल्किर्धर्मघ्नोऽक्षोऽनिलघ्नकः ।
बहुवीर्य्यश्च कासघ्नः स प्रोक्तः षोड़शाह्वयः ॥ २३१ ॥
विभीतकः कटुस्तिक्तः कषायोष्णः कफापहः ।
चक्षुष्यः पलितघ्नश्च विपाके मधुरो लघुः ॥ २३२ ॥
( मं बेहाड़ा । कं तोड़े । तें ताण्ड्रेचेट्टु । तां तनि तण्डि, तोम्रण्डि ।
हिं बहेड़े, तिनास, भैरा । गौ बहेड़ा । )

अथ पूगवृक्षनामगुणाः ।—

पूगस्तु पूगवृक्षश्च क्रमुको दीर्घपादपः ।
वल्कतरुर्दृढ़वल्कश्चिक्कणश्च मुनिर्मतः ॥ २३३ ॥ *
पूगवृक्षस्य निर्य्यासो हिमः सम्मोहनो गुरुः ।
विपाके सोष्णकक्षारः साम्लो वातघ्नपित्तलः ॥ २३४ ॥
( मं पोफलाचावृक्ष, पोफल । कं अडकेयमरनु । उत्० गुया ।
गौ सुपारी । )

अथ पूगफलनाम ।—

पूगन्तु चिक्कणी चिक्का चिक्कणं श्लक्ष्णकं तथा ।
उद्वेगं क्रमुकफलं ज्ञेयं पूगफलं वसु ॥ २३५ ॥ †
( मं साधारणपोफल । कं अडकेयडिसक । )

अथ खैरीगुणाः ।—

खैरी च मधुरा रुच्या कषायाम्ला कटुस्तथा ।
पथ्या च कफवातघ्नी सारिका मुखदोषनुत् ॥ २३६ ॥
( मं खैरी । )

---

* मुनिः सप्तसङ्ख्याकः ।
† वसु अष्टाभिधम् ।

अथ तैल्वनगुणाः । ( तैल्वण ) ।—

तैल्वनं मधुरं रुच्यं कण्ठशुद्धिकरं लघु ।
त्रिदोषशमनं दीप्यं रसालं पाचनं समम् ॥ २३७ ॥

( मं नेल्लवत् । )

अथ गौल्यगुणाः ।—

गौल्यं गुहागरं श्लक्ष्णं कषायं कटु पाचनम् । *
विष्टम्भजठराध्मान-हरणं द्रावकं लघु ॥ २३८ ॥

( मं चिकणीसुपारी । गौ चिकिसुपारि । )

अथ घोण्टागुणाः ।—

घोण्टा कटुकषायोष्णा कठिना रुचिकारिणी ।
मलविष्टम्भशमनी पित्तह्रद्दीपनी च सा ॥ २३९ ॥

( मं घोण्टपोफल । कं घोण्ट अडके । )

अथ पूगीफलगुणाः ।—

पूगीफलं चेंडलसंज्ञकं यत्तत्कोङ्कणेषु प्रथितं सुगन्धि ।
श्लेष्मापहं दीपनपाचनञ्च बलप्रदं पुष्टिकरं रसाढ्यम् ॥ २४० ॥

( मं चेंडल । कं चेंडले । )

अथ वल्लिगुलगुणाः ।—

यत्कोङ्कणे वल्लिगुलाभिधानकं ग्रामोद्भवं पूगफलं त्रिदोषनुत् ।
आमापहं रोचनरुच्यपाचनं विष्टम्भतुन्दामयहारि दीपनम् ॥२४१॥

( मं वल्लगुलपोफलें । कं वल्लगुलदडके । )

---

* गुहागरमिति गुहागरदेशसम्भूतमित्यर्थः । अनितृणो रूपमिदं साधनीयम् ।

अथ चन्द्रापुरोद्भवपूगगुणाः ।—

चन्द्रापुरोद्भवं पूगं कफघ्नं मलशोधनम् ।
कटु स्वादु कषायं च रुच्यं दीपनपाचनम् ॥ २४२ ॥

( मं चन्द्रापुरपोफल । कं चन्द्रापुरदडके । )

अथ आन्ध्रदेशोद्भवपूगगुणाः ।—

आन्ध्रदेशोद्भवं पूगं कषायं मधुरं रसे ।
वातजिद्वक्त्रजाड्यघ्नमीषदम्लं कफापहम् ॥ २४३ ॥

( मं चोलीपोफल । कं चोलिय अडके । )

अथ पूगफलविशेषगुणाः ।—

पूगं सम्मोहकृत्सर्वं कषायं स्वादु रेचनम् ।
त्रिदोषशमनं रुच्यं वक्त्रक्लेदमलापहम् ॥ २४४ ॥

( मं साधारणपोफला । )

अथ शुष्काशुष्कतो विभिन्नावस्थतया पूगस्य विशेषगुणाः ।—

आमं पूगं कषायं मुखमलशमनं कण्ठशुद्धिं विधत्ते
रक्तामश्लेष्मपित्तप्रशमनमुदराध्मानहारं सरञ्च ।
शुष्कं कण्ठामयघ्नं रुचिकरमुदितं पाचनं रेचनं स्यात्
तत्पर्णेनायुतं चेत् झटिति वितनुते पाण्डुवातञ्च शोषम् ॥२४५॥

अथ नागवल्लीनामगुणाः ।—

अथ भवति नागवल्ली ताम्बूली फणिलता च सप्तशिरा ।
पर्णलता फणिवल्ली भुजगलता भक्ष्यपत्री च ॥ २४६ ॥
नागवल्ली कटुस्तीक्ष्णा, तिक्ता पीनसवातजित् ।
कफकासहरा रुच्या दाहकृद्दीपनी परा ॥ २४७ ॥

( मं साधारणपर्णं । तें तामलपाकु । तां वेट्रिली । वम्० नागवेल ।
चिं, गौ, पान । )

अथ नागवल्लीभेदादिः ।—

सा श्रीवाट्यम्लादिवाटादिनाना-
ग्रामस्तोमस्थानभेदाद्विभिन्ना ।
एकाऽप्येषा देशमृत्स्नाविशेषा-
न्नानाकारं याति कार्ये गुणे च ॥ २४८ ॥

अथ श्रीवाटीगुणाः ।—

श्रीवाटी मधुरा तीक्ष्णा वातपित्तकफापहा ।
रसाढ्या सुरसा रुच्या विपाके शिशिरा स्मृता ॥ २४९ ॥

( मं सिरिवाडीपान । कं सिरिवाडिलि । )

अथ अम्लवाटीगुणाः ।—

स्यादम्लवाटी कटुकाम्लतिक्ता तीक्ष्णा तथोष्णा मुखपाककर्त्री ।
विदाहपित्तास्रविकोपनी च विष्टम्भदा वातनिवर्हणी च ॥२५०॥

( मं अम्बाडे पर्णं । )

अथ सतसागुणाः । ( सातसौ ) ।—

सतसा मधुरा तीक्ष्णा कटुरुष्णा च पाचनी ।
गुल्मोदराध्मानहरा रुचिकृद्दीपनी परा ॥ २५१ ॥

( मं सातसौपर्णम् । )

अथ सप्तशिरागुणाः । ( सदाशिरा ) ।—

गुहागरे सप्तशिरा प्रसिद्धा सापर्वजूर्णाऽतिरसाऽतिरुच्या ।

सुगन्धि तीक्ष्णा मधुराऽतिहृद्या सन्दीपनी पुंस्त्वकराऽतिबल्या
॥ २५२ ॥

( मं अडगरपर्णं । )

अथ अम्लसरागुणाः।—

नाम्नाऽन्याऽम्लसरा सुतीक्ष्णमधुरा रुच्या हिमा दाहनुत्
पित्तोद्रेकहरा सुदीपनकरी बल्या मुखामोदिनी।
स्त्रीसौभाग्यविवर्द्धनी मदकरी राज्ञां सदा वल्लभा
गुल्माध्मानविबन्धजिच्च कथिता सा मालवे तु स्थिता ॥२५३॥

( मालवे अङ्गरापर्णं इति प्रसिद्धम् । )

अथ पटुलिकागुणाः।—

अन्ध्रे पटुलिका नाम कषायोष्णा कटुस्तथा।
मलापकर्षा कण्ठस्य पित्तकृद्वातनाशनी ॥ २५४ ॥

( अन्धदेशे पोट्टुकुलिपर्णं इति प्रसिद्धम् । )

अथ ह्रेसणीयागुणाः।—

ह्रेसणीया कटुस्तीक्ष्णा हृद्या दीर्घदला च सा।
कफवातहरा रुच्या कटुर्दीपनपाचनी ॥ २५५ ॥

( घोरसमुद्रदेशपर्णम् । )

अथ ताम्बूलस्य विशेषगुणाः।—

सद्यस्त्रोटितभक्षितं मुखरुजाजाड्यावहं दोषकृत्
दाहारोचकरक्तदायि मलकृद्विष्टम्भि वान्तिप्रदम्।
यद्भूयो जलपानपोषितरसं तच्चेच्चिरात् त्रोटितं
ताम्बूलीदलमुत्तमञ्च रुचिकृद्वर्ण्यं त्रिदोषार्त्तिनुत् ॥२५६॥

( मं नवेक्नुनें पार्नाचेगुण । कं होसयलेयेलेयगुण । )

अथ कृष्णशुभ्रपर्णगुणाः ।—

कृष्णं पर्णं तिक्तमुष्णं कषायं धत्ते दाहं वक्त्रजाड्यं मलञ्च ।
शुभ्रं पर्णं श्लेष्मवातामयघ्नं पथ्यं रुच्यं दीपनं पाचनञ्च ॥२५७॥

अथ पर्णशिरा-शीर्णताम्बूलयोर्गुणाः ।—

शिरा पर्णस्य शैथिल्यं कुर्य्यात्तस्यास्तु तद्रसः ।
शीर्णं त्वग्दोषदं तस्य भक्षिते च शितं सदा ॥ २५८ ॥

विना ताम्बूलं पूगभक्षणदोषाः ।—

अनिधाय मुखे पर्णं पूगं खादात यो नरः ।
मतिभ्रंशो दरिद्रः स्यादन्ते स्मरति नो हरिम् ॥ २५९ ॥

अथ ताम्बूलवीटिकायाः कल्पनाभेदेन गुणभेदाः ।—

पर्णाधिक्ये दीपनी रङ्गदात्री पूगाधिक्ये रूक्षदा कृच्छ्रदात्री ।
साराधिक्ये खादिरे शोषदात्री चूर्णाधिक्ये पित्तकृत्पूतिगन्धा ॥२६०॥

अथ चूर्णगुणाः ।—

चूर्णं चार्ज्जुनवृक्षजं कफहरं गुल्मघ्नमर्काह्वयं
शोफघ्नं कुटजं करञ्जजनितं वातापहं रुच्यदम् ।
पित्तघ्नं जलजं बलाग्निरुचिदं शैलाह्वयं पित्तदं *
स्फाटिक्यं दृढ़दन्तपंक्तिजननं शुक्त्यादिजं रूक्षदम् ॥ २६१ ॥

( मं चूना। कं चूर्णा। गौ चूण। )

इत्थं नानाफलतरुलतानामतत्तद्गुणादि-
व्यक्ताख्यानप्रगुणरचनाचारुसौरभ्यसारम् ।

---

* जलजं मौक्तिकम् ।

वर्गं वक्त्राम्बुरुहवलभीलास्यलीलारसालं
विद्यावैद्यः खलु सफलयेदेतमाम्नायभूम्ना ॥ २६२ ॥ *
यान्युपभुञ्जानानां स भवति संसारपादपः सफलः।
तेषामेष फलानां वर्गः फलवर्ग इति कथितः ॥२६३॥ †
यस्याजस्रविकस्वरामलयशःप्राग्भारपुष्पोद्गमः
साश्चर्यं विबुधेप्सितानि फलति श्रीमान् करः स्वर्द्रुमः।

* इदानीं वर्गमुपसंहरति इत्थमित्यादित्रिभिः श्लोकैः। विद्या-वैद्यः (कर्त्तृपदम्) विद्यया वैद्यः न तु नामतः इति भावः। इत्थम् अनेन प्रकारेण नाना विविधाः याः तरुफललताः तासां नामानि ते ते पूर्वोक्ता गुणादयः गुणप्रकाराश्च (आदिशब्दस्यात्र प्रकारवाचित्वं ज्ञेयम्) तेषां व्यक्ताख्यानानि स्फुटवचनानि तैः या प्रगुणरचना सन्नि-वेशप्रकृष्टता सैव चारुः मनोहरः सौरभ्यसारः परिमलोत्कर्षः यस्य तथाभूतम्। पुनः, वक्त्राम्बुरुहं मुखपद्ममेव वलभी प्रासादाग्रस्थितं गृहं तत्र या लास्यलीला नृत्यविलासः तस्यै रसालं चूतवृक्षं (मुखशोभा-संवर्द्धकतयैवमुक्तं) एतं वर्गम् आम्नायभूम्ना अभ्यासबाहुल्येन सफलयेत् सफलं कुर्यात्। (प्रार्थनायामपि लिङ् दृश्यते)।

† यानीत्यादि।—यानि फलानि उपभुञ्जानानां स्वादयतां नराणां स प्रसिद्धः संसारपादपः संसारवृक्षः सफलः चरितार्थो भवति ; चिति-मधिवसतामेतेषां फलानामुपभोग एव जीवनसाफल्यम् इति भावः ; तेषां फलानामेष वर्गः फलवर्ग इति नाम्ना कथितः उक्तः, मया इति शेषः।

तस्यायं कवितुः कृतौ नरहरेराम्रादिको यो
वर्गः स्वर्गसभाभिषग्भिरभिधाचूड़ामणावीरितः ॥२६४॥ *

इति श्रीनरहरिपण्डितविरचिते निघण्टुराजापरनाम्नि
श्रीमदभिधानचूड़ामणौ फलवर्गापराख्यो-
ऽयमाम्रादिवर्ग एकादशः ।

— - ०*० ——

## अथ चन्दनादिवर्गः ।

श्रीखण्डं शबरं पीतं पत्राङ्गं रक्तचन्दनम् ।
बर्बरं हरिगन्धश्च चन्दनं सप्तधा स्मृतम् ॥ १ ॥
देवदारु द्विधा प्रोक्तं चोड़ा सप्तच्छदस्तथा ।
सरलः कुङ्कुमं कङ्गुः कस्तूरी रोचना तथा ॥ २ ॥
कर्पूरी स्याज्जवादिस्तु नन्दी च जातिपत्रिका ।
जातीफलञ्च कक्कोलं लवङ्गं स्वादुरुच्यते ॥ ३ ॥

* यस्येत्यादि ।—यस्य नरहरिकवेरित्यर्थः, अजस्रं निरन्तरं विकस्वराणि प्रस्फुटितानि अमलानि यशांसि एव प्राग्भारः उत्कृष्टः पुष्पोद्गमः कुसुमप्रवृत्तिर्यस्य तथाभूतः श्रीमान् श्रीयुक्तः स्वर्द्रुमः कल्पपादपः एव कं रः विबुधानामीप्सितानि अभिलषितानि ( अत्र भावे क्तः ) साश्चर्य्यं रचितस्मयं यथा तथा फलति, तस्य कवितुः पण्डितस्य कृतौ निर्मितौ अभिधानां चूड़ामणौ स्वर्गसभाभिषग्भिः स्वर्वैद्यैः अश्विनीकुमारप्रभृतिभिः ईरितः कथितः अयम् आम्रादिः एकादशः वर्गः, समाप्तिं गत इति शेषः ।

अगर्व्यश्च त्रिधा मांसी तुरुष्को गुग्गुलुस्त्रिधा ।
रालः कुन्दुरकः कुष्ठं सारिवा तु द्विधा नखी ॥ ४ ॥
स्पृक्का स्थौणेयकं चैव मुरा शैलेयचोरकः ।
पद्मप्रपौण्डरीके च लामज्जं रोहिणी द्विधा ।
श्रीवेष्टोशीरनलिका मुनिबाणमिताह्वयाः ॥ ५ ॥

अथ श्रीखण्डनामगुणाः ।—

श्रीखण्डं चन्दनं प्रोक्तं महार्हं श्वेतचन्दनम् ।
गोशीर्षं तिलपर्णञ्च मङ्गल्यं मलयोद्भवम् ॥ ६ ॥
गन्धराजं सुगन्धञ्च सर्पावासञ्च शीतलम् ।
गन्धाढ्यं गन्धसारञ्च भद्रश्रीर्भोगिवल्लभम् ।
शीतगन्धो मलयजं पावनश्चाङ्कभूह्वयम् ॥ ७ ॥ *
श्रीखण्डं कटुतिक्तशीतलगुणं स्वादे कषायं कियत्
पित्तभ्रान्तिवमिज्वरक्रिमितृषासन्तापशान्तिप्रदम् ।
वृष्यं वक्त्ररुजापहं प्रतनुते कान्तिं तनोर्देहिनां
लिप्तं सुप्तमनोजसिन्धुरमदारम्भादिसंरम्भदम् ॥ ८ ॥
श्रेष्ठं कोटरकर्परोपकलितं सुग्रन्थि सद्गौरवं
छेदे रक्तमयं तथा च विमलं पीतञ्च यद्घर्षणे ।
स्वादे तिक्तकटुः सुगन्धबहुलं शीतं यदल्पं गुणे
क्षीणस्वार्धगुणान्वितं तु कथितं तच्चन्दनं मध्यमम् ॥ ९ ॥
( मं साधारणश्रीखण्ड । कं श्रीगन्ध । गौ सादाचन्दन । )

---

* अङ्कभूह्वयम् एकोनविंशतिसंज्ञकं ।

अन्यच्च।—

चन्दनं द्विविधं प्रोक्तं बेट्टसुक्कड़िसंज्ञकम्।
बेट्टं तु सार्द्रविच्छेदं स्वयं शुष्कं तु सुक्कड़ि॥ १०॥

अथ बेट्टचन्दननामकारणं, तद्गुणाश्च।—

मलयाद्रिसमीपस्थाः पर्वता बेट्टसंज्ञकाः।
तज्जातं चन्दनं यत्तु बेट्टाख्यं क्वचिन्मतं॥ ११॥
बेट्टचन्दनमतीव शीतलं दाहपित्तशमनं ज्वरापहम्।
छर्दिमोहतृषिकुष्ठतैमिरोत्कासरक्तशमनं च तिक्तकम्॥ १२॥
( मं बेट्टश्रीखण्ड। कं बेट्टपञ्चेगन्ध। )

अथ सुक्कड़िचन्दनगुणाः।—

सुक्कड़िचन्दनं तिक्तं कृच्छ्रपित्तास्रदाहनुत्।
शैत्यसुगन्धदं चार्द्रं शुष्कं लेपे तदन्यथा॥ १३॥
( मं सुक्कड़िगन्ध। )

अथ कैरातनामगुणाः। ( शबर )।—

नातिपीतं कैरातं शबरश्चन्दनं सुगन्धम्।
वन्यश्च गन्धकाष्ठं किरातकान्तश्च शैलगन्धं च॥ १४॥
कैरातमुष्णं कटुशीतलञ्च श्लेष्मानिलघ्नं श्रमपित्तहारि।
विस्फोटपामादिकनाशनञ्च तृषापहं तापविमोहनाशि॥ १५॥
( शबरचन्दनं इति कोङ्कणे प्रसिद्धम्। )

अथ पीतनामगुणाः।—

पीतगन्धं तु कालीयं पीतकं माधवप्रियम्।
कालीयकं पीतकाष्ठं बर्बरं पीतचन्दनम्॥ १६॥

पीतञ्च शीतलं तिक्तं कुष्ठश्लेष्मानिलापहम्।
कण्डूविचर्च्चिकादद्रु-क्रिमिहृत्कान्तिदं परम्॥ १७॥
(पीतचन्दन इति होसपादेशे प्रसिद्धम्। कलम्बक इति
द्राविड़देशे प्रसिद्धम्।)

अथ पत्राङ्गनामगुणाः।—

पत्तङ्गञ्चैव पत्राङ्गं रक्तकाष्ठं सुरङ्गदम्।
पत्राढ्यं पट्टरागञ्च भार्य्यावृक्षश्च रक्तकः॥ १८॥
लोहितं रङ्गकाष्ठञ्च रागकाष्ठं कुचन्दनम्।
पट्टरञ्जनकञ्चैव सुरङ्गञ्च चतुर्दश॥ १९॥
पत्राङ्गं कटुकं रूक्षमम्लं शीतं तु गौल्यकम्।
वातपित्तज्वरघ्नञ्च विस्फोटोन्मादभूतहृत्॥ २०॥
(मं पतङ्ग। तें चेवमनु। हिं,बम्०, पत्तङ्। गौ बकम्, रोहन।)

अथ रक्तचन्दननामगुणाः।—

रक्तचन्दनमिदञ्च लोहितं शोणितञ्च हरिचन्दनं हिमम्।
रक्तसारमथ ताम्रसारकं क्षुद्रचन्दनमथार्कचन्दनम्॥ २१॥
रक्तचन्दनमतीव शीतलं तिक्तमोक्षणगदास्रदोषनुत्।
भूतपित्तकफकासस्ज्वरभ्रान्तिजन्तुवमिजित्तृषापहम्॥ २२॥
(मं रक्तचन्दन। तें एर्रगन्धपुचेक्क। तां सेनृशाण्डनम्। सण्डले
सुर्ख इति पारस्यदेशीयभाषा। सण्डले अह्मर इति
आरवदेशे प्रसिद्धम्। दां, हिं, लालचन्दन।
गौ रक्तचन्दन।)

अथ बर्बरनामगुणाः।—

बर्बरीत्थं बर्बरकं श्वेतबर्बरकं तथा।

शीतं सुगन्धि पित्तारि सुरभि चेति सप्तधा ॥ २३ ॥
बर्बरं शीतलं तिक्तं कफमारुतपित्तजित् ।
कुष्ठकण्डूव्रणान् हन्ति विशेषाद्रक्तदोषजित् ॥ २४ ॥
( मं बर्बगन्ध । )

अथ हरिचन्दननामगुणाः ।—

हरिचन्दनं सुरार्हं हरिगन्धामृतचन्दनं दिव्यम् ।
दिविजञ्च महागन्धं नन्दनजं लोहितञ्च नवसंज्ञम् ॥ २५ ॥
हरिचन्दनं तु दिव्यं तिक्तहिमं तदिह दुर्लभं मनुजैः ।
पित्ताटोपविलोपि चन्दनवच्छ्रमशोषमान्द्यतापहरम् ॥ २६ ॥
( हरिचन्दन इति कोङ्कणे प्रसिद्धम् । गौ सारचन्दन । )

अथ चन्दनसामान्यगुणाः ।—

चन्दनानि समानानि रसतो वीर्य्यतस्तथा ।
भिद्यन्ते किन्तु गन्धेन तत्राद्यं गुणवत्तरम् ॥ २७ ॥

अथ देवदारुनामगुणाः ।—

देवदारु सुरदारु दारुकं स्निग्धदारुरमरादिदारु च ।
भद्रदारु शिवदारु शाम्भवं भूतहारि भवदारु रुद्रवत् ॥२८॥
स्निग्धदारु स्मृतं तिक्तं स्निग्धोष्णं श्लेष्मवातजित् ।
आमदोषविबन्धार्शः-प्रमेहज्वरनाशनम् ॥ २९ ॥
( मं चोपडादेवदारु । हिं देवदार । गौ देवदारु । )

अथ देवकाष्ठनामगुणाः ।—

देवकाष्ठं पूतिकाष्ठं भद्रकाष्ठं सुकाष्ठकम् ।
अस्निग्धदारुकञ्चैव काष्ठदारु षडाह्वयम् ॥ ३० ॥
देवकाष्ठन्तु तिक्तोष्णं रूक्षं श्लेष्मानिलापहम् ।

भूतदोषापहं धत्ते लिप्तमङ्गेषु कालिकम् ॥ ३१ ॥

( मं, कं, काष्ठदेवदारु । )

देवदारु द्विधा ज्ञेयं तत्राद्यं स्निग्धदारुकम् ।
द्वितीयं काष्ठदारु स्यादृद्वयोर्नामान्यभेदतः ॥ ३२ ॥

अथ चीड़ानामगुणाः ।—

चीड़ा च दारुगन्धा गन्धवधूर्गन्धमादनी तरुणी ।
तारा च भूतमारी मङ्गल्या तु कपाटिनी ग्रहभीतिजित् ॥३३॥

चीड़ा कटूष्णा कासघ्नी कफजिद्दीपनी परा ।
अत्यन्तसेविता सा तु पित्तदोषभ्रमापहा ॥ ३४ ॥

( मं चीडादेवदारु । )

अथ सप्तपर्णनामगुणाः ।—

सप्तपर्णः पत्रवर्णः शुक्तिपर्णः सुपर्णकः ।
सप्तच्छदो गुच्छपुष्पोऽयुग्मपर्णो मुनिच्छदः ॥ २५ ॥
बृहत्त्वग्बहुपर्णश्च तथा शाल्मलिपत्रकः ।
मदगन्धो गन्धिपर्णो विज्ञेयो वह्निभूमितः ॥ २६ ॥ *

सप्तपर्णस्तु तिक्तोष्णस्त्रिदोषघ्नश्च दीपनः ।
मदगन्धो निरुन्धेऽयं व्रणरक्तामयक्रिमीन् ॥ २७ ॥

( मं सातवणा । कं एलिलग । तें एडाकुल, अरिटाकु । बम० छातिम । हिं छातियान् । गौ छातिम । )

अथ सरलनामगुणाः ।—

सरलस्तु पूतिकाष्ठं तुम्बी पीतद्रुरुदितो दीपतरुः ।
स स्निग्धदारुसंज्ञः स्निग्धो मारीचपत्रको नवधा ॥ २८ ॥

---

* वह्निभूमितः त्रयोदशसंज्ञकः ।

सरलः कटुतिक्तोष्णः कफवातविनाशनः ।
त्वग्दोषशोफकण्डूति-व्रणघ्नः कोष्ठशुद्धिदः ॥ ३९ ॥
( मं, वम्, सुरुचेभाडु । तें गरिके, देवदारिचेट्टु । तां सरल-
देवदारौ । दां चिर् । हिं चिरकापेड़, सरल,
धूपसरल । गौ सरल । )

अथ कुङ्कुमनामगुणाः ।—

ज्ञेयं कुङ्कुममग्निशेखरमसृक्काश्मीरजं पीतकं
काश्मीरं रुधिरं वरञ्च पिशुनं रक्तं शठं शोणितम् ।
बाह्लीकं घुसृणं वरेण्यमरुणं कालेयकं जागुड़ं
कान्तं वह्निशिखञ्च केसरवरं गौरं कराचीरितम् ॥ ४०
कुङ्कुमं सुरभि तिक्तकटूष्णं कासवातकफकण्ठरुजाघ्नम् ।
मूर्धशूलविषदोषनाशनं रोचनञ्च तनुकान्तिकारकम् ॥ ४१
( मं कुङ्कुमकेसर । तें कुङ्कुम । हिं जाफरान् । गौ कुङ्कुम । )

अथ तृणकुङ्कुमनामगुणाः ।—

तृणकुङ्कुमं तृणास्रं गन्धितृणं शोणितञ्च तृणपुष्पम् ।
गन्धाधिकं तृणोत्थं तृणगौरं लोहितं च नवसंज्ञम् ॥ ४२ ॥
तृणकुङ्कुमं कटूष्णं कफमारुतशोफनुत् ।
कण्डूतिपामाकुष्ठाम-दोषघ्नं भास्करं परम् ॥ ४३ ॥
( तृणकुङ्कुम इति काश्मीरे प्रसिद्धम् । मं तृणकेशर ।
गौ कुङ्कुमघास । )

अथ प्रियङ्गुनामगुणाः ।—

प्रियङ्गुः फलिनी श्यामा प्रियवल्ली फलप्रिया ।

* कराचीरितं द्वाविंशत्याख्यं कथितम् ।

गौरी गोवन्दनी वृत्ता कारम्भा कङ्गु कङ्गुनी ॥ ४४ ॥
भङ्गुरा गौरवल्ली च सुभगा पर्णभेदिनी ।
शुभा पीता च मङ्गल्या श्रेयसी चाङ्कभूमिता ॥ ४५ ॥ *
प्रियङ्गुः शीतला तिक्ता दाहपित्तास्रदोषजित् ।
वान्तिभ्रान्तिज्वरहरा वक्त्रजाड्यविनाशनी ॥ ४६ ॥
( मं प्रियङ्गु । कं नेर्पिलगु । तें प्रेंकणपुचेट्टु । वम्० गन्धुला । हिं प्रियङ्ग । गौ प्रियङ्गु । )

अथ कस्तूरीनामगुणाः ।—

कस्तूरी मृगनाभिस्तु मदनी गन्धचेलिका ।
वेधमुख्या च मार्जारी सुभगा बहुगन्धदा ॥ ४७ ॥
सहस्रवेधी श्यामा स्यात्कामानन्दा मृगाण्डजा ।
कुरङ्गनाभी ललिता मदो मृगमदस्तथा ।
श्यामली काममोदी च विज्ञेयाऽष्टादशाह्वया ॥ ४८ ॥
कस्तूरी सुरभिस्तिक्ता चक्षुष्या मुखरोगजित् ।
किलासकफदौर्गन्ध्य-वातालक्ष्मीमलापहा ॥ ४९ ॥
( मं कस्तूर । तें कस्तुरिपिल्लि । हिं कस्तूरी । गो मृगनाभि । )

अथ कस्तूरीभेदाः ।—

कपिला पिङ्गला कृष्णा कस्तूरी त्रिविधा क्रमात् ।
नेपालेऽपि च काश्मीरे कामरूपे च जायते ॥ ५० ॥
साऽप्येका खरिका ततश्च तिलका ज्ञेया कुलित्थाऽपरा
पिण्डाऽन्याऽपि च नायिकेति च परा या पञ्चभेदाभिधा ।

---

* अङ्कभूमिता एकोनविंशतिसंख्यका ।

सा शुष्का मृगनाभितः क्रमवशादेषा क्षितौ शोचिता
पश्चात्यादिदिनत्रयेषु जनिता कस्तूरिका स्तूयते ॥ ५१ ॥

चूर्णाकृतिस्तु खरिका तिलका तिलाभा
कौलत्थबीजसदृशो च कुलित्थका च ।
स्थूला ततः कियदियं किल पिण्डिकाख्या
तस्याश्च किञ्चिदधिका यदि नायिका सा ॥ ५२ ॥

अथ कस्तूरीपरीक्षा ।—

स्वादे तिक्ता पिञ्जरा केतकीनां गन्धं धत्ते लाघवं तोलने च ।
याऽप्सु न्यस्ता नैव वैवर्ण्यमीयात्कस्तूरी सा राजभोग्या प्रशस्ता ॥५३

अपि च ।—

या गन्धं केतकीनामपहरति मदं सिन्धुराणाञ्च वर्णं
स्वादे तिक्ता कटुर्वा लघुरथ तुलिता मर्दिता चिक्कणा स्यात् ।
दाहं या नैति वह्नौ शिमिशिमिति चिरं चर्मगन्धा हुताशे
सा कस्तूरी प्रशस्ता वरमृगतनुजा राजते राजभोग्या ॥ ५४ ॥

अन्यच्च ।—

बाले जरति च हरिणे क्षीणे रोगिणि च मन्दगन्धयुता ।
कामातुरे च तरुणे कस्तूरी बहुलपरिमला भवति ॥ ५५ ॥

अथ कृत्रिमकस्तूरीलक्षणम् ।—

या स्निग्धा धूमगन्धा वहति विनिहिता पीततां पाथसोऽन्त-
र्भिःशेषं या निविष्टा भवति हुतवहे भस्मसादेव सद्यः ।
या च न्यस्ता तुलायां कलयति गुरुतां मर्दिता रूक्षताञ्च
ज्ञेया कस्तूरिकेयं खलु कृतमतिभिः कृत्रिमा नैव सेव्या ॥५६॥

( इति कारीणकस्तूरीलक्षणम् । )

अथ कस्तूरीप्रशंसा।—

शुद्धो वा मलिनोऽस्तु वा मृगमदः किं जातमेतावता
कोऽप्यस्यानवधिस्त्वमत्कृतिनिधिः सौरभ्यमेको गुणः।
येनासौ स्मरमण्डनैकवसतिर्भाले कपोले गले
दोर्मूले कुचमण्डले च कुरुते सङ्गं कुरङ्गीदृशाम् ॥५७॥

अथ गोरोचनानामगुणाः।—

गोरोचना रुचिः शोभा रुचिरा शोभना शुभा।
गौरी च रोचना पिङ्गा मङ्गल्या पिङ्गला शिवा ॥ ५८ ॥
पीता च गौतमी गव्या वन्दनीया च काञ्चनी।
मेध्या मनोरमा श्यामा रामा भूमिकराह्वया ॥ ५९ ॥ *

गोरोचना च शिशिरा विषदोषहन्त्री
रुच्या च पाचनकरी क्रिमिकुष्ठहन्त्री।
भूतग्रहोपशमनं कुरुते च पथ्या
शृङ्गारमङ्गलकरी जनमोहिनी च ॥ ६० ॥

( बं गोरोचन। गो गारोचना। )

अथ कर्पूरनाम।—

कर्पूरो घनसारकः सितकरः शीतः शशाङ्कः शिला
शीतांशुर्हिमबालुका हिमकरः शीतप्रभः शाम्भवः।
शुभ्रांशुः स्फटिकाभ्रसारमिहिकातारात्र्चन्द्रेन्दव-
श्चन्द्रालोकतुषारगौरकुमुदान्येकादशाह्वा हिमः ॥ ६१ ॥

( बं कर्पूरमु। हिं कापुर। गो कर्पूर। )

---

* भूमिकराह्वया एकविंशतिसंज्ञका।

अथ कर्पूरभेदाः, तद्गुणाश्च ।—

पोतासो भीमसेनस्तदनु सितकरः शङ्करावाससंज्ञः
प्रांशुः पिञ्जोऽब्दसारस्तदनु हिमयुता बालुका जूटिका च ।
पश्चादस्यास्तुषारस्तदुपरि सहिमः शीतलः पक्किकाऽन्या
कर्पूरस्येति भेदा गुणरसमहसां वैद्यदृश्येन दृश्याः ॥ ६२ ॥
कर्पूरो नूतनस्तिक्तः स्निग्धश्चोष्णोऽस्रदाहदः ।
चिरस्थो दाहदोषघ्नः स धौतः शुभकृत्परः ॥ ६३ ॥

अथ कर्पूरलक्षणानि ।—

शिरो मध्यं तलं चेति कर्पूरस्त्रिविधः स्मृतः ।
शिरः स्तम्भाग्रसञ्जातं मध्यं पर्णतले तलम् ॥ ६४ ॥
भास्वद्विशदपुलकं शिरोजातं तु मध्यमम् ।
सामान्यपुलकं स्वच्छं तले चूर्णं तु गौरकम् ॥ ६५ ॥
स्तम्भगर्भस्थितं श्रेष्ठं स्तम्भबाह्ये च मध्यमम् ।
स्वच्छमीषत् हरिद्राभं शुभ्रं तन्मध्यमं स्मृतम् ।
सुदृढ़ं शुभ्ररूक्षं च पुलकं बाह्यजं वदेत् ॥ ६६ ॥

अपि च ।—

स्वच्छं भृङ्गारपत्रं लघुतरविशदं तोलने तिक्तकञ्चेत्
स्वादे शैत्यं सुहृद्यं बहलपरिमलामोदसौरभ्यदायि ।
निःस्नेहं दार्ढ्यपत्रं शुभतरमिति चेत् राजयोग्यं प्रशस्तं
कर्पूरं चान्यथा चेद्बहुतरमशनं स्फोटदायि व्रणाय ॥ ६७ ॥

( तैं कर्पूरपोतासु )।

अथ चीनकनामगुणाः। ( कर्पूरविशेषः ) ।—

चीनकश्चीनकर्पूरः कृत्रिमो धवलः पटुः।
मेघसारस्तुषारश्च द्वीपकर्पूरजः स्मृतः॥ ६८ ॥
चीनकः कटुतिक्तोष्ण ईषच्छीतः कफापहः।
कण्ठदोषहरो मेध्यः पाचनः क्रिमिनाशनः॥ ६९ ॥

( गो चीनेर कर्पूर। )

अथ जवादिनामगुणाः।—

जवादि गन्धराजं स्यात् कृत्रिमं मृगचर्मजम्।
समूहगन्धं गन्धाढ्यं स्निग्धं सास्त्राणिकर्दमम्।
सुगन्धं तैलनिर्य्यासं कुटामोदं दशाभिधम्॥ ७० ॥
सौगन्धिकं जवादि स्यात् स्निग्धञ्चोष्णं सुखावहम्।
वाते हितं च राज्ञाञ्च मोहनाह्लादकारणम्॥ ७१ ॥

( मं जवादीकस्तूरी। गो खाटाशी। )

अथ जवादिलक्षणम्।—

जवादि नीलं सस्निग्धमीषत्पीतं सुगन्धदम्।
आतपे बहुलामोदं राज्ञां योग्यं न चान्यथा॥ ७२ ॥

अथ तूणीनामगुणाः।—

तूणीकस्तूणिकस्तूणी पीतकः कच्छपस्तथा।
नन्दी कुठेरकः कान्तो नन्दीवृक्षो नवाह्वयः॥ ७३ ॥
नन्दीवृक्षः कटुस्तिक्तः शीतस्तिक्तास्रदाहजित्।
शिरोऽर्त्तिश्वेतकुष्ठघ्नः सुगन्धिः पुष्टिवीर्य्यदः॥ ७४ ॥

( नन्दीवृक्ष इति कोङ्कणे प्रसिद्धः। तें वड्डिचेट्टु। हिं वेलिया-पिपर। गो तूणगाछ। )

अथ जातीपत्रीनामगुणाः ।—

जातीपत्री जातिकोशः सुमनःपत्रिकाऽपि सा ।
मालतीपत्रिका पञ्च-नाम्नी सौमनसायिनी ॥ ७५ ॥
जातीपत्री कटुस्तिक्ता सुरभिः कफनाशनी ।
वक्त्रवैशद्यजननी जाड्यदोषनिकृन्तनी ॥ ७६ ॥
( मं जायपत्री । कं जाइपत्री । हिं जावत्री । गौ जैत्री । )

अथ जातीफलनामगुणाः ।—

जातीफलं जातिशस्यं शालूकं मालतीफलम् ।
मज्जासारं जातिसारं पुटं च सुमनःफलम् ॥ ७७ ॥
जातीफलं कषायोष्णं कटु कण्ठामयार्त्तिजित् ।
वातातिसारमेहघ्नं लघु वृष्यं च दीपनम् ॥ ७८ ॥
( मं जाइफल । गौ जायफल । )

अथ कक्कोलनामगुणाः । ( कङ्कोल ) ।—

कक्कोलकं कृतफलं कोलकं कटुकं फलम् ।
विदेश्यं स्थूलमरिचं कर्कोलं माधवोचितम् ।
कङ्कोलं कट्फलं प्रोक्तं मारीचं रुद्रसम्मितम् ॥ ७९ ॥
कक्कोलं कटु तिक्तोष्णं वक्त्रजाड्यहरं परम् ।
दीपनं पाचनं रुच्यं कफवातनिकृन्तनम् ॥ ८० ॥
( मं कङ्कोल । गौ काँकला । )

अथ लवङ्गनामगुणाः ।—

लवङ्गकलिका दिव्यं लवङ्गं शेखरं लवम् ।

रुद्रसम्मितम् एकादशाभिधम् ।

शीपुष्पं देवकुसुमं रुचिरं वारिसम्भवम् ॥ ८१ ॥
तीक्ष्णपुष्पं तु शृङ्गारं गीर्वाणकुसुमं तथा ।
पुष्पकं चन्दनादि स्यात् ज्ञेयं त्रयोदशाह्वयम् ॥ ८२ ॥
लवङ्गं शीतलं तिक्तं चक्षुष्यं भक्तरोचनम् ।
वातपित्तकफघ्नञ्च तीक्ष्णं मूर्द्धरुजापहम् ॥ ८३ ॥

अपि च ।—

लवङ्गं सोष्णकं तीक्ष्णं विपाके मधुरं हिमम् ।
वातपित्तकफामघ्नं क्षयकासास्रदोषनुत् ॥ ८४ ॥

( मं, कं, लवङ्गकलिका । तें लवङ्गलु । द्रां लवङ्ग् । पारस्य लौंग, मेखक् । तां किरम्बेर । हिं लोङ् । गौ लवङ्ग । )

अथ स्वादुनामगुणाः ।—

स्वादुस्त्वगरुसारः स्यात् सुधूम्यो गन्धधूमजः ।
स्वादुः कटुकषायोष्णः सधूमामोदवातजित् ॥ ८५ ॥

( मं अगरु । तें हरगुड्डुचेट्टु । हिं अगर । )

अथ कृष्णागरुनामगुणाः ।—

कृष्णागरु स्यादगरु शृङ्गारं विश्वरूपकम् ।
शीर्षं कालागरु केश्यं वसुकं कृष्णकाष्ठकम् ।
धूपार्हं वत्सरं गन्ध-राजकं द्वादशाह्वयम् ॥ ८६ ॥
कृष्णागरु कटूष्णञ्च तिक्तं लेपे च शीतलम् ।
पाने पित्तहरं किञ्चित् त्रिदोषघ्नमुदाहृतम् ॥ ८७ ॥

( मं, कं, कृष्णागरु, शिशवाचे झाड़ । हिं कालागर । गौ काल अगुरु । )

अथ काष्ठागरुनामगुणाः ।—

अन्यागरु पीतकञ्च लौहं वर्णप्रसादनम् ।
अनार्य्यकमसारञ्च क्रिमिजग्धञ्च काष्ठकम् ॥ ८८ ॥
काष्ठागरु कटूष्णञ्च लेपे रूक्षं कफापहम् ॥ ८९ ॥

( मं, कं, काष्ठागरु । गौ पीत अगुरु । )

अथ दाहागरुनामगुणाः ।—

दाहागरु दहनागरु दाहककाष्ठं च वह्निकाष्ठञ्च ।
धूपागरु तैलागरु पुरञ्च पुरमथनवल्लभञ्चैव ॥ ९० ॥
दाहागरु कटुकोष्णं केशानां वर्द्धनञ्च वर्ण्यञ्च ।
अपनयति केशदोषानातनुते सन्ततञ्च सौगन्ध्यम् ॥ ९१ ॥

( दाहागरु इति गुर्जरे प्रसिद्धम् । )

अथ मङ्गल्यानामगुणाः । ( अगरुभेदः ) ।—

मङ्गल्या मल्लिका गन्ध-मङ्गलाऽगरुवाचका ।
मङ्गल्या गुरुशिशिरा गन्धाढ्या योगवाहिका ॥ ९२ ॥

( मङ्गल्यागरु इति केदारे प्रसिद्धः । )

अथ जटामांसीनामगुणाः ।—

मांसी तु जटिला पेशी क्रव्यादी पिशिता मिशी ।
केशिनी च जटा हिंस्रा जटामांसी च मांसिनी ॥ ९३ ॥
जटाला नलदा मेषी तामसी चक्रवर्त्तिनी ।
माता भूतजटा चैव जननी च जटावती ।
मृगभक्षाऽपि चेत्येता एकविंशतिधाभिधाः ॥ ९४ ॥
सुरभिस्तु जटामांसी कषाया कटुशीतला ।

कफकण्डूतदाहघ्नो पित्तघ्नो मोदकान्तिकृत् ॥ ९५ ॥
( मं साधारणजटामांसी। हिं कनुचर। गो जटामांसी। )

अथ गन्धमांसीनामगुणाः :—

द्वितीया गन्धमांसी च केशी भूतजटा स्मृता।
पिशाची पूतना चैव भूतकेशी च लोमशा।
जटाला लघुमांसी च ख्याता चाङ्कमिताह्वया ॥ ९६ ॥ *
गन्धमांसी तिक्तशीता कफकण्ठामयापहा।
रक्तपित्तहरा वर्ण्या विषभूतज्वरापहा ॥ ९७ ॥
( मं, कं, बहुलगन्धजटामांसी। )

अथ आकाशमांसीनामगुणाः :—

आकाशमांसी सूक्ष्माऽन्या निरालम्बा खसम्भवा।
सेवाली सूक्ष्मपत्री च गौरी पर्वतवासिनी ॥ ९८ ॥
अभ्रमांसी हिमा शोफ-व्रणनाड़ीरुजापहा।
लूतागर्दभजालादि-हारिणी वर्णकारिणी ॥ ९९ ॥
( आकाशजटामांसी। अस्याः केदारे उत्पत्तिः। )

अथ तुरुष्कनामगुणाः :—

तुरुष्को यावनो धूम्रो धूम्रवर्णः सुगन्धिकः।
सिह्लकः सिह्लसारश्च पीतसारः कपिस्तथा ॥ १०० ॥
पिण्याकः कपिजः कल्कः पिण्डितः पिण्डतैलकः।
करेवरः कृत्रिमको लेपनो मुनिभूह्वयः ॥ १०१ ॥ †

* अङ्कमिताह्वया नवाभिधा।

† मुनिभूह्वयः सप्तदशाह्वकः।

तुरुष्कः सुरभिस्तिक्तः कटुस्निग्धश्च कुष्ठजित् ।
कफपित्ताश्मरीमूत्राघातभूतज्वरार्त्तिजित् ॥ १०२ ॥

( मं पिण्डतैल । गौ शिलारस । )

अथ गुग्गुलुनामगुणाः ।—

गुग्गुलुर्यवनद्विष्टो भवाभीष्टो निशाटकः ।
जटालः कालनिर्य्यासः पूरो भूतहरः शिवः ॥ १०३ ॥
कौशिकः शाम्भवो दुर्गो यातुघ्नो महिषाक्षकः ।
देवेष्टो मरुदेश्योऽपि रक्षोहा रूक्षगन्धकः ।
दिव्यस्तु महिषाक्षश्च नामान्येतानि विंशतिः ॥ १०४ ॥
गुग्गुलुः कटुतिक्तोष्णः कफमारुतकासजित् ।
क्रिमिवातोदरप्लीह-शोफार्शोघ्नो रसायनः ॥ १०५ ॥

( मं गुग्गुलु । तें गुग्गिलमुचेट्टु । गौ गुग्गुल । )

अथ गन्धराजनामगुणाः ।—

गन्धराजः स्वर्णकणः सुवर्णः कणगुग्गुलुः ।
कनको वंशपोतश्च सुरसश्च पलङ्कषः ॥ १०६ ॥
कणगुग्गुलुः कटूष्णः सुरभिर्वातनाशनः ।
शूलगुल्मोदराध्मान-कफघ्नश्च रसायनः ॥ १०७ ॥

( मं कणगुग्गुलु । )

अथ भूमिजगुग्गुलुनामगुणाः ।—

गुग्गुलुश्च तृतीयोऽन्यो भूमिजो दैत्यमेदजः ।
दुर्गाह्लाद इडाजात आशादिरिपुसम्भवः ।
मज्जाजो मेदजश्चैव महिषासुरसम्भवः ॥ १०८ ॥

गुग्गुलुर्भूमिजस्तिक्तः कटूष्णः कफवातजित् ।
उमाप्रियश्च भूतघ्नो मेध्यः सौरभ्यदः सदा ॥ १०९ ॥

( मं भूमिजगुग्गुलु इति काश्मीरदेशे प्रसिद्धः । गौ आशापूरीधूप इति लोके । )

अथ रालनामगुणाः ।—

रालः सर्जरसश्चैव शालः कनकलोद्भवः ।
ललनः शालनिर्य्यासो देवेष्टः शीतलस्तथा ॥ ११० ॥
बहुरूपः शालरसः सर्ज्जनिर्य्यासकस्तथा ।
सुरभिः सुरधूपश्च यक्षधूपोऽग्निवल्लभः ।
कालः कललजः प्रोक्तो नाम्ना सप्तदशाङ्कितः ॥ १११ ॥
रालस्तु शिशिरः स्निग्धः कषायस्तिक्तसंग्रहः ।
वातपित्तहरः स्फोट-कण्डूतिव्रणनाशनः ॥ ११२ ॥

( मं राल । कं सर्ज्जरसः । तें सर्ज्ज, सर्ज्जरसमु । पञ्जा० रालश्लु । चिं किंलि । गौ धूना । )

अथ कुन्दुरुकनामगुणाः ।—

कुन्दुरुकः सौराष्ट्रः शिखरी कुन्दुरुककुन्दुकस्तीक्ष्णः ।
गोपुरको बहुगन्धः पालिन्दो भीषणश्च दशसंज्ञः ॥ ११३ ॥
कुन्दुरुर्मधुरस्तिक्तः कफपित्तार्त्तिदाहनुत् ।
पाने लेपे च शिशिरः प्रदरामयशान्तिकृत् ॥ ११४ ॥

( मं कुन्दुरुक । कं हड़बोल । गौ कुन्दुरुखोटी । )

अथ कुष्ठनामगुणाः ।—

कुष्ठं रुजाऽगदो व्याधिरामयं पारिभद्रकम् ।
रामं वानीरजं वाप्यं ज्ञेयं त्वग्दोषमुत्पलम् ।

कुत्सश्च पाटवं चैव पञ्चकं मनुसंज्ञकम् ॥ ११५ ॥ *
कुष्ठं कटूष्णं तिक्तं स्यात् कफमारुतकुष्ठजित् ।
विसर्पविषकण्डूति-खर्जूदद्रुघ्नकान्तिकृत् ॥ ११६ ॥

( मं कोष्ट । तें चेंगलिकोष्ठु । हिं कूट् । गो कुड़ । )

अथ सारिवानाम ।—

सारिवा शारदा गोपा गोपवल्ली प्रतानिका ।
गोपकन्या लताऽऽस्फोता नवाह्वा काष्ठसारिवा ॥ ११७ ॥

( गो श्यामालता । )

अथ कृष्णमूलीनामगुणाः ।—

सारिवाऽन्या कृष्णमूली कृष्णा चन्दनसारिवा ।
भद्रा चन्दनगोपा तु चन्दना कृष्णवल्ल्यपि ॥ ११८ ॥
सारिवे द्वे तु मधुरे कफवातास्रनाशने ।
कुष्ठकण्डूज्वरहरे मेहदुर्गन्धिनाशने ॥ ११९ ॥

( मं सारिवा । कं शेंववेल । हिं उपलसरी, गोरियासाउ । उत्० गुयापानमूल । गौ अनन्तमूल । )

अथ नखनामगुणाः ।—

नखः कररुहः शिल्पी शुक्तिः शङ्खः खुरः शफः ।
वलः कोशी च करजो हनुर्नागहनुस्तथा ॥ १२० ॥
पाणिजो बदरीपत्रो धूप्यः पण्यविलासिनी ।
सन्धिनालः पाणिरुहः स्यादष्टादशसंज्ञकः ॥ १२१ ॥
नखः स्यादुष्णकटको विषं हन्ति प्रयोजितः ।

* मनुसंज्ञकं चतुर्दशनामकम् ।

कुष्ठकण्डूव्रणघ्नश्च भूतविद्रावणः परः ॥ १२२ ॥

( मं नख । तें नखसुचिप्प । गौ नखी । )

अथ चक्रीनामगुणाः ।—

नखोऽन्यः स्याद्दलनखः कूटस्थश्चक्रनायकः ।

चक्री चक्रनखस्त्र्यस्त्रः कालो व्याघ्रनखः स्मृतः ॥ १२३ ॥

द्वीपिनखो व्यालनखः खपुटो व्यालपाणिजः ।

व्यालायुधो व्यालबलो व्यालखड्गश्च षोडश ॥ १२४ ॥

व्यालनखस्तु तिक्तोष्णः कषायः कफवातजित् ।

कुष्ठकण्डूव्रणघ्नश्च वर्ण्यः सौगन्ध्यदः परः ॥ १२५ ॥

( मं, उत्० वाघनखा । गौ वाघनखी ।)

अथ स्पृक्कानामगुणाः ।—

स्पृक्का च देवी पिशुना वधूश्च कोटिर्मनुर्ब्राह्मणिका सुगन्धा ।

समुद्रकान्ता कुटिला तथा च मालालिका भूतलिका च लघ्वी

॥ १२६ ॥

निर्माल्या सुकुमारा च मालाली देवपुत्रिका ।

पञ्चगुणिरस्पृक्प्रोक्ता नखपुष्पी च विंशतिः ॥ १२७ ॥

स्पृक्का कटुकषाया च तिक्ता श्लेष्मार्त्तिकासजित् ।

श्लेष्ममेहाश्मरीकृच्छ्र-नाशनी च सुगन्धदा ॥ १२८ ॥

( मं स्पृक्का । कं च्छिके । तें स्पृकुथनेडुद्रव्यमु । गौ पिड़िंशाक । )

अथ स्थौणेयनामगुणाः ।—

स्थौणेयकं बर्हिशिखं शुकच्छदं

मयूरचूडं शुकपुच्छकं तथा ।

विकीर्णरोमापि च कीरवर्णकं
विकर्णसंज्ञं हरितं नवाह्वयम् ॥ १२९ ॥
ेयं कफवातघ्नं सुगन्धि कटुतिक्तकम् ।
पित्तप्रकोपशमनं बलपुष्टिविवर्द्धनम् ॥ १३० ॥
( मं स्थौणेय । कं स्थौणजे । हिं थुनेर । नेपाले भटिउर् इति प्रसिद्धम् । गौ गे ठेला । )

अथ मुरानामगुणाः ।—

मुरा गन्धवती दैत्या गन्धाढ्या गन्धमादनी ।
सुरभिर्भूरिगन्धा च कुटी गन्धकुटी तथा ॥ १३१ ॥
मुरा तिक्ता कटुः शीता कषाया कफपित्तहृत् ।
श्वासासृग्विषदाहार्त्ति-भ्रममूर्च्छातृषापहा ॥ १३२ ॥
( मं मुरा । कं मुरे । सुगन्धिद्रव्यं गोर्जरे प्रसिद्धम । गौ मुरामांसी । )

अथ शैलेयनामगुणाः ।—

शैलेयं शिलजं वृद्धं शिलापुष्पं शिलोद्भवम् ।
स्थविरं पलितं जीर्णं तथा कालानुसार्य्यकम् ॥ १३३ ॥
शिलोत्थश्च शिलादद्रुः शैलजं गिरिपुष्पकम् ।
शिलाप्रसूनं सुभगं शैलकं षोड़शाह्वयम् ॥ १३४ ॥
शैलेयं शिशिरं तिक्तं सुगन्धि कफपित्तजित् ।
दाहतृष्णावमिश्वास-व्रणदोषविनाशनम् ॥ १३५ ॥
( मं शैलज । कं कलह । हिं भूरछरिल, छरा । तें शैलेय-मनेद्रव्यमु । गौ शैलज । )

अथ चोरकनामगुणाः । ( ग्रन्थिपर्णभेदः ) ।—

चोरकः शङ्कितखण्डा दुष्पत्रः क्षेमको रिपुः ।

चपलः कितवो धूर्त्तः पटुर्नीचो निशाचरः ॥ १३६ ॥
गणहासः कोपनकश्चौरकः फलचोरकः ।
दुष्कुलो ग्रन्थिलश्चैव सुग्रन्थिः पर्णचोरकः ।
ग्रन्थिपर्णो ग्रन्थिदलो ग्रन्थिपत्रस्त्रिनेत्रधा ॥ १३७ ॥*
चोरकस्तीव्रगन्धोष्णस्तिक्तो वातकफापहः ।
नासामुखरुजाजीर्ण-क्रिमिदोषविनाशनः ॥ १३८ ॥
(मं गाठिवना । तें लिंमिदोड्डु । चोरा इति पार्वतीयदेशे प्रसिद्धः ।)

अथ पद्मकनामगुणाः ।—

पद्मकं पीतकं पीतं मालयं शीतलं हिमम् ।
शुभ्रं केदारजं रक्तं पाटलापुष्पसन्निभम् ।
पद्मकाष्ठं पद्मवृत्तं प्रोक्तं स्याद्द्वादशाह्वयम् ॥ १३९ ॥
पद्मकं शीतलं तिक्तं रक्तपित्तविनाशनम् ।
मोहदाहज्वरभ्रान्ति-कुष्ठविस्फोटशान्तिकृत् ॥ १४० ॥
( मं पद्मक । तें एगुगुसद्दर्देवि । हिं पद्माक । गौ पद्मकाष्ठ । )

अथ प्रपौण्डरीकनामगुणाः ।—

प्रपौण्डरीकं चक्षुष्यं पुण्ड्र्यं पुण्डरीयकम् ।
पौण्ड्र्यं च सुपुष्पञ्च सानुजं चानुजं स्मृतम् ॥ १४१ ॥
प्रपौण्डरीकं चक्षुष्यं मधुरं तिक्तशीतलम् ।
पित्तरक्तव्रणान् हन्ति ज्वरदाहतृषापहम् ॥ १४२ ॥
( मं पुण्डरीक । तें पुण्डरीकमनुगेविध्यानमु । हिं पुण्डेरी । ।)

* त्रिनेत्रधा त्रयोविंशतिनामकः

अथ लामज्जकनामगुणाः । ( उशीरभेदः ) ।—

लामज्जकं सुनालं स्यादमृणालं लवं लघु ।
इष्टकापथकं शीघ्रं दीर्घमूलं जलाश्रयम् ॥ १४३ ॥
लामज्जकं हिमं तिक्तं मधुरं वातपित्तजित् ।
तृड्दाहश्रममूर्च्छार्त्ति-रक्तपित्तज्वरापहम् ॥ १४४ ॥

( मं लामज्जा । तें तेल्लवट्टिवेरु । गौ गन्धवेणा । )

अथ रोहिणीनामगुणाभेदाश्च ।—

मांसरोहिण्यतिरुहा वृत्ता चर्मकषा च सा ।
विकसा मांसरोही च ज्ञेया मांसरुहा मुनिः ॥ १४५ ॥ *
अन्या मांसी सदामांसी मांसरोहा रसायनी ।
सुलोमा लोमकरणी रोहिणी मांसरोहिका ॥ १४६ ॥
विकसा कटुका तिक्ता तथोष्णा स्वरसादनुत् ।
रसायनप्रयोगाच्च सर्वरोगहरा मता ।
कषाया ग्राहिणी वर्ण्या रक्तपित्तप्रसादनी ॥ १४७ ॥
रोहिणीयुगलं शीतं कषायं क्रिमिनाशनम् ।
कण्ठशुद्धिकरं रुच्यं वातदोषनिसूदनम् ॥ १४८ ॥

( मं रोहिणी । कं मांसरोहिणी । )

अथ श्रीवेष्टनामगुणाः ।—

श्रीवेष्टो वृक्षधूपश्च चीड़ागन्धो रसाङ्कः ।
श्रीवासः श्रीरसो वेष्टो लक्ष्मीवेष्टस्तु वेष्टकः ॥ १४९ ॥
वेष्टसारो रसावेष्टः श्रीरशीर्षः सुधूपकः ।
धूपाङ्गस्तिलपर्णश्च सरलाङ्गोऽपि षोड़श ॥ १५० ॥

---

* मुनिः सप्तसंख्या ।

श्रीवेष्टः कटुतिक्तश्च कषायः श्लेष्मपित्तजित् ।
योनिदोषरुजाजीर्णव्रणघ्नाध्मानदोषजित् ॥ १५१ ॥
( श्रीवेष्टक इति सौराष्ट्रे प्रसिद्धः । गो नवनीतखोटि, तार्पिन् । गन्धविरजा इति केचित् । )

अथ उशीरनामगुणाः ।—

उशीरममृणालं स्याज्जलवासं हरिप्रियम् ।
मृणालमभयं वीरं वीरणं समगन्धिकम् ॥ १५२ ॥
रणप्रियं वारितरं शिशिरं शितिमूलकम् ।
वेणीगमूलकं चैव जलामोदं सुगन्धिकम् ।
सुगन्धिमूलकं शुभ्रं बालकं ग्रहभूह्वयम् ॥ १५३ ॥ *
उशीरं शीतलं तिक्तं दाहश्रमहरं परम् ।
पित्तज्वरार्त्तिशमनं जलसौगन्ध्यदायकम् ॥ १५४ ॥
( मं बाल। कं बालदवेरु । तें वट्टिवेल्लु । हिं खस् । गौ वेणामूल । )

अथ नलिकानामगुणाः ।—

नलिका विद्रुमलतिका कपोतवाणा नली च निर्मथ्या ।
सुषिरा धमनी सुल्या रक्तदला नर्त्तकी नटी रुद्राः ॥ १५५ ॥ †
नलिका तिक्तकटुका तीक्ष्णा च मधुरा हिमा ।
क्रिमिवातोदरार्त्त्यर्शः-शूलघ्नी मलशोधनी ॥ १५६ ॥
( मं नलिकाजाड । कं वेतललिके । तें पक्केमुक । गौ नालुकी । )

इत्थं गन्धद्रव्यकदम्बाह्वयवीर्यव्याख्या-
वाचोयुक्तिविविक्तोज्ज्वलसर्गम् ।

* ग्रहभूह्वयम् एकोनविंशतिनामकम् ।

† रुद्राः एकादशाह्वयाः ।

वर्गं वक्त्राम्भोरुहमोदार्हमधीयार्थैनं
मध्येसंसदसौ दीव्यतु वैद्यः ॥ १५७ ॥ *
ये गन्धयन्ति सकलानि च भूतलानि
लोकांश्च येऽपि सुखयन्ति च गन्धलुब्धान् ।
तेषामयं मलयजादिसुगन्धिनाम्नां
भूर्गन्धवर्ग इति विश्रुतिमेति वर्गः ॥ १५८ ॥ †
यस्योच्चैश्चरितानि शीतसुरभीण्यभ्यस्य सत्यात्मनो
दुश्चारित्रजना निषङ्गजनितं द्राग्दौःस्थ्यमास्थन् स्वकम् ।

---

* पूर्ववत् वर्गमुपसंहरति इत्थमित्यादिश्लोकत्रयेण । इत्थम् अनेन प्रकारेण गन्धद्रव्याणां चन्दनादीनाम् कदम्बस्य समूहस्य आह्वयाः नामानि वीर्य्यं प्रभावश्च तयोर्व्याख्या वाचः वाक्यस्य युक्तिः प्रमाणञ्च ताभ्यां विविक्तः निर्मलः उज्ज्वलश्च सर्गः रचना यस्य तथाभूतं वक्त्राम्भोरुहस्य मुखपद्मस्य मोदार्हं सुरभिकरणयोग्यम् एनं वर्गम् अधीय पठित्वा असौ अधीतवर्गः वैद्यः संसदः सभायाः मध्ये ( पारे मध्ये षष्ठ्या वा इत्यनुशासनात् साधुः ) दीव्यतु क्रीडतु यथेच्छं विहरतु इत्यर्थः ; परपरिभवभावनातो मुक्तो भवतु इति भावः । दीव्यति इति च केषुचित् पुस्तकेषु पाठो दृश्यते ।

† य इति ।—ये गन्धाः पूर्वोद्दिष्टसुरभिद्रव्याणि इत्यर्थः, सकलानि निखिलानि भूतलानि गन्धयन्ति सुरभीणि कुर्वन्ति, येऽपि च गन्धलुब्धान् गन्धलोलुपान् लोकान् विलासिनश्च सुखयन्ति सुखिनः कुर्वन्ति ; मलयजादीनि यानि सुगन्धीनि शोभनगन्धाः इत्यर्थः तान्येव नामानि येषां तेषाम् एतद्वर्गस्थितानां गन्धद्रव्याणां भूः स्थानम् अयं वर्गः गन्धवर्ग इति विश्रुतिं ख्यातिम् एति प्राप्नोति ; वर्गस्यास्य गन्धवर्ग इति चापराख्या इति तात्पर्य्यम् ।

तस्यायं कृतिनः कृतौ नरहरेः श्रीचन्दनादिः स्थितिं
वर्गो वाञ्छति नामनैगमशिखाभूषामणौ द्वादशः ॥१५८॥ *

इति श्रीनरहरिपण्डितविरचिते निघण्टुराजापरपर्य्यायनाम-
धेयवत्यभिधानचूडामणौ गन्धवर्गापरनामा
चन्दनादिवर्गो द्वादशः ।

---

* यस्येति ।—सत्यात्मनः सत्यः अवितथः आत्मा यस्य तस्य सत्यैक-रतस्य यस्य उच्चैः उन्नतानि महान्ति इति यावत् शीतानि शीतलानि सुरभीणि दिगन्तविच्छुरिततया इति बोध्यम् ; चरितानि अभ्यस्य सविशेषं पर्य्यालोच्य दुश्चारिजनाः मन्दस्वभावाः निषङ्गजनितं संसर्गजं स्वकम् आत्मीयं दौःस्थं दौर्जन्यं द्राक् झटिति, ( "द्राक् झटित्यञ्जसाऽह्नाय" इत्यमरः ) आस्थन् दूरमक्षिपन्नित्यर्थः ; (अस्यतेर्लुङि रूपसिद्धिः) अयं चन्दनादिः द्वादशो वर्गः तस्य उल्लिखितप्रभाववतः कृतिनः पण्डितस्य आयुर्व्वेदविद इत्यर्थः ; नरहरेः कृतौ निर्म्माणे, निगम्यते अभिधीयते अनेनेति निगमः धातूनामनेकार्थत्वात्, स एव नैगमः स्वार्थे अन्, अभिधानमित्यर्थः, नाम्नः नैगमः अभिधानं तस्य शिखेव शीर्षस्थानमिव तस्या भूषायै अलङ्करणार्थं मणिरिव तत्र उत्कृष्टतमे इत्यर्थः नामनैगमशिखाचूडामणौ स्थितिम् अवस्थानं वाञ्छति अभिलषति, वर्गोऽयम् अत्रैव तिष्ठतु इति यावत् ।

---

## अथ सुवर्णादिवर्गः ।



त्रिस्वर्णरौप्यताम्राणि त्रपु सीसं द्विरीतिका ।
कांस्यायो वर्त्तकं कान्तं किट्टं मुण्डञ्च तीक्ष्णकम् ॥ १ ॥
शिला सिन्दूरभूनागं हिङ्गुलं गैरिकं द्विधा ।
तुवरी हरितालञ्च गन्धकं च शिलाजतु ॥ २ ॥
सिकथकञ्च द्विकासीसं माक्षिकौ पञ्चधाऽञ्जनम् ।
कम्पिल्लतुत्थरसकं पारदो चाभ्रकं चतुः ॥ ३ ॥
स्फटी च क्षुल्लकः शङ्खो कपर्दः शुक्तिका द्विधा ।
खटिनो दुग्धपाषाणो मणिश्च कर्पूराद्यकः ॥ ४ ॥
सिकता च द्विकङ्कुष्ठं विमला च द्विधा मता ।
तथाऽऽखुप्रस्तरश्चैव शरवेदमिताह्वयाः ।
अथ रत्नं नवं वच्मे पद्मरागादिकं क्रमात् ॥ ५ ॥
माणिक्यमुक्ताफलविद्रुमाणि गारुत्मतं स्यादथ पुष्पराग ।
वज्रं च नीलञ्च नव क्रमेण गोमेदवैदूर्य्ययुतानि तानि ॥ ६ ॥
स्फटिकश्च सूर्य्यकान्तो वैक्रान्तश्चन्द्रकान्तकः ।
राजावर्त्तः पेरोजं स्यादुभौ बाणाश्च संख्यया ॥ ७ ॥

अथ सुवर्णनामगुणाः ।—

स्वर्णं सुवर्णकनकोज्ज्वलकाञ्चनानि
कल्याणहाटकहिरण्यमनोहराणि ।

गाङ्गेयगैरिकमहारजताग्निवीर्य्य-
रुक्माग्निहेमतपनीयकभास्कराणि ॥ ८ ॥
जाम्बूनदाष्टापदजातरूप-पिञ्जानचामीकरकर्बुराणि ।
कार्त्तस्वरापिञ्जरभर्मभूरि-तेजांसि दीप्तानलपीतकानि ॥ ९ ॥
मङ्गल्यसौमेरवशातकुम्भ-शृङ्गारचन्द्राजरजाम्बवानि ।
आग्नेयनिष्काग्निशिखानि चेति नेत्राब्धिनिर्द्धारितनाम हेम ॥१०॥*

स्वर्णं स्निग्धकषायतिक्तमधुरं दोषत्रयध्वंसनं
शीतं स्वादु रसायनञ्च रुचिकृच्चक्षुष्यमायुष्प्रदम् ।
प्रज्ञावीर्य्यबलस्मृतिस्वरकरं कान्तिं विधत्ते तनोः
सन्धत्ते दुरितक्षयं श्रियमिदं धत्ते नृणां धारणात् ॥ ११ ॥

दाहे च रक्तमथ यच्च सितं छिदायां
काश्मीरकान्ति च विभाति निकाषपट्टे ।
स्निग्धञ्च गौरवमुपैति च यत्तुलायां
जात्या तदेव कनकं मृदु रक्तपीतम् ॥ १२ ॥

अथ सुवर्णजातिः ।—

तच्चैकं रसवेधजं तदपरं जातं स्वयं भूमिजं
किञ्चान्यद्बहुलोहसङ्करभवञ्चेति त्रिधा काञ्चनम् ।
तत्राद्यं किल पीतरक्तमपरं रक्तं ततोऽन्यत्तथा
मैरालं तदतिक्रमेण तदिदं स्यात् पूर्वपूर्वोत्तमम् ॥ १३ ॥

अथ रौप्यनामगुणाः ।—

रौप्यं शुभ्रं वसुश्रेष्ठं रुचिरं चन्द्रलोहकम् ।

---

* नेत्राब्धिनिर्द्धारितनाम द्वाचत्वारिंशन्नामकमित्यर्थः ।

श्वेतकं तु महाशुभ्रं रजतं तमरूपकम् ॥ १४ ॥
चन्द्रभूतिः सितं तारं कलधौतेन्दुलोहकम् ।
कुप्यं श्वेतं तथा सौधं चन्द्रहासं मुनीन्दुकम् ॥ १५ ॥ *
रौप्यं स्निग्धं कषायाम्लं विपाके मधुरं सरम् ।
वातपित्तहरं रुच्यं वलीपलितनाशनम् ॥ १६ ॥
दाहच्छेदनिकाषेषु सितं स्निग्धञ्च यद्गुरु ।
सुवर्णेऽपि च वर्णाढ्यमुत्तमं तदुदीरितम् ॥ १७ ॥

( अं, गौ रूपा । कं वेल्लि । )

अथ ताम्रनामगुणाः ।—

ताम्रं म्लेच्छमुखं शुल्वं तपनेष्टमुदुम्बरम् ।
त्र्यम्बकं चारविन्दञ्च रविलोहं रविप्रियम् ।
रक्तं नेपालकञ्चैव रक्तधातुः करेन्दुधा ॥ १८ ॥ †
ताम्रं सुपक्वं मधुरं कषायं तिक्तं विपाके कटु शीतलञ्च ।
कफापहं पित्तहरं विबन्ध-शूलघ्नपाण्डूदरगुल्मनाशि ॥ १९ ॥
घनघातसहं स्निग्धं रक्तपत्रामलं मृदु ।
शुद्धाकरसमुत्पन्नं ताम्रं शुभमसङ्करम् ॥ २० ॥

( बें तामि । तां शेम्बु । हिं तौँबा । बो ताम्बा । )

अथ त्रपुनामगुणाः ।—

त्रपु त्रपुसमापाण्डूकं वङ्गञ्च मधुरं हिमम् ।
कुरूप्यं पिच्चटं रङ्गं पूतिगन्धं दशाह्वयम् ॥ २१ ॥

* मुनीन्दुकं सप्तदशाह्वम् ।
† करेन्दुधा अष्टादशाभिधः ।

त्रपुसं कटुतिक्ताहिमं कषायलवणं सरञ्च मेहनम् ।
क्रिमिदाहपाण्डुशमनं कान्तिकरं तद्रसायनञ्चैव ॥ २२ ॥
श्वेतं लघु मृदु स्वच्छं स्निग्धमुष्णापहं हिमम् ।
सूतपतकरं कान्तं त्रपु श्रेष्ठमुदाहृतम् ॥ २३ ॥
( मं कथिल । कं तवर । गो राङ्, वङ्ग । )

अथ सीसकनामगुणाः ।—

सीसकन्तु जडं सीसं यवनेष्टं भुजङ्गमम् ।
योगीष्टं नागपुरगं कुवङ्गं परिपिष्टकम् ॥ २४ ॥
मृदु कषायंसं पद्मं तारशुद्धिकरं स्मृतम् ।
सिराहृत्तं च वङ्गं स्याच्चीनपिष्टञ्च षोड्श ॥ २५ ॥
सीसन्तु वङ्गतुल्यं स्यात् रसवीर्य्यविपाकतः ।
उष्णञ्च कफवातघ्नमर्शोघ्नं गुरु लेखनम् ॥ २६ ॥
स्वर्णं नीलं मृदु स्निग्धं निर्मलञ्च सुगौरवम् ।
रौप्यसंशोधनं चिप्रं सीसकञ्च तदुत्तमम् ॥ २७ ॥
( तें शिषमु । दा० शिश् । हिं सोषक । गो सीसा । )

अथ रीतिनामगुणभेदाः ।—

रीतिः क्षुद्रसुवर्णं सिंहलकं पिङ्गलञ्च पित्तलकम् ।
लोहितकमारकुटं पिङ्गललोहञ्च पीतकं नवधा ॥ २८ ॥
राजरीतिः काकतुण्डी राजपुत्री महेश्वरी ।
ब्राह्मणी ब्रह्मरीतिश्च कपिला पिङ्गलाऽपि च ॥ २९ ॥
रीतिकायुगलं तिक्तं शीतलं लवणं रसे ।
शोधनं पाण्डुवातघ्नं क्रिमिप्लीहार्त्तिपित्तजित् ॥ ३० ॥

शुद्धा स्निग्धा मृदुः शीता सुरङ्गा सूत्रपत्रिणी ।
हेमोपमा शुभा स्वच्छा जन्या रीतिः प्रकीर्त्तिता ॥ ३१ ॥

( मं पित्तल । कं पित्तालेयरडु । हिं कांचीपीतरी ।
गौ पितल । )

अथ कांस्यनामगुणाः ।—

कांस्यं सौराष्ट्रिकं घोषं कंसीयं वह्निलोहकम् ।
दीप्तं लोहं घोरपुष्पं दीप्तकं सुमनाह्वयम् ॥ ३२ ॥
कांस्यन्तु तिक्तमुष्णं चक्षुष्यं वातकफविकारघ्नम् ।
रूक्षं कषायरुच्यं लघु दीपनपाचनं पथ्यम् ॥ ३३ ॥
श्वेतं दीप्तं मृदु ज्योतिः शब्दाढ्यं स्निग्धनिर्मलम् ।
घनाग्निसहसूत्राङ्गं कांस्यमुत्तममीरितम् ॥ ३४ ॥

( मं कांसें । कं कञ्चु । हिं कांसा । गौ काँसा । )

अथ वर्त्तलोहनामगुणाः ।—

वर्त्तलोहं वर्त्ततीक्ष्णं वर्त्तकं लोहसङ्करम् ।
नीलिका नीललोहञ्च लोहजं वट्टलोहकम् ॥ ३५ ॥
वृत्तं लोहं कटूष्णञ्च तिक्तञ्च शिशिरं तथा ।
कफहृत्पित्तशमनं मधुरं दाहमेहनुत् ॥ ३६ ॥

( मं वाटुललोह । कं पञ्चलोह । वम्० पञ्चरसलोह । "विदरी"
इति लोके प्रसिद्धम् । )

अथ अयस्कान्तनामगुणाः ।—

अयस्कान्तं कान्तलोहं कान्तं स्याल्लोहकान्तिकम् ।
कान्तायसं कृष्णलोहं महालोहञ्च सप्तधा ॥ ३७ ॥

अपि च।—

स्याद्भ्रामकं तदनु चुम्बकरोमकाख्यं
स्याच्छेदकाख्यमिति तच्च चतुर्विधं स्यात्।
कान्ताश्मलोहगुणवृद्धि यथाक्रमेण
दार्ढ्याङ्गकान्तिकचकार्ष्ण्यरविरोगदायि॥ ३८॥

तथा च।—

अयस्कान्तविशेषाः स्युर्भ्रामकाश्चुम्बकादयः।
रसायनकराः सर्वे देहसिद्धिकराः पराः॥ ३९॥
न सूतेन विना कान्तं न कान्तेन विना रसः।
सूतकान्तसमायोगाद्रसायनमुदीरितम्॥ ४०॥

अथ लोहकिट्टनामगुणाः।—

लोहकिट्टन्तु किट्टं स्याल्लोहचूर्णमयोमलम्।
लोहजं कृष्णचूर्णञ्च कार्ष्ण्यं लोहमलं तथा॥ ४१॥
लोहकिट्टन्तु मधुरं कटूष्णं क्रिमिवातनुत्।
पक्तिशूलं मरुच्छूलं मेहगुल्मार्त्तिशोफनुत्॥ ४२॥
( सं लोहकिट्ट। गौ मण्डूर। )

अथ मुण्डलोहनाम।—

मुण्डं मुण्डायसं लोहं दृषत्सारं शिलात्मजम्॥
अश्मजं कृषिलोहञ्च आरं कृष्णायसं नव॥ ४३॥

अथ तीक्ष्णनाम।—

तीक्ष्णं शस्त्रायसं शस्त्रं पिण्डं पिण्डायसं शठम्।
आयसं निशितं तीव्रं लोहखड्गञ्च मुण्डजम्।

अयश्चित्रायसं प्रोक्तं चीनजं वेदभूमितम् ॥ ४४ ॥ *

( मं पुढेंतीखें । कं कबुन । तें चोगरलोह । गौ कस्मात । )

अथ लोहसामान्यगुणाः ।—

लोहं रूक्षोष्णतिक्तं स्याद्वातपित्तकफापहम् ।
प्रमेहपाण्डुशूलघ्नं तीक्ष्णं मुण्डाधिकं स्मृतम् ॥ ४५ ॥

अथ समस्ताशोधितधातुदोषाः ।—

स्वर्णं सम्यगशोधितं श्रमकरं स्वेदावहं दुःसहं
रौप्यं जाठरजाड्यमान्द्यजननं ताम्रं वमिभ्रान्तिदम् ।
नागञ्च त्रपु चाङ्गदोषदमयो गुल्मादिदोषप्रदं
तीक्ष्णं शूलकरञ्च कान्तमुदितं कार्ष्ण्यामयस्फोटदम् ॥ ४६ ॥
विशुद्धिहीनौ यदि मुण्डतीक्ष्णौ क्षुधापहौ गौरवगुल्मदायकौ ।
कांस्यायसं क्लेदकतापकारकं रीत्यौ च संमोहनशोषदायिके ॥४७॥

अथ मनःशिलानामगुणाः ।—

मनःशिला स्यात् कुनटी मनोज्ञा
शिला मनोह्वाऽपि च नागजिह्वा ।
नेपालिका स्यान्मनसश्च गुप्ता
कल्याणिका रोगशिला दशाह्वा ॥ ४८ ॥

मनःशिला कटुः स्निग्धा लेखनी विषनाशनी ।
भूतावेशभयोन्माद-हारिणी वश्यकारिणी ॥ ४९ ॥

( मं मणशिल । कं मनशिले । गौ मनछाल । )

अथ सिन्दूरनामगुणाः ।—

सिन्दूरं नागरेणुः स्याद्रक्तं सीमन्तकं तथा ।

* वेदभूमितं चतुर्दशसंख्याकम् ।

नागजं नागगर्भञ्च शोषं वीररजः स्मृतम् ॥ ५० ॥
गणेशभूषणं सन्ध्या-रागं शृङ्गारकं स्मृतम् ।
सौभाग्यमरुणं चैव मङ्गल्यं मनुसम्मितम् ॥ ५१ ॥ *
सिन्दूरं कटुकं तिक्तमुष्णं व्रणविरोपणम् ।
कुष्ठास्रविषकण्डूति-वीसर्पशमनं परम् ॥ ५२ ॥

( मं, दा०, हिं, सिन्दूर । तें चेन्दुरमु । तां चेन्दूरम् । पारस्य० सिरिन्ज् । गौ सिन्दूर । )

अथ सिन्दूरलक्षणम् ।—

सुरङ्गोऽग्निसहः सूक्ष्मः स्निग्धः स्वच्छो गुरुर्मृदुः ।
सुवर्णकरजः शुद्धः सिन्दूरो मङ्गलप्रदः ॥ ५३ ॥

अथ भूनागनामगुणाः ।—

भूनागः क्षितिनागश्च भूजन्तू रक्तजन्तुकः ।
क्षितिजः क्षितिजन्तुश्च भूमिजो रक्ततुण्डकः ॥ ५४ ॥
भूनागो वश्यमारः स्यान्नानाविज्ञानकारकः ।
रसस्य जारणे तूक्तं तत्सत्त्वन्तु रसायनम् ॥ ५५ ॥

( मं दाणवे । कं नेयिनीलले । )

अथ हिङ्गुलनामगुणाः ।—

हिङ्गुलं बर्बरं रक्तं सुरङ्गं सुगरं स्मृतम् ।
रञ्जनं दरदं म्लेच्छं चित्राङ्गं चूर्णपारदम् ॥ ५६ ॥
अन्यच्च मारकं चैव मणिरागं रसोद्भवम् ।
रञ्जकं रसगर्भञ्च बाणभूसंख्यसम्मितम् ॥ ५७ ॥ †

* मनुसम्मितं चतुर्दशपरिमितम् ।
† बाणभूसंख्यसम्मितं पञ्चदशसंख्यकम् ।

हिङ्गुलं मधुरं तिक्तमुष्णवातकफापहम् ।
त्रिदोषहन्तदोषोत्थं ज्वरं हरति सेवितम् ॥ ५८ ॥

( मं हिङ्गुल । कं हिङ्गुलीयक । गौ हिङ्गुल । )

अथ गैरिकद्वयनामगुणाः ।—

गैरिकं रक्तधातुः स्यात् गिरिधातुर्गवेधुकम् ।
धातुः सुरङ्गधातुश्च गिरिजं गिरिसम्भवम् ॥ ५९ ॥
सुवर्णगैरिकं चान्यत् स्वर्णधातुः सुरक्तकम् ।
सन्ध्याभ्रं बभ्रुधातुश्च शिलाधातुः षडाह्वयम् ॥ ६० ॥
गैरिकं मधुरं शीतं कषायं व्रणरोपणम् ।
विस्फोटार्शोऽग्निदाहघ्नं वरं स्वर्णादिकं शुभम् ॥ ६१ ॥

( मं गेरु, सोनेगेरु । कं जाजुद्दोजाजु । गौ गेरिमाटी । )

अथ तुवरीनामगुणाः ।—

तुवरी मृच्च सौराष्ट्री मृत्स्ना सङ्गा सुराष्ट्रजा ।
भूघ्नी मृतालकं कासी मृत्तिका सुरमृत्तिका ।
सुत्या काङ्क्षी सुजाता च ज्ञेया चैव चतुर्दश ॥ ६२ ॥
तुवरी तिक्तकटुका कषायाम्ला च लेखनी ।
चक्षुष्या ग्रहणीच्छर्दि-पित्तसन्तापहारिणी ॥ ६३ ॥

( मं तुवरी । कं तुवरियमण्णु । सौराष्ट्रे प्रसिद्धा ।
गौ तिलकमाटी । )

अथ हरितालनामगुणाः ।—

हरितालं गोदन्तं पीतं नटमण्डनञ्च गौरञ्च ।
चित्राङ्गं पिञ्जरकं भवेदालं तालकं च तालं च ॥ ६४ ॥

कनकरसं काञ्चनकं विडालकञ्चैव चित्रगन्धञ्च ।
पिङ्गञ्च पिङ्गसारं गौरीललितञ्च सप्तदशसंज्ञम् ॥ ६५ ॥
हरितालं कटूष्णञ्च स्निग्धं त्वग्दोषनाशनम् ।
भूतभ्रान्तिप्रशमनं विषवातरुजार्त्तिजित् ॥ ६६ ॥
( मं, गौ, हरिताल । कं हरिदाल । )

अथ गन्धकनामगुणाः ।—

गन्धको गन्धपाषाणो गन्धाश्मा गन्धमोदनः ।
पूतिगन्धोऽतिगन्धश्च वटः सौगन्धिकस्तथा ॥ ६७ ॥
सुगन्धो दिव्यगन्धश्च गन्धश्च रसगन्धकः ।
कुष्ठारिः क्रूरगन्धश्च कीटघ्नः शरभूमितः ॥ ६८ ॥ *
गन्धकः कटुरुष्णश्च तीव्रगन्धोऽतिवह्निकृत् ।
विषघ्नः कुष्ठकण्डूति खर्जूत्वग्दोषनाशनः ॥ ६९ ॥
( म, हिं, गौ, गन्धक । पारस्य० गोगिर्द । )

अथ गन्धकभेदाः ।—

श्वेतो रक्तश्च पीतश्च नीलश्चेति चतुर्विधः ।
गन्धको वर्णतो ज्ञेयो भिन्नो भिन्नगुणाश्रयः ॥ ७० ॥
श्वेतः कुष्ठापहारी स्याद्रक्तो लोहप्रयोगकृत् ।
पीतो रसप्रयोगार्हो नीलो वर्णान्तरोचितः ॥ ७१ ॥

अथ शिलाजतुनामगुणाः ।—

शिलाजतु स्यादश्मोत्थं शैलं गिरिजमश्मजम् ।
अश्मलाक्षाऽश्मजतुकं जत्वश्मकमिति स्मृतम् ॥ ७२ ॥

---

* शरभूमितः पञ्चदशाश्रयः ।

शिलाजतु भवेत्तिक्तं कटूष्णञ्च रसायनम् ।
मेहोन्मादाश्मरीशोफ-कुष्ठापस्मारनाशनम् ॥ ७३ ॥

( मं, गौ, शिलाजतु । कं कलुवेन्न । "शिलाजित्" इति लोके । )

अथ सिक्थनामगुणाः ।—

सिक्थकं मधुकं सिक्थं मधुजं मधुसम्भवम् ।
मदनकं मधूच्छिष्टं मदनं मक्षिकामलम् ॥ ७४ ॥
क्षौद्रेयं पीतरागञ्च स्निग्धं माक्षिकजं तथा ।
क्षौद्रजं मधुशेषञ्च द्रावकं मक्षिकाश्रयम् ।
मधूषितञ्च सम्प्रोक्तं मधूत्थं चोनविंशति ॥ ७५ ॥
सिक्थकं कपिलं स्वादु कुष्ठवातार्त्तिजिन्मृदु ।
कटु स्निग्धञ्च लेपेन स्फुटिताङ्गविरोपणम् ॥ ७६ ॥

( मं, कं मेण । गौ मोम् । )

अथ धातुकासीसनामगुणाः :—

कासीसं धातुकासीसं केसरं हंसलोमशम् ।
शोधनं पांशुकासीसं शुभ्रं सप्ताह्वयं मतम् ॥ ७७ ॥
कासीसं तु कषायं स्यात् शिशिरं विषकुष्ठजित् ।
खर्जूक्रिमिहरञ्चैव चक्षुष्यं कान्तिवर्द्धनम् ॥ ७८ ॥

( मं, कं, कासीस । हिं कासीस् । गौ हिराकस् । )

अथ पुष्पकासीसनामगुणाः ।—

द्वितीयं पुष्पकासीसं वत्सकञ्च मलीमसम् ।
कृष्णं नेत्रौषधं योज्यं विशदं नीलमृत्तिका ॥ ७९ ॥
पुष्पकासीसकं तिक्तं शीतं नेत्रामयापहम् ।

लेपेनात्यामकुष्ठादि-नाशात्वग्दोषनाशनम् ॥ ८० ॥
( मं, कां, पुष्पकासीस । पीतवर्णकासीसभेदः ; तत्तु भस्मवत् । )

अथ धातुमाक्षिकनामगुणाः, तद्भेदाश्च ।—

माक्षिकञ्चैव माक्षीकं पीतकं धातुमाक्षिकम् ।
तापीजं ताप्यकं ताप्यमापीतं पीतमाक्षिकम् ॥ ८१ ॥
आवर्त्तं मधुधातुः स्यात् क्षौद्रधातुस्तथाऽपरः ।
प्रोक्तं माक्षिकधातुश्च वेदभूर्हेममाक्षिकम् ॥ ८२ ॥ *
माक्षिकं मधुरं तिक्तमम्लं कटु कफापहम् ।
भ्रमहृल्लासमूर्च्छार्त्ति-श्वासकासविषापहम् ॥ ८३ ॥
माक्षिकं द्विविधं प्रोक्तं हेमाह्वं तारमाक्षिकम् ।
भिन्नवर्णविशेषत्वात् रसवीर्य्यादिकं पृथक् ॥ ८४ ॥
तारवादादिके तार-माक्षिकञ्च प्रशस्यते ।
देहे हेमादिकं शस्तं रोगघ्नं बलपुष्टिदम् ॥ ८५ ॥
( गो स्वर्णमाक्षिक, रौप्यमाक्षिक । )

अथ नीलाञ्जननामगुणाः ।—

अञ्जनं यामुनं कृष्णं नादेयं मेचकं तथा ।
स्रोतोजं दृक्प्रदं नीलं सौवीरञ्च सुवीरजम् ॥ ८६ ॥
तथा नीलाञ्जनञ्चैव चक्षुष्यं वारिसम्भवम् ।
कपोतकं च कापोतं सम्प्रोक्तं शरभूमितम् ॥ ८७ ॥ †
शीतं नीलाञ्जनं प्रोक्तं कटु तिक्तं कषायकम् ।

---

* वेदभूः चतुर्दशाख्यम् ।

† शरभूमितं पञ्चदशसंख्यकम् ।

चक्षुष्यं कफवातघ्नं विषघ्नञ्च रसायनम् ॥ ८८ ॥

( मं सौवीराञ्जन। गौ नीलसुर्‌मा। )

अथ कुलत्थाञ्जननामगुणाः ।—

कुलत्था दृक्प्रसादा च चक्षुष्याऽथ कुलत्थिका ।
कुलाली लोचनहिता कुम्भकारी मलापहा ॥ ८९ ॥
कुलत्थिका तु चक्षुष्या कषाया कटुका हिमा ।
विषविस्फोटकण्डूति-व्रणदोषनिबर्हिणी ॥ ९० ॥

( मं, कं, कुलत्थाञ्जन। तां कसकुटकिनबीज। हिं खापरिया। )

अथ पुष्पाञ्जननामगुणाः ।—

पुष्पाञ्जनं पुष्पकेतुः कौसुम्भं कुसुमाञ्जनम् ।
रीतिकं रीतिकुसुमं रीतिपुष्पञ्च पौष्पकम् ॥ ९१ ॥
पुष्पाञ्जनं हिमं प्रोक्तं पित्तहिक्काप्रदाहनुत् ।
नाशयेद्विषकासार्त्तिं सर्वनेत्रामयापहम् ॥ ९२ ॥

अथ रसाञ्जननामगुणाः ।—

रसाञ्जनं रसोद्भूतं रसगर्भं रसाग्रजम् ।
कृतकं बालभैषज्यं दार्वीक्वाथोद्भवं तथा ॥ ९३ ॥
रसजातं तार्क्ष्यशैलं ज्ञेयं वर्ण्याञ्जनं तथा ।
रसनाभं चाग्निसारं द्वादशाह्वञ्च कीर्त्तितम् ॥ ९४ ॥
रीत्यां तु ध्मायमानायां तत्किट्टन्तु रसाञ्जनम् ।
तदभावे तु कर्त्तव्यं दार्वीक्वाथसमुद्भवम् ॥ ९५ ॥

( मं, गौ, रसाञ्जन। हिं रसौत। )

अथ स्रोतोऽञ्जननामगुणाः।—

स्रोतोऽञ्जनं वारिभवं तथाऽन्यं स्रोतोद्भवं स्रोतनदीभवञ्च।
सौवीरसारञ्च कपोतसारं वल्मीकशीर्षं मुनिसम्मिताह्वम् ॥९६॥ *

स्रोतोऽञ्जनं शीतकटु कषायं क्रिमिनाशनम्।
रसाञ्जनं रसे योग्यं स्तन्यवृद्धिकरं परम् ॥ ९७ ॥

अथ स्रोतोऽञ्जनलक्षणम्।—

वल्मीकशिखराकारं भिन्ननीलाञ्जनप्रभम्।
घृष्टे च गैरिकावर्णं श्रेष्ठं स्रोतोऽञ्जनञ्च तत् ॥ ९८ ॥

अथ कम्पिल्लनामगुणाः।—

कम्पिल्लकोऽथ रक्ताङ्गो रेचनो रेचकस्तथा।
रञ्जको लोहिताङ्गश्च कम्पिल्लो रक्तचूर्णकः ॥ ९९ ॥
कम्पिल्लको विरेची स्यात् कटूष्णो व्रणनाशनः।
कफकासार्त्तिहारो च जन्तुक्रिमिहरो लघुः ॥ १०० ॥

( हिं कम्बीला। गो कमलागुंड़ि। )

अथ तुत्थनामगुणाः।—

तुत्थं नीलाश्मजं नीलं हरिताश्मञ्च तुत्थकम्।
मयूरग्रीवकञ्चैव ताम्रगर्भामृतोद्भवम्।
मयूरतुत्थं सम्प्रोक्तं शिखिकण्ठं दशाह्वयम् ॥ १०१ ॥
तुत्थं कटु कषायोष्णं श्वित्रनेत्रामयापहम्।
विषदोषेषु सर्वेषु प्रशस्तं वान्तिकारकम् ॥ १०२ ॥

( मं तुत्थ। कं मयूरतुत्थ। गो तुंते। )

---

* मुनिसम्मिताह्वं सप्तसंज्ञकम्।

अथ खर्परीनामगुणाः ।—

द्वितीयं खर्परीतुत्थं खर्परी रसकं तथा ।
चक्षुष्यमम्रलोत्थं तुत्थखर्परिका तु षट् ॥ १०३ ॥
खर्परी कटुका तिक्ता चक्षुष्या च रसायनी ।
त्वग्दोषशमनी रुच्या दीप्या पुष्टिविवर्द्धनी ॥ १०४ ॥

अथ पारदनामगुणाः ।—

पारदो रसराजश्च रसनाथो महारसः ।
रसश्चैव महातेजा रसलोहो रसोत्तमः ॥ १०५ ॥
सूतराट् चपलो जैत्रः शिववीजं शिवस्तथा ।
अमृतश्च रसेन्द्रः स्याल्लोकेशो धूर्त्तरः प्रभुः ॥ १०६ ॥
रुद्रजो हरतेजश्च रसधातुरचिन्त्यजः ।
खेचरश्चामरः प्रोक्तो देहदो मृत्युनाशनः ॥ १०७ ॥
स्कन्दः स्कन्दांशकः सूतो देवो दिव्यरसस्तथा ।
प्रोक्तो रसायनश्रेष्ठो यशोदस्त्रिविधाह्वयः ॥ १०८ ॥*
पारदः सकलरोगनाशनः षड्रसो निखिलयोगवाहकः ।
पञ्चभूतमय एष कीर्त्तितो देहलोहपरसिद्धिदायकः ॥ १०९ ॥
मूर्च्छितो हरते व्याधीन् बद्धः खेचरसिद्धिदः ।
सर्वसिद्धिकरो नीलो निरुद्धो देहसिद्धिदः ॥ ११० ॥
विविधव्याधिभयोदयमरणजरासङ्कटेऽपि मर्त्यानाम् ।
पारं ददाति यस्मात्तस्मादयमेव पारदः कथितः ॥ १११ ॥
( मं पारद । कं पारदरसः । गो पारा । )

---

* . त्रिनिधाह्वयः नवत्रिंशतसंज्ञकः ।

अथ अभ्रकनामगुणाः ।—

अभ्रकमभ्रं भृङ्गं व्योमाम्बरमन्तरिक्षमाकाशम् ।
बहुपत्रं खमनन्तं गौरीजं गौरिजेयमिति रवयः ॥ ११२ ॥ *
श्वेत पीतं लोहितं नीलमभ्रं चातुर्विध्यं याति भिन्नक्रियार्हम् ।
श्वेतं तारे काञ्चने पीतरक्ते नीलं व्याधावग्रमग्र्यं गुणाढ्यम् ॥११३॥
( हिं आभ् । गौ अभ्र । )

अथ कृष्णाभ्रकभेदाः ।—

नीलाभ्रं दर्दुरो नागः पिनाको वज्र इत्यपि ।
चतुर्विधं भवेत्तस्य परीक्षा कथ्यते क्रमात् ॥ ११४ ॥

अथ दर्दुरादीनां लक्षणानि ।—

यद्वह्नौ निहितं तनोति नितरां भेकारवं दर्दुरो
नागः फूत्कुरुते धनुःस्वनमुपादत्ते पिनाकः किल ।
वज्रं नैव विकारमेति तदिमान्यासेवमानः क्रमात्
गुल्मी च व्रणवांश्च कुत्सितगदी नीरुक् च सञ्जायते ॥११५॥

अथ रसाभ्रकयोरुत्पत्तिः ।—

मनोजभावभावितौ यदा शिवौ परस्परम् ।
तदा किलाभ्रपारदौ गुहोद्भवौ बभूवतुः ॥ ११६ ॥

अथ स्फटीनामगुणाः ।—

स्फटी च स्फटिको प्रोक्ता श्वेता शुभ्रा च रङ्गदा ।
रङ्गदृढा दृढरङ्गा रङ्गाङ्गा वसुसम्मिता ॥ ११७ ॥

---

* रवयः द्वादशाह्वयः ।

स्फटी च कटुका स्निग्धा कषाया प्रदरापहा ।
मेहकृच्छ्रवमीशोष-दोषघ्नी दृढ़रङ्गदा ॥ ११८ ॥

( मं, कं, स्फटिको । गौ फट्किरि । )

अथ क्षुल्लकनामगुणाः ।—

क्षुल्लकः क्षुद्रशङ्खः स्यात् शम्बूको नखशङ्खकः ।
क्षुल्लकः कटुकस्तिक्तः शूलहारी च दीपनः ॥ ११९ ॥

( मं षुपटगुल्ले । गौ जोङ्गरा । )

अथ शङ्खनामगुणाः ।—

शङ्खो ह्यर्णोभवः कम्बुर्जलजः पावनध्वनिः ।
कुटिलोऽन्तर्महानादः कम्बूः पूतः सुनादकः ॥ १२० ॥
सुस्वरो दीर्घनादश्च बहुनादो हरिप्रियः ।
एवं षोड़शधा ज्ञेयो धवलो मङ्गलप्रदः ॥ १२१ ॥
शङ्खः कटुरसः शीतः पुष्टिवीर्य्यबलप्रदः ।
गुल्मशूलहरः श्वास-नाशनो विषदोषनुत् ॥ १२२ ॥

( मं, कं, शङ्ख । गौ शांक । )

अथ क्रिमिशङ्खनामगुणाः ।—

क्रिमिशङ्खः क्रिमिजलजः क्रिमिवारिरुहश्च जन्तुकम्बुश्च ।
कथितो रसवीर्य्याद्यैः कृतधीभिः शङ्खसदृशोऽयम् ॥ १२३ ॥

( गौ शामुक् । )

अथ कपर्दनामगुणाः ।—

कपर्दको वराटश्च कपर्दिश्च वराटिका ।
चराचरश्चरो वर्य्यो बालक्रीड़नकश्च सः ॥ १२४ ॥

कपर्दः कटुतिक्तोष्णः कर्णशूलव्रणापहः।
गुल्मशूलामयघ्नश्च नेत्रदोषनिकृन्तनः॥ १२५॥
( मं कवड़ी। हिं कौड़ी। गो कड़ि। )

अथ शुक्तिनामगुणाः।—

शुक्तिर्मुक्ताप्रसूश्चैव महाशुक्तिश्च शुक्तिका।
मुक्तास्फोटस्तौतिकन्तु मौक्तिकप्रसवा च सा।
ज्ञेया मौक्तिकशुक्तिश्च मुक्तामाताऽङ्कधा स्मृता॥ १२६॥ *
मुक्ताशुक्तिः कटुः स्निग्धा श्वासहृद्रोगहारिणी।
शूलप्रशमनी रुच्या मधुरा दीपनी परा॥ १२७॥
( मं मोतींसीप। कं मुक्तिनसिंपु। गो समुद्रेर वड़ झिनुक। )

अथ जलशुक्तिनामगुणाः।—

जलशुक्तिर्वारिशुक्तिः क्रिमिसूः क्षुद्रशुक्तिका।
शम्बूका जलशुक्तिश्च पुटिका तोयशुक्तिका॥ १२८॥
जलशुक्तिः कटुः स्निग्धा दीपनी गुल्मशूलनुत्।
विषदोषहरा रुच्या पाचनी बलदायिनी॥ १२९॥
( मं नेचोसींपि। कं तोरेयसिंपु। गो छोटझिनुक। )

अथ खटिनीनामगुणाः। –

खटिनी खटिका चैव खटी धवलमृत्तिका।
सितधातुः श्वेतधातुः पाण्डुमृत्पाण्डुमृत्तिका॥ १३०॥
खटिनी मधुरा तिक्ता शीतला पित्तदाहनुत्।
व्रणदोषकफास्रघ्नी नेत्ररोगनिकृन्तनी॥ १३१॥
( मं खड़ी। कं वेणीबड़ु। गो खड़ि। )

---

* अङ्कधा नवाभिधा।

अथ दुग्धपाषाणनामगुणाः ।—

दुग्धाश्मा दुग्धपाषाणः क्षीरी गोमेदसन्निभः ।
वर्णाभो दीप्तिकः सौधो दुग्धी क्षीरयवोऽपि च ॥ १३२
दुग्धपाषाणको रुच्य ईषदुष्णो ज्वरापहः ।
पित्तहृद्रोगशूलघ्नः कासाध्मानविनाशनः ॥ १३३ ॥

( मं सिरिगोला । कां रङ्गवालियहरेन्न । द्रिं श्विरगोला । गौ फुलखड़ी । )

अथ कर्पूरमणिनामगुणाः ।—

कर्पूरनामभिश्चादावन्ते च मणिवाचकः ।
कर्पूरमणिनामाऽयं युक्त्या वातादिदोषनुत् ॥ १३४ ॥

( "काफुरदाना" इति लोके । )

अथ सिकतानामगुणाः ।—

सिकता बालुका सिक्ता शीतला सूक्ष्मशर्करा ।
प्रवाहोत्था महाश्लक्ष्णा सूक्ष्मा पानीयचूर्णका ॥ १३५ ॥
बालुका मधुरा शीता सन्तापश्रमनाशिनी ।
सेकप्रयोगतश्चैव शाखाशैत्यानिलापहा ॥ १३६ ॥

( मं वालूमललु । गौ वालि । )

अथ कङ्कुष्ठनामगुणाः ।—

कङ्कुष्ठं कालकुष्ठञ्च विरङ्गं रङ्गदायकम् ।
रेचकं पुलकञ्चैव शोधकं कालपालकम् ॥ १३७ ॥
कङ्कुष्ठं च द्विधा प्रोक्तं तारहेमाभ्रकं तथा ।

कटुकं कफवातघ्नं रेचकं व्रणशूलहृत् ॥ १३८ ॥

( मं कंकुष्ठ । हिमवत्पादशिखरजे हरितालवत् पाषाणविशेषे । )

अथ विमलनामगुणाः ।—

विमलं निर्मलं स्वच्छममलं स्वच्छधातुकम् ।
बाणसंख्याभिधं प्रोक्तं तारहेम द्विधा मतम् ॥ १३९ ॥
विमलं कटुतिक्तोष्णं त्वग्दोषव्रणनाशनम् ।
रसवीर्य्यादिके तुल्यं वेधे स्याद्भिन्नवीर्य्यकम् ॥ १४० ॥

( मं, कं, विमला । गौ विमल । )

अथ आखुपाषाणनामगुणाः ।—

मूषकस्याभिधा पूर्वं पाषाणस्याभिधा ततः ।
आखुपाषाणनामाऽयं लोहसङ्करकारकः ॥ १४१ ॥

( मं उन्दिरपाषाण । गौ चुम्बुकपाथर । )

अथ रत्नानि ।—

तत्र रत्ननिरुक्तिः ।—

धनार्थिनो जनाः सर्वे रमन्तेऽस्मिन्नतीव यत् ।
ततो रत्नमिति प्रोक्तं शब्दशास्त्रविशारदैः ॥ १४२ ॥

अथ रत्नपर्य्यायाः ।—

द्रव्यं किञ्चन लक्ष्मीभोग्यं वसुवस्तुसम्पदो वृद्धिः ।
श्रीर्व्यवहार्य्यं द्रविणं धनमर्थो राः स्वापतेयं च ॥ १४३ ॥
रत्नं वसुमणिरुपलो दृषद्द्विणदीप्तवीर्य्याणि ।
रौहिणकमश्मिसारं खानिकमाकरजमित्यभिधानाः ॥ १४४ ॥

अथ माणिक्यनामगुणाः ।—

माणिक्यं शोणरत्नञ्च रत्नराड्रविरत्नकम् ।

शृङ्गारि रङ्गमाणिक्यं तरलो रत्ननायकः ॥ १४५ ॥
रागदृक् पद्मरागश्च रत्नं शोणोपलस्तथा ।
सौगन्धिकं लोहितकं कुरुविन्दं शरेन्दुकम् ॥ १४६ ॥ *
माणिक्यं मधुरं स्निग्धं वातपित्तप्रणाशनम् ।
रत्नप्रयोगप्रज्ञानां रसायनकरं परम् ॥ १४७ ॥

( गौ माणिक । )

अथ माणिक्यलक्षणम् ।—

स्निग्धं गुरुगात्रयुतं दीप्तं स्वच्छं सुरङ्गञ्च ।
इति जात्यादिमाणिक्यं कल्याणं धारणात्कुरुते ॥ १४८ ॥

अथ माणिक्यदोषकथनम् ।—

छिच्छायमभ्रपिहितं कर्कशशर्करिलं भिन्नधूम्रञ्च ।
रागविकलं विरूपं लघु माणिक्यं न धारयेद्धीमान् ॥ १४९ ॥

अथ माणिक्यभेदाः ।—

तद्रक्तं यदि पद्मरागमथ तत्पीतातिरक्तं द्विधा
जानीयात्कुरुविन्दकं यदरुणं स्यादेषु सौगन्धिकम् ।
तन्नीलं यदि नीलगन्धिकमिति ज्ञेयं चतुर्धा बुधै-
र्माणिक्यं कषघर्षणेऽप्यविकलं रागेण जात्यं जगु ॥ १५० ॥

अथ मुक्ताफलनामगुणाः ।—

मुक्ता सौम्या मौक्तिकं मौक्तिकेयं तारं तारा भौतिकं तारका च ।
अम्भःसारं शीतलं नीरजञ्च नक्षत्रं स्यादिन्दुरत्नं वलक्षम् ॥ १५१ ॥

---

* शरेन्दुकं पञ्चदशसंज्ञकम् ।

मुक्ताफलं बिन्दुफलञ्च मुक्तिका
शौक्तेयकं शुक्लमणिः शशिप्रियम् ।
स्वच्छं हिमं हैमवतं सुधांशुभं
सुधांशुरत्नं शरनेत्रसम्मितम् ॥ १५२ ॥ *

मौक्तिकञ्च मधुरं सुशीतलं दृष्टिरोगशमनं विषापहम् ।
राजयक्ष्ममुखरोगनाशनं क्षीणवीर्य्यबलपुष्टिवर्द्धनम् ॥ १५३

( हिं मोती । गो मुक्ता । )

अथ मौक्तिकलक्षणम् ।—

नक्षत्राभं वृत्तमत्यन्तमुक्तं
स्निग्धं स्थूलं निर्मलं निर्व्रणञ्च ।
न्यस्तं धत्ते गौरवं यत्तुलायां
तन्निर्मूल्यं मौक्तिकं सौख्यदायि॥ १५४ ॥

यद्विच्छायं मौक्तिकं व्यङ्गकायं शुक्तिस्पर्शं रक्ततां चापि धत्ते ।
मत्स्याच्याभं रूक्षमुत्तानानिम्नं नैतद्धार्य्यं धीमता दोषदायि॥१५५॥

अथ अष्टविधमौक्तिकोत्पत्तिः ।—

मातङ्गोरगमीनपोत्रिशिरसस्त्वक्सारशङ्खाम्बुभृत्
शुक्तीनामुदराच्च मौक्तिकमणिः स्पष्टं भवत्यष्टधा ।
छायाः पाटलनीलपीतधवलास्तत्रापि सामान्यतः
समानां बहुशो न लब्धिरितरच्छौक्तेयकं तूल्बणम् ॥ १५६ ॥

अथ मौक्तिकपरीक्षा ।—

लवणक्षारक्षोदिनि पात्रे गोमूत्रपूरिते क्षिप्तम् ।
मर्दितमपि शालितुषैर्यदविकृतं तत्तु मौक्तिकं जात्यम् ॥१५७॥

---

* शरनेत्रसम्मितं पञ्चविंशत्यभिधानकम् ।

अथ उत्तमप्रवालनामगुणाः ।—

प्रवालोऽङ्गारकमणिर्विद्रुमोऽम्भोधिपल्लवः ।
भौमरत्नञ्च रक्ताङ्गो रक्ताङ्कुरो लतामणिः ॥ १५८ ॥
प्रवालो मधुरोऽम्लश्च कफपित्तादिदोषनुत् ।
वीर्य्यकान्तिकरः स्त्रीणां धृतो मङ्गलदायकः ॥ १५९ ॥

( मं प्रबाल। गौ पला, प्रबाल । हिं मुङ्गा । )

अथ प्रवाललक्षणम् ।—

शुद्धं दृढ़घनं वृत्तं स्निग्धगात्रं सुरङ्गकम् ।
समं गुरु शिराहीनं प्रवालं धारयेत् शुभम् ॥ १६० ॥

अथ कुप्रवाललक्षणम् ।—

गौररङ्गं जलाक्रान्तं वक्रं सूक्ष्मं सकोटरम् ।
रूक्षं कृष्णं लघु श्वेतं प्रवालमशुभं त्यजेत् ॥ १६१ ॥

अथ उत्तमप्रवालपरीक्षा ।—

बालार्ककिरणरक्ता सागरसलिलोद्भवा प्रवाललता ।
या न त्यजति निजरुचिं निकषे घृष्टाऽपि सा स्मृता जात्या॥१६२॥

अथ गारुत्मतनामगुणाः । ( मरकतम् ) ।—

गारुत्मतं मरकतं रौहिणेयं हरिन्मणिः ।
सौपर्णं गरुड़ाङ्कीर्णं बुधरत्नाश्मगर्भजम् ।
गरलारिर्वायवालं गारुडं रुद्रसम्मितम् ॥ १६३ ॥ *
मरकतं विषघ्नञ्च शीतलं मधुरं रसे ।
आमपित्तहरं रुच्यं पुष्टिदं भूतनाशनम् ॥ १६४ ॥

( मं मरकत। गो पाबा । )

---

* रुद्रसम्मितम् एकादशसङ्ख्यकम् ।

अथ शुभगारुत्मतलक्षणम्।—

स्वच्छं गुरु सुच्छायं स्निग्धं गात्रे च मार्दवसमेतम्।
अव्यङ्गं बहुरङ्गं शृङ्गारि मरकतं शुभं बिभ्रयात्॥ १६५॥

अथ दुष्टगारुत्मतलक्षणम्।—

शर्करिलकलिलरूक्षं मलिनं लघु हीनकान्ति कल्माषम्।
त्रासयुतं विकृताङ्गं मरकतममरोऽपि नोपभुञ्जीत॥ १६६॥

अथ गारुत्मतपरीक्षा।—

यत् शैवालशिखण्डिशाद्वलहरित्काचैश्च चाषच्छदैः
खद्योतेन च बालकीरवपुषा शैरीषपुष्पेण च।
छायाभिः समतां दधाति तदिदं निर्दिष्टमष्टात्मकं
जात्यं यत्तपनातपैश्च परितो गारुत्मतं रञ्जयेत्॥ १६७॥

अथ पुष्परागनामगुणाः।—

पीतस्तु पुष्परागः पीतस्फटिकश्च पीतरक्तश्च।
पीताश्मा गुरुरत्नं पीतमणिः पुष्परागश्च॥ १६८॥
पुष्परागोऽम्लशीतश्च वातजिद्दीपनः परः।
आयुः श्रियश्च प्रज्ञाञ्च धारणात्कुरुते नृणाम्॥ १६९॥
( भं पुष्पराग। गौ पोखराज। )

अथ पुष्परागलक्षणम्।—

सच्छायपीतगुरुगात्रसुरङ्गशुद्धं
स्निग्धञ्च निर्मलमतीव सुवृत्तशीतम्।
यः पुष्परागममलं कलयेदमुष्य
पुष्णाति कीर्त्तिमतिशौर्य्यसुखा[illegible]र्थान्॥ १७०॥

अथ दुष्टपुष्परागलक्षणम् ।—

कृष्णविन्दङ्कितं रूक्षं धवलं मलिनं लघु ।
विच्छायं शर्कराङ्गाभं पुष्परागं सदोषकम् ॥ १७१ ॥

अथ पुष्परागपरीक्षा ।—

घृष्टं निकाषपट्टे यत्पुष्यति रागमधिकमात्मीयम् ।
तेन खलु पुष्परागो जात्यतयाऽयं परीक्षकैरुक्तः ॥ १७२ ॥

अथ वज्रनामगुणाः ।—

वज्रमिन्द्रायुधं हीरं भिदुरं कुलिशं पविः ।
अभेद्यमशिरं रत्नं दृढं भार्गवकं स्मृतम् ।
षट्कोणं बहुधारञ्च शतकोट्यब्धिभूमितम् ॥ १७३ ॥ *
वज्रं च षड्रसोपेतं सर्वरोगापहारकम् ।
सर्वाघशमनं सौख्यं देहदार्ढ्यं रसायनम् ॥ १७४ ॥
( गौ हीरा । )

अथ कुवज्रलक्षणम् ।—

भस्माङ्गं काकपादञ्च रेखाक्रान्तं तु वर्त्तुलम् ।
अधारं मलिनं विन्दु-सन्त्रासं स्फुटितं तथा ।
नीलाभं चिपिटं रूक्षं तद्वज्रं दोषदं त्यजेत् ॥ १७५ ॥

अथ वज्रस्य चतुर्वर्णलक्षणम् ।—

श्वेतालोहितपीतकमेचकतया छायाश्चतस्रः क्रमात्
विप्रादित्वमिहास्य यत् सुमनसः शंसन्ति सत्यं ततः ।

---

* अब्धिभूमितं चतुर्दशसंख्यकम् ।

स्फीतां कीर्त्तिमनुत्तमां श्रियमिदं धत्ते यथास्वं धृतं
मर्त्यानामयथायथं तु कुलिशं पथ्यं हि नान्यत्ततः ॥ १७६ ॥

अथ वज्रपरीक्षा ।—

यत्पाषाणतले निकाषनिकरे नोद्घृष्यते निष्ठुरै-
र्यच्चोलूखललोहमुद्गरघनैर्लेखां न यात्याहतम् ।
यच्चान्यन्निजलीलयैव दलयेद्वज्रेण वा भिद्यते
तज्जात्यं कुलिशं वदन्ति कुशलाः श्लाघ्यं महार्घ्यञ्च तत् ॥ १७७ ॥

अथ चतुर्वर्णवज्रगुणलक्षणम् ।—

विप्रः सोऽपि रसायनेषु बलवानष्टाङ्गसिद्धिप्रदो
राजन्यस्तु नृणां वलीपलितजित् मृत्युं जयेदञ्जसा ।
द्रव्याकर्षणसिद्धिदस्तु सुतरां वैश्योऽथ शूद्रो भवेत्
सर्वव्याधिहरस्तदेष कथितो वज्रस्य वर्णो गुणः ॥ १७८ ॥

अथ नीलनामगुणाः ।—

नीलस्तु सौरिरत्नं स्यान्नीलाश्मा नीलरत्नकः ।
नीलोपलस्तृणग्राही महानीलः सुनीलकः ।
मसारमिन्द्रनीलं स्याद्गल्मर्कः पद्मरागजः ॥ १७९ ॥
नीलः सतिक्तकोष्णश्च कफपित्तानिलापहः ।
यो दधाति शरीरे स्यात् सौरिर्मङ्गलदो भवेत् ॥ १८० ॥

(:मं नील । गौ नीला । )

अथोत्तमनीललक्षणम् ।—

न निम्नो निर्मलो गात्रमसृणो गुरुदीप्तिकः ।
तृणग्राही मृदुर्नीलो दुर्लभो लक्षणान्वितः ॥ १८१ ॥

अथ कुनीललक्षणम् ।—

मृच्छर्कराश्मकलिलो विच्छायो मलिनो लघुः ।
रूक्षः स्फुटितगर्त्तश्च वर्ज्यो नीलः सदोषकः ॥ १८२ ॥

अथ नीलपरीक्षा ।—

सितशोणपीतकृष्णाश्छाया नीले क्रमादिमाः कथिताः ।
विप्रादिवर्णसिद्ध्यै धारणमस्यापि वज्रवत् फलवत् ॥ १८३ ॥

आस्यानं चन्द्रिकास्पन्दं सुन्दरं क्षीरपूरितम् ।
यः पात्रं रञ्जयत्याशु स जात्यो नील उच्यते ॥ १८४ ॥

अथ गोमेदकनामगुणाः ।—

गोमेदकस्तु गोमेदो राहुरत्नं तमोमणिः ।
स्वर्भानवः षड़ाह्वोऽयं पिङ्गस्फटिक इत्यपि ॥ १८५ ॥

गोमेदकोऽम्ल उष्णश्च वातकोपविकारजित् ।
दीपनः पाचनश्चैव धृतोऽयं पापनाशनः ॥ १८६ ॥

अथ गोमेदलक्षणम् ।—

गोमूत्राभं यन्मृदु स्निग्धमुग्धं शुद्धच्छायं गौरवं यच्च धत्ते ।
हेमारक्तं श्रीमतां योग्यमेतत् गोमेदाख्यं रत्नमाख्यान्ति सन्तः
॥ १८७ ॥

अथ गोमेदपरीक्षा ।—

पात्रे यत्र न्यस्ते पयः प्रयात्येव गोजलोज्ज्वलताम् ।
घर्षेऽप्यहीनकान्तिं गोमेदं तं बुधा विदुर्जात्यम् ॥१८८॥

अरङ्गं श्वेतकृष्णाङ्गं रेखात्रासयुतं लघु ।
विच्छायं शर्करागारं गोमेदं विबुधस्त्यजेत् ॥ १८९ ॥

अथ वैदूर्य्यनामगुणाः। ( वैदूर्य्यम् )।—

वैदूर्य्यं केतुरत्नञ्च कैतवं बालवायजम्।
प्रावृष्यमभ्रलोहञ्च खशब्दाङ्कुरकस्तथा। *
वैदूर्य्यरत्नं सम्प्रोक्तं ज्ञेयं विदूरजं तथा॥ १९० ॥
वैदूर्य्यमुष्णमम्लञ्च कफमारुतनाशनम्।
गुल्मादिदोषशमनं भूषितञ्च शुभावहम्॥ १९१ ॥
( हिं लसुनिया। )

अथ वैदूर्य्यलक्षणम्।—

एकं वेणुपलाशपेशलरुचा मायूरकण्ठत्विषा
मार्जारेक्षणपिङ्गलच्छविजुषा ज्ञेयं त्रिधा च्छायया।
यद्गात्रे गुरुतां दधाति नितरां स्निग्धन्तु दोषोज्झितं
वैदूर्य्यं विमलं वदन्ति सुधियः स्वच्छं च तच्छोभनम्॥१९२॥

अथ कुवैदूर्य्यलक्षणम्।—

विच्छायं मृच्छिलागर्भं लघु रूक्षञ्च सक्षतम्।
सत्रासं परुषं कृष्णं वैदूर्य्यं दूरतस्त्यजेत्॥ १९३ ॥

अथ वैदूर्य्यपरीक्षा।—

घृष्टं यदात्मना स्वच्छं स्वच्छायां निकषाश्मनि।
स्फुटं प्रदर्शयेदेतद्वैदूर्य्यं जात्यमुच्यते॥ १९४ ॥
[ इति नवरत्नानि। ]

अथ नवग्रहरत्नक्रमः।—

माणिक्यं पद्मबन्धोरतिविमलतमं मौक्तिकं शीतभानो-
र्माहेयस्य प्रवालं मरकतमतुलं कल्पयेदिन्दुसूनोः।

---

* बलयोरभेदं मत्वा केचित् प्रबलरोहमिति पठन्ति।

देवेज्ये पुष्परागं कुलिशमपि कवेर्नीलमन्दात्मजस्य
स्वर्भानोश्चापि गोमेदकमथ विदुरोद्भावितं किन्तु केतोः ॥१९५॥

अथ नवग्रहेषु नवरत्नगुणाः ।—

इत्थमेतानि रत्नानि तत्तदुद्देशतः क्रमात् ।
यो दद्याद्विभृयाद्वाऽपि तस्मिन् सानुग्रहा ग्रहाः ॥ १९६ ॥

अथ साधारणरत्नदोषाः ।—

सन्त्यज्य वज्रमेकं सर्वत्रान्यत्र सञ्जाते ।
लाघवमथ कोमलता साधारणदोष एव विज्ञेयः ॥१९७॥

अथ महारत्नोपरत्नानि ।—

लोहितकवज्रमौक्तिकमरकतनीला महोपलाः पञ्च ।
वैदूर्य्यपुष्परागप्रबालगोमेदकादयोऽवाञ्चः ॥ १९८ ॥
गोमेदप्रबालवायव्यं देवेज्यमणीन्दुतरणिकान्ताद्याः ।
नानावर्णगुणाढ्या विज्ञेया स्फटिकजातयः प्राज्ञैः ॥ १९९ ॥

अथ स्फटिकनामगुणाः ।—

स्फटिकः सितोपलः स्यादमलमणिर्निर्मलोपलः स्वच्छः ।
स्वच्छमणिरमलरत्नं निस्तुषरत्नं शिवप्रियं नवधा ॥ २०० ॥
स्फटिकः समवीर्य्यश्च पित्तदाहार्त्तिदोषनुत् ।
तस्याक्षमाला जपतां दत्ते कोटिगुणं फलम् ॥ २०१ ॥

अथ स्फटिकपरीक्षा ।—

यद्गङ्गातोयबिन्दुच्छविविमलतमं निस्तुषं नेत्रहृद्यं
स्निग्धं शुद्धान्तरालं मधुरमतिहिमं पित्तदाहास्रहारि ।

पाषाणैर्यन्निघृष्टं स्फुटितमपि निजां स्वच्छतां नैव जह्यात्
तज्जात्यं जात्यलभ्यं शुभमुपचिनुते वैक्रान्तं विचित्रम् ॥२०२॥

अथ सूर्य्यकान्तनामगुणाः ।—

अथ भवति सूर्य्यकान्तस्तपनमणिस्तपनश्च रविकान्तः ।
दीप्तोपलोऽग्निगर्भो ज्वलनाश्माऽर्कोपलश्च वसुनामा ॥२०३॥
सूर्य्यकान्तो भवेदुष्णो निर्मलश्च रसायनः ।
वातश्लेष्महरो मेध्यः पूजनाद्रवितुष्टिदः ॥ २०४ ॥
( गौ आतसी मणि । )

अथ सूर्य्यकान्तपरीक्षा ।—

शुद्धः स्निग्धो निर्व्रणो निस्तुषोऽन्तर्यो निर्मृष्टो व्योम्नि नैर्मल्यमेति ।
यः सूर्य्यांशुस्पर्शनिष्ठ्यूतवह्निर्जात्यः सोऽयं जायते सूर्य्यकान्तः
॥ २०५ ॥

अथ वैक्रान्तनामगुणाः ।—

वैक्रान्तं चैव विक्रान्तं नीचवज्रं कुवज्रकम् ।
गोनासः क्षुद्रकुलिशं चूर्णवज्रश्च गोनसः ॥ २०६ ॥
वज्राभावे च वैक्रान्तं रसवीर्य्यादिके समम् ।
क्षयकुष्ठविषघ्नञ्च पुष्टिदं सुरसायनम् ॥ २०७ ॥
वज्राकारतयैव प्रसह्य हरणाय सर्वरोगाणाम् ।
यद्विक्रान्तिं धत्ते तद्वैक्रान्तं बुधैरिदं कथितम् ॥ २०८ ॥
( गो चुणि । )

अथ चन्द्रकान्तनामगुणाः ।—

इन्दुकान्तश्चन्द्रकान्तश्चन्द्राश्मा चन्द्रजोपलः ।

शीताश्मा चन्द्रिकाद्रावः शशिकान्तश्च सप्तधा ॥ २०९ ॥
चन्द्रकान्तस्तु शिशिरः स्निग्धः पित्तास्रतापहृत् ।
शिवप्रीतिकरः स्वच्छो ग्रहालक्ष्मीविनाशकृत् ॥ २१० ॥

अथ चन्द्रकान्तलक्षणम् ।—

स्निग्धं श्वेतं पीतमाभासमेतं धत्ते चित्ते स्वच्छतां यन्मुनीनाम् ।
यच्च स्रावं याति चन्द्रांशुसङ्गाज्जात्यं रत्नं चन्द्रकान्ताख्यमेतत् ॥ २११ ॥

अथ राजावर्त्तनामगुणाः ।—

राजावर्त्तो नृपावर्त्तो राजन्यावर्त्तकस्तथा ।
आवर्त्तमणिरावर्त्तः स्यादित्येषः शराह्वयः ॥ २१२ ॥
राजावर्त्तः कटुः स्निग्धः शिशिरः पित्तनाशनः ।
सौभाग्यं कुरुते नृणां भूषणेषु प्रयोजितः ॥ २१३ ॥
( मं राजावर्त्त । हिं रेवटी । )

अथ राजावर्त्तपरीक्षा ।—

निर्गौरमसितमसृणं नीलं गुरु निर्मलं बहुच्छायम् ।
शिखिकण्ठसमं सौम्यं राजावर्त्तं वदन्ति जात्यमणिम् ॥ २१४ ॥

अथ पेरोजनामगुणाः ।—

पेरोजं हरिताश्मञ्च भस्माङ्गं हरितं द्विधा ।
पेरोजं सुकषायं स्यान्मधुरं दीपनं परम् ॥ २१५ ॥
स्थावरं जङ्गमञ्चैव संयोगाच्च यथा विषम् ।
तत्सर्वं नाशयेत् शीघ्रं शूलं भूतादिदोषजम् ॥ २१६ ॥
( मं पेरोज । गौ फिरोजा । )

अथ अशोधितधातुरत्नदोषाः ।--

सिद्धाः पारदमभ्रकं च विविधान् धातूंश्च लोहानि च
प्राहुः किञ्च मणीनपीह सकलान् संस्कारतः सिद्धिदान् ।
यत् संस्कारविहीनमेषु हि भवेद्‌यच्चान्यथा संस्कृतं
तन्मर्त्यं विषवन्निहन्ति तदिह ज्ञेया बुधैः संस्क्रियाः ॥ २१७ ॥

यान् संस्कृतान् शुभगुणानथ चान्यथा चेद्-
दोषांश्च यानपि दिशन्ति रसादयोऽमी ।
याश्चेह सन्ति खलु संस्कृतयस्तदेत-
न्नात्राभ्यधायि बहुविस्तरभीतिभाग्भिः ॥ २१८ ॥

इति लोहधातुरसरत्नतद्भिदाद्यभिधागुणप्रकटनस्फुटाक्षरम् ।
अवधार्य्य वर्गमिममाद्यवैद्यकप्रगुणप्रयोगकुशलो भवेद्बुधः ॥२१९॥

कुर्वन्ति ये निजगुणेन रसाध्वगेन
नृणां जरन्त्यपि वपूंषि पुनर्नवानि ।
तेषामयं निवसतिः कनकादिकानां
वर्गः प्रसिध्यति रसायनवर्गनाम्ना ॥ २२० ॥

नित्यं यस्य गुणाः किलान्तरलसत्कल्याणभूयस्तथा
चित्ताकर्षणचञ्चवस्त्रिभुवनं भूम्ना परिष्कुर्वते ।
तेनात्रैष कृते नृसिंहकृतिना नामादिचूडामणौ
संस्थामेति मितस्त्रयोदशतया वर्गः सुवर्णादिकः ॥ २२१ ॥

इति श्रीनरहरिपण्डितविरचिते निघण्टुराजापरपर्य्यायनामाभि-
धानचूडामणौ रसायनवर्गमण्डनवर्गापरपर्य्याय-
नामधेयसुवर्णादिवर्गस्त्रयोदशः ।

-०*०---

## अथ पानीयादिवर्गः ।

---

अथ पानीयनामगुणाः ।—

पानीयजीवनवनामृतपुष्कराम्भः-
पाथोऽम्बुशम्बरपयःसलिलोदकानि ।
आपः कवारुणकबन्धजलानि नीर-
कालालवारिकमलानि विषार्णसी च ॥ १ ॥

भुवनं दहनारातिर्वास्तोयं सर्वतोमुखं क्षीरम् ।
घनरसनिम्नगमेघप्रसवरसाश्चेति वह्निमिताः ॥ २ ॥

पानीयं मधुरं हिमं च रुचिदं तृष्णाविशोषापहं
मोहभ्रान्तिमपाकरोति कुरुते भुक्तान्नपक्तिं पराम् ।
निद्राऽऽलस्यनिरासनं विषहरं श्रान्तातिसन्तर्पणं
नॄणां धीबलवीर्य्यतुष्टिजननं नष्टाङ्गपुष्टिप्रदम् ॥ ३ ॥

( मं पाणी । कं नीरपसरु । गो जल । )

अथ दिव्योदकनामगुणाः ।—

दिव्योदकं खरारि स्यादाकाशसलिलं तथा ।
व्योमोदकं चान्तरिक्ष-जलं चेत्यभिधाह्वयम् ॥ ४ ॥ *

व्योमोदकं त्रिदोषघ्नं मधुरं पथ्यदं परम् ।
रुच्यं दीपनदं तृष्णा-श्रममेहापहारकम् ॥ ५ ॥

सद्योवृष्ट्यम्बु भूमिस्थं कलुषं दोषदायकम्

---

* इत्यभिधाह्वयं पञ्चनामकम् ।

चिरस्थितं लघु स्वच्छं पथ्यं स्वादु सुखावहम् ॥ ६ ॥

( मं भूईवरिलपाउसाचें उदक। गो छुष्टिर जल। )

अथ समुद्रनाम-तज्जलगुणाश्च।—

यादोनाथसमुद्रसिन्धुजलदाकूपारपाथोधयः
पारावारपयोधिसागरसरिन्नाथाश्च वारां निधिः।
अम्भोराशिसरस्वदम्बुधिनदीनाथाब्धिनित्यार्णवो-
दन्वद्वारिधिवार्धयः कधिरपांनाथोऽपि रत्नाकरः ॥ ७ ॥
सागरसलिलं विस्रं लवणं रुक्तामयप्रदं चोष्णम्।
वैवर्ण्यदोषजननं विशेषाद्धार्त्तिपित्तकरणं च ॥ ८ ॥

अथ नद्या नाम-तज्जलस्य च गुणाः।—

नदी धुनी निर्झरिणी तरङ्गिणी सरस्वती शैवलिनी समुद्रगा।
कूलंकषा कूलवती च निम्नगा शैवालिनी सिन्धुरथापगाऽपि च ॥ ९ ॥
ह्रदिनी समुद्रकान्ता सागरगा ह्रादिनी सरित्कर्षूः।
स्रोतस्विनी सुनीरा रोधोवक्रा च वाहिनी तटिनी ॥ १० ॥
नादेयं सलिलं स्वच्छं लघु दीपनपाचनम्।
रुच्यं तृष्णापहं पथ्यं मधुरं चेषदुष्णकम् ॥ ११ ॥

अथ सामान्यनदीनाम।—

गङ्गा भानुसुता रेवा चन्द्रभागा सरस्वती।
मधुमती विपाशाऽथ शोणो घर्घरकस्तथा ॥ १२ ॥
वेत्रावती चौद्रवती पयोष्णी तापी वितस्ता सरयूश्च सिन्धुः।
महाशतद्रुश्चाथ गौतमी स्यात् कृष्णा च तुङ्गा च कवेरिकन्या ॥१३॥

इत्येवमाद्याः सरितः समस्तास्तडागवापीह्रदकूपकाद्याः।
अन्येऽप्यनूपात्मकदेशभेदाः कीलाभिधानैः स्वयमूहनीयाः॥ १४॥

धाराकारादिकातोयमन्तरिक्षोद्भवं तथा।
परीक्ष्येत यथा चोक्तं ज्ञातव्यं जलवेदिभिः॥ १५॥

अथ भागीरथीनाम-तज्जलगुणाश्च।—

गङ्गा स्वर्गसरिद्वरा त्रिपथगा मन्दाकिनी जाह्नवी
पुण्या विष्णुपदी समुद्रसुभगा भागीरथी स्वर्णदी।
त्रिःस्रोता सुरदीर्घिका सुरनदी सिद्धापगा स्वर्धुनी
ज्येष्ठा जह्नुसुता च भीष्मजननी शुभ्रा च शैलेन्द्रजा॥ १६॥

शीतं स्वादु स्वच्छमत्यन्तरुच्यं पथ्यं पाक्यं पावनं पापहारि।
तृष्णामोहध्वंसनं दीपनं च प्रज्ञां दत्ते वारि भागीरथीयम्॥१७॥

अथ यमुनानाम-तज्जलगुणाश्च।—

यमुना तपनतनुजा कलिन्दकन्या यमस्वसा च कालिन्दी॥१८॥
पित्तदाहवमनश्रमापहं स्वादु वातजननं च पाचनम्।
वह्निदीपनकरं विरोचनं यामुनं जलमिदं बलप्रदम्॥ १९॥

अथ नर्मदाया नाम-तज्जलगुणाश्च।—

रेवा मेकलकन्या सोमसुता नर्मदा च विज्ञेया॥ २०॥
सलिलं लघु शीतलं सुपथ्यं कुरुते पित्तकफप्रकोपणम्।
सकलामयमर्द्दनं च रुच्यं मधुरं मेकलकन्यकासमुत्थम्॥२१॥

अथ चन्द्रभागाजलगुणाः।—

चान्द्रभागसलिलं सुशीतलं दाहपित्तशमनं च वातदम्॥ २२॥
( चन्द्रभागा काश्मीरे प्रसिद्धा। )

अथ सरस्वतीनाम-तज्जलगुणाश्च ।—

सरस्वती प्लक्षसमुद्भवा च सा वाक्प्रदा ब्रह्मसती च भारती ।
वेदाग्रणीश्चैव पयोष्णिजाता वाणी विशाला कुटिला दशाह्वा ॥२३॥

सरस्वतीजलं स्वादु पूतं सर्वरुजापहम् ।
रुच्यं दीपनदं पथ्यं देहकान्तिकरं लघु ॥ २४ ॥

अथ मधुमतीजलगुणाः ।—

चान्द्रभागगुणसाम्यदं जलं किञ्च माधुमतमग्निदीपनम् ॥ २५ ॥

( मधुमती काश्मीरनदी । )

अथ शतद्रुप्रभृतिनदीजलगुणाः ।—

शतद्रोर्विपाशायुजः सिन्धुनद्याः सुशीतं लघु स्वादु सर्वामयघ्नम् ।
जलं निर्मलं दीपनं पाचनञ्च प्रदत्ते बलं बुद्धिमेधाऽऽयुषञ्च ॥२६॥

( मं सुतद्रिः । कं विपाशासिन्धु । )

अथ शोणघर्घरकवेत्रावतीनदीजलगुणाः ।—

शोणे घर्घरके जलं तु रुचिदं सन्तापशोषापहं
पथ्यं वह्निकरं तथा च बलदं क्षीणाङ्गपुष्टिप्रदम् ।
तत्रान्या दधते जलं सुमधुरं कान्तिप्रदं पुष्टिदं
वृष्यं दीपनपाचनं बलकरं वेत्रावती तापिनी ॥ २७ ॥

( शोणनदः घर्घरनदी विन्ध्योत्तरे प्रसिद्धा ; बबंर इति केचित् ।
नेत्रवती वेत्रावतीति नाम्ना उत्तरे प्रसिद्धा । )

अथ पयोष्णीनदीजलगुणाः ।—

पयोष्णीसलिलं रुच्यं पवित्रं पापनाशनम् ।
सर्वामयहरं सौख्यं बलकान्तिप्रदं लघु ॥ २८ ॥

( पयोष्णी विन्ध्याचलदक्षिणे प्रसिद्धा । )

अथ वितस्तानदीजलगुणाः ।—

वितस्तासलिलं स्वादु त्रिदोषशमनं लघु ।
प्रज्ञाबुद्धिप्रदं पथ्यं तापजाड्यहरं परम् ॥ २९ ॥

( वितस्ता काश्मीरे प्रसिद्धा । )

अथ सरयूनदीजलगुणाः ।—

सरयूसलिलं स्वादु बलपुष्टिप्रदायकम् ॥ ३० ॥

( सरयूनदी उत्तरे प्रसिद्धा । )

अथ गोदावरीनदीनाम-तज्जलगुणाश्च ।—

गोदावरी गौतमसम्भवा सा ब्रह्माद्रिजाताऽप्यथ गौतमी च ॥३१॥
पित्तार्त्तिरक्तार्त्तिसमीरहारि पथ्यं परं दीपनपापहारि ।
कुष्ठादिदुष्टामयदोषहारि गोदावरीवारि तृषानिवारि ॥३२ ॥

( गोदावरी विन्ध्यदक्षिणे प्रसिद्धा । )

अथ कृष्णानदीनाम-तज्जलगुणाश्च ।—

कृष्णानदी कृष्णसमुद्भवा स्यात्सा कृष्णवेणाऽपि च कृष्णगङ्गा ॥३३॥
कार्ष्णं च जाड्यकरं स्वादु पूतं पित्तास्रकोपनम् ।
कृष्णवेणाजलं स्वच्छं रुच्यं दीपनपाचनम् ॥ ३४ ॥

( कृष्णगङ्गा विन्ध्यदक्षिणे प्रसिद्धा । )

अथ मलापहाभीमरथीघट्टगानदीजलगुणाः ।—

मलापहा भीमरथी च घट्टगा यथा च कृष्णाजलसाम्यदा गुणैः ।
मलापहाघट्टगयोस्तथाऽपि पथ्यं लघु स्वादुतरं सुकान्तिदम् ॥३५॥

अथ तुङ्गभद्रानदीजलगुणाः ।—

तुङ्गभद्राजलं स्निग्धं निर्मलं स्वादुदं गुरु ।

कण्डूपित्तास्रदं प्रायः सात्मेत्र पथ्यकरं परम् ॥ ३६ ॥

( तुङ्गभद्रा दक्षिणे प्रसिद्धा । )

अथ कावेरीनदीजलगुणाः ।—

कावेरीसलिलं स्वादु श्रमघ्नं लघु दीपनम् ।
दद्रुकुष्ठादिदोषघ्नं मेधाबुद्धिरुचिप्रदम् ॥ ३७ ॥

अथ नदीविशेषजलगुणाः ।—

नदीनामित्थमन्यासां देशदोषादिभेदतः ।
तत्तद्गुणादिकं वारि ज्ञातव्यं कृतबुद्धिभिः ॥ ३८ ॥

अथ देशविशेषान्नदीजलगुणाः ।—

सर्वा गुर्वी प्राङ्मुखी वाहिनी या लघ्वी पश्चाद्वाहिनी निश्चयेन ।
देशे देशे तद्गुणानां विशेषादेषा धत्ते गौरवं लाघवञ्च ॥ ३९ ॥

बिन्ध्यात्प्राची याऽप्यवाची प्रतीची
या चोदीची स्यान्नदी सा क्रमेण ।
वाताटोपं श्लेष्मपित्ताग्निलोपं
पित्तोद्रेकं पथ्यपाकञ्च धत्ते ॥ ४० ॥

हिमवति मलयाचले च बिन्ध्ये
प्रभवति सह्यगिरौ च या स्रवन्ती ।
सृजति किल शिरोरुजादिदोषा-
नपनुदतेऽपि च पारियात्रजाता ॥ ४१ ॥

अथ कालभेदान्नदीजलगुणभेदाः ।—

नद्यः प्रावृषिजास्तु पीनसकफश्वासार्त्तिकासप्रदाः
पथ्या वातकफापहाः शरदिजा हेमन्तजा बुद्धिदाः ।

सन्तापं शमयन्ति शं विदधते शैशिर्य्यवासन्तजा-
स्तृष्णादाहवमिश्रमार्त्तिशमदा ग्रीष्मे यथा सद्गुणाः ॥ ४२ ॥

अथ अनूपदेशजलगुणाः ।—

अनूपसलिलं स्वादु स्निग्धं पित्तहरं गुरु ।
तनोति पामकण्डूति-कफवातज्वरामयान् ॥ ४३ ॥

अथ जाङ्गलदेशजलगुणाः ।—

जाङ्गलसलिलं स्वादु त्रिदोषघ्नं रुचिप्रदम् ।
पथ्यं चायुर्बलवीर्य्य-पुष्टिदं कान्तिकृत्परम् ॥ ४४ ॥

अथ साधारणजलगुणाः ।—

साधारणं जलं रुच्यं दीपनं पाचनं लघु ।
श्रमतृष्णापहं वात-कफमेदोघ्नपुष्टिदम् ॥ ४५ ॥

अथ देशभूमिभेदात् जलगुणाः ।—

जातं ताम्रमृदस्तदेव सलिलं वातादिदोषप्रदं
देशाज्जाड्यकरं च दुर्जरतरं दोषावहं धूसरम् ।
वातघ्नं तु शिलाशिरोत्थममलं पथ्यं लघु स्वादु च
श्रेष्ठं श्याममृदस्त्रिदोषशमनं सर्वामयघ्नं पयः ॥ ४६ ॥

अथ ह्रदवारिगुणाः ।—

ह्रदवारि वह्निजननं मधुरं कफवातहारि पथ्यं च ॥ ४७ ॥

( श्रींहल । )

अथ प्रस्रवणजलगुणाः ।—

प्रस्रवणजलं स्वच्छं लघु मधुरं रोचनं च दीपनकृत् ॥ ४८ ॥

( मं दराचेम्याणी । कं श्रींरविनउदक । गौ झारणार जल । )

अथ तड़ागजलगुणाः।—

तड़ागसलिलं स्वादु कषायं वातदं क्रियत्॥ ४९॥ *

( मं तलावाचेम्पाणी। कं केरेयनर।)

अथ वापीजलगुणाः।—

वापीजलं तु सन्तापि वातश्लेष्मकरं गुरु॥ ५०॥ †

अथ कूपजलगुणाः।—

कफघ्नं कूपपानीयं क्षारं पित्तकरं लघु॥ ५१॥ ‡

( मं कूपजल। कं सेन्देयवापि। गौ कुयोर जल।)

अथ उद्भिदजलगुणाः।—

औद्भिदं पित्तशमनं सलिलं लघु च स्मृतम्॥ ५२॥ ¶

( मं विहरी। कं औरति।)

अथ केदारजलगुणाः।—

केदारसलिलं स्वादु विपाके दोषदं गुरु।

तदेव बद्धमुक्तन्तु विशेषाद्दोषदं भवेत्॥ ५३॥

( मं पाटाचेम्पाणी। कं कालवेय उदकउ।)

---

* प्रशस्तभूमिभागस्थो बहुसंवत्सरोषितः।
जलाशयस्तड़ागः स्यात् ताड़ागं तज्जलं स्मृतम्॥

† पाषाणैरिष्टकाभिर्वा बद्धः कूपो बृहत्तरः।
ससोपाना भवेद्वापी तज्जलं वाप्यमुच्यते॥

‡ भूमौ खातोऽल्पविस्तारो गम्भीरो मण्डलाकृतिः।
बद्धोऽबद्धः स कूपः स्यात्तदम्भः कौपमुच्यते॥

¶ विदार्य्य भूमिं निम्नां यत् महत्या धारया स्रवेत्।
तत्तोयमौद्भिदं नाम वदन्तीति महर्षयः॥

अथ हंसोदकगुणाः ।—

नादेयं नवमृद्घटेषु निहितं सन्तप्तमर्कांशुभि-
र्यामिन्यां च निविष्टमिन्दुकिरणैर्मन्दानिलान्दोलितम् ।
एलाद्यैः परिवासितं श्रमहरं पित्तोष्णदाहे विषे
मूर्च्छारक्तमदात्ययेषु च हितं शंसन्ति हंसोदकम् ॥ ५४ ॥

अथ घ्राणपीतोदकगुणाः ।—

यः पानीयं पिबति शिशिरं स्वादु नित्यं निशीथे
प्रत्यूषे वा पिबति यदि वा घ्राणरन्ध्रेण धीरः ।
सोऽयं सद्यः पतगपतिना स्पर्द्धते नेत्रशक्त्या
स्वर्गाचार्य्यं प्रहसति धिया द्वेष्टि दस्रौ च तन्वा ॥ ५५ ॥

अथ दूषितजललक्षणम् ।—

विण्मूत्रारुणनीलिकाविषहतं तप्तं घनं फेनिलं
दन्तग्राह्यमनार्त्तवं सलवणं शैवालकैः संवृतम् ।
जन्तुव्रातविमिश्रितं गुरुतरं पर्णौघपङ्काविलं
चन्द्रार्कांशुतिरोहितं च न पिबेन्नीरं जड़ं दोषलम् ॥ ५६ ॥

अथ रोगविशेषे शीताम्बुपरिवर्जनम् ।—

पार्श्वशूले प्रतिश्यायै वातदोषे नवज्वरे ।
हिक्काऽऽध्मानादिदोषेषु शीताम्बु परिवर्जयेत् ॥ ५७ ॥

अथ रोगविशेषे शृतशीतजलम् ।—

धातुक्षये रक्तविकारदोषे वान्त्यस्रमेहे विषविभ्रमेषु ।
जीर्णज्वरे शैथिलसन्निपाते जलं प्रशस्तं शृतशीतलन्तु ॥ ५८ ॥
( बं कढ़शीतपाणी । कं कादारिदनीरु । गौ ठाण्डाकरा गरमजल । )

अथ पादादिहीनतप्तजलगुणाः ।—

तप्तं पाथः पादभागेन हीनं प्रोक्तं पथ्यं वातजातामयघ्नम् ।
अर्धांशोनं नाशयेद्वातपित्तं पादप्रायं तत्तु दोषत्रयघ्नम् ॥ ५९ ॥

अथ ऋतुविशेषे पादादिहीनतप्तजलम् ।—

हेमन्ते पादहीनन्तु पादार्द्धोनन्तु शारदे ।
प्रावृड्वसन्ते शिशिरे ग्रीष्मे चार्द्धावशेषितम् ॥ ६० ॥

अथ ऋतुविशेषे ग्राह्यं कौपादिजलम् ।—

कौपं प्रास्रवणं वाऽपि शिशिरर्त्तुवसन्तयोः ।
ग्रीष्मे चौड़ं तु सेवेत दोषदं स्यादतोऽन्यथा ॥ ६१ ॥

अथ उष्णजलस्य व्यवहारनियमः ।—

तप्तं दिवा जाड्यमुपैति नक्तं नक्तं च तप्तं तु दिवा गुरु स्यात् ।
दिवा च नक्तं च नृभिस्तदात्व-तप्तं जलं युक्तमतो ग्रहीतुम् ॥६२॥*

अथ अवस्थाविशेषे शीतोष्णजलस्य हितकारिता ।—

उष्णं क्वापि क्वापि शीतं कवोष्णं
क्वापि क्वापि क्वाथशीतञ्च पाथः ।
इत्थं नृणां पथ्यमेतत् प्रयुक्तं
कालावस्थादेहसंस्थानुरोधात् ॥ ६३ ॥

अथ रात्रौ उष्णाम्बुपानस्य गुणाः ।—

अपनयति पवनदोषं दलयति कफमाशु नाशयत्यरुचिम् ।
पाचयति चान्नमनलं पुष्णाति निशीथपीतमुष्णाम्भः ॥ ६४ ॥

* दिवातप्तं रात्रिमर्ज्यम् ; रात्रितप्तं दिवावर्ज्यमित्यर्थः ।

अथ समयविशेषे जलपानगुणाः ।—

रात्रौ पीतमजीर्णदोषशमनं शंसन्ति सामान्यतः
पीतं वारि निशाऽवसानसमये सर्वामयध्वंसनम् ।
भुक्त्वा तूर्द्ध्वमिदञ्च पुष्टिजननं प्राक् चेदपुष्टिप्रदं
रुच्यं जाठरवह्निपाटवकरं पथ्यञ्च भुक्त्यन्तरे ॥६५॥

अथ जलपानविधिः ।—

अत्यम्बुपानान्न विपच्यतेऽन्नमनम्बुपानाच्च स एव दोषः ।
तस्मान्नरो वह्निविवर्द्धनार्थं मुहुर्मुहुर्वारि पिबेदभूरि ॥६६॥

अथ अन्तरीक्षजलभेदाः ।—

जलं चतुर्विधं प्राहुरन्तरिक्षोद्भवं बुधाः ।
धारं च कारकं चैव तौषारं हैममित्यपि ॥ ६७ ॥

अथ धारादीनां चतुर्णां स्वरूपम् ।—

अम्बु वर्षोद्भवं धारं कारं वर्षोपलोद्भवम् ।
नीहारतोयं तौषारं हैमं प्रातर्हिमोद्भवम् ॥ ६८ ॥

अथ धाराया भेदौ ।—

धारं च द्विविधं प्रोक्तं गाङ्गसामुद्रभेदतः ।
तत्र गाङ्गं गुणाढ्यं स्यात् अदोषं पाचनं परम् ॥६९॥

अथ गाङ्गजललक्षणम् ।—

यदा स्यादाश्विने मासि सूर्य्यः स्वातिविशाखयोः ।
तदाऽम्बु जलदैर्मुक्तं गाङ्गमुक्तं मनीषिभिः ॥ ७० ॥

अथ सामुद्रजललक्षणम् ।—

अन्यदा मृगशीर्षादि-नक्षत्रेषु यदम्बुदैः ।
अभिवृष्टमिदं तोयं सामुद्रामति शब्दितम् ॥ ७१ ॥

अथ गाङ्गजलस्य लक्षणान्तरम् ।—

धाराधरे वर्षति रौप्यपात्रे विन्यस्य शाल्योदनसिद्धपिण्डे ।
दध्नोपदिग्धे निहितं मुहूर्त्तादविक्रियं गाङ्गमथान्यथा स्यात् ॥७२॥

अथ गाङ्गजलगुणाः ।—

गाङ्गं जलं स्वादु सुशीतलं च रुचिप्रदं पित्तकफापहञ्च ।
निर्दोषमच्छं लघु तच्च नित्यं गुणाधिकं व्योम्नि गृहीतमाहुः ॥७३॥

अथ चन्द्रकान्तमणिस्रुतजलगुणाः ।—

चन्द्रकान्तोद्भवं वारि पित्तघ्नं विमलं लघु ।
मूर्च्छापित्तास्रदाहेषु हितं कासमदात्यये ॥ ७४ ॥

अथ सामुद्रजलगुणाः ।—

सामुद्रसलिलं शीतं कफवातप्रदं गुरु ।
चित्रायामाश्विने तच्च गुणाढ्यं गाङ्गवद्भवेत् ॥ ७५ ॥

अथ भूमिविशेषे पतितजलस्य गुणाः ।—

पतितं भुवि यत्तोयं गाङ्गं सामुद्रमेव वा ।
स्वस्वाश्रयवशाद्गच्छेदन्यदन्यद्रसादिकम् ॥ ७६ ॥
अम्लं च लवणं च स्यात्पतितं पार्थिवंस्थले ।
आप्ये तु मधुरं प्रोक्तं कटु तिक्तं च तैजसे ॥ ७७ ॥
कषायं वायवीये स्यादव्यक्तं नाभसे स्मृतम् ।
तत्र नाभसमेवोक्तमुत्तमं दोषवर्जितम् ॥ ७८ ॥

अथ आश्विनमासे वृष्ट्यभावस्य दोषोक्तिः ।—

यत्र चेदाश्विने मासि नैव वर्षति वारिदः ।
गाङ्गतोयविहीने स्युः काले तत्राधिका रुजः ॥ ७९ ॥

अथ सर्वावस्थायामेव जलस्य देयतानिर्देशः ।—

क्वचिदुष्णं क्वचिच्छीतं क्वचित् क्वथितशीतलम् ।
क्वचिद्भेषजसंयुक्तं न क्वचिद्वारि वार्य्यते ॥ ८० ॥

[ इति पानीयप्रकरणम् । )

अथ इक्षुभेदाः ।—

इक्षवः पञ्चधा प्रोक्ता नानावर्णगुणान्विताः ।
सितः पुण्ड्रः करङ्केक्षुः कृष्णो रक्तश्च ते क्रमात् ॥ ८१ ॥

अथ साधारण इक्षुनाम ।—

इक्षुः कर्कटको वंशः कान्तारः सुकुमारकः ।
असिपत्रो मधुतृणो वृष्यो गुड़तृणो नव ॥ ८२ ॥
( तें चेरकु । प्राकृत० ऊँस् । हिं गाण्डा, उख् । गौ आक् । )

अथ श्वेतेक्षुनामगुणाः ।—

श्वेतेक्षुस्तु सितेक्षुः स्यात्काष्ठेक्षुर्वंशपत्रकः ।
सुवंशः पाण्डुरेक्षुश्च काण्डेक्षुर्धवलेक्षुकः ॥ ८३ ॥
सितेक्षुः कठिनो रुच्यो गुरुश्च कफमूत्रकृत् ।
दीपनः पित्तदाहघ्नो विपाके कोष्णदः स्मृतः ॥ ८४ ॥
( मं पाण्ढरा ऊँस । कं बिलियकबु । गौ शादा आक् । )

अथ पुण्ड्रनामगुणाः ।—

पुण्ड्रकस्तु रसालः स्यात् रसेक्षुः सुकुमारकः ।

कर्बुरो मिश्रवर्णश्च नेपालेक्षुश्च सप्तधा ॥ ८५ ॥
पुण्ड्रोऽतिमधुरः शीतः कफकृत्पित्तनाशनः ।
दाहश्रमहरो रुच्यो रसे सन्तर्पणः परः ॥ ८६ ॥

( मं पुण्डाऊँस। कं बासरकबु। गौ पुँड़ो आक, कँाचि आब्। )

अथ करङ्कनामगुणाः।—

अन्यः करङ्कशालिः स्यादिक्षुवाटीक्षुवाटिका ।
यावनी चेक्षुयोनिश्च रसाली रसदालिका ॥ ८७ ॥
करङ्कशालिर्मधुरः शीतलो रुचिकृन्मृदुः ।
पित्तदाहहरो वृष्यस्तेजोबलविवर्द्धनः ॥ ८८ ॥

( मं रसदालि। कं रसालऊँस। )

अथ कृष्णेक्षुनामगुणाः।—

कृष्णेक्षुरिक्षुरः प्रोक्तः श्यामेक्षुः कोकिलाक्षकः ।
श्यामवंशः श्यामलेक्षुः कोकिलेक्षुश्च कथ्यते ॥ ८९ ॥
कृष्णेक्षुरुक्तो मधुरश्च पाके स्वादुः सुहृद्यः कटुको रसाढ्यः ।
त्रिदोषहारी शमवीर्य्यदश्च सुबल्यदायी बहुवीर्य्यदायी ॥ ९० ॥

( मं कालाऊँस। कं करियकबु। गौ काजलि आक्। )

अथ रक्तेक्षुनामगुणाः।—

रक्तेक्षुः सूक्ष्मपत्रश्च शोणो लोहित उत्कटः ।
मधुरो ह्रस्वमूलश्च लोहितेक्षुश्च कीर्त्तितः ॥ ९१ ॥
लोहितेक्षुश्च मधुरः पाके स्याच्छीतलो मृदुः ।
पित्तदाहहरो वृष्यस्तेजोबलविवर्द्धनः ॥ ९२ ॥

( मं लोहितवाऊँस। गौ बोम्बाइ आक्। )

अथ इक्षुमूलनाम ।—

इक्षुमूलं त्विक्षुनेत्रं तच्च मोरटकं तथा ।
वंशनेत्रं वंशमूलं मोरटं वंशपूरकम् ॥ ८३ ॥

( मं ऊँसाचेंमूल । कं कब्बिनबेरु । गौ आकेर मूल । )

अथ इक्षुदण्डमूलमध्याग्रेषु रसविशेषाः ।—

मूलादूर्द्ध्वन्तु मधुरा मध्येऽतिमधुरास्तथा ।
इक्षवस्तेऽग्रभागेषु क्रमाल्लवणनीरसाः ॥ ८४ ॥

अथ दिनस्य समयविशेषे भुक्तेक्षुगुणाः ।—

अभुक्ते पित्तहाश्चेति भुक्ते वातप्रकोपणाः ।
भुक्तमध्ये गुरुतरा इतीक्षूणां गुणास्त्रयः ॥ ८५ ॥

अथ दन्तनिष्पीड़ितेक्षोः गुणाः ।—

वृष्यो रक्तास्रपित्तश्रमशमनपटुः शीतलः श्लेष्मदोऽल्पः
स्निग्धो हृद्यश्च रुच्यो रचयति च मुदं मूत्रशुद्धिं विधत्ते ।
कान्तिं देहस्य दत्ते बलमति कुरुते वृंहणं तृप्तिदायी
दन्तैर्निष्पीड्य काण्डं मृदुयतिरसितो मोहनश्चेक्षुदण्डः ॥ ८६

( मं दान्ती पाविलेयां ऊँसाचेगुण । कं हल्लिनल्लि-
तिन्दिकबिनगुण । गौ दाँते छाड़ान
आकेरगुण । )

अन्यच्च ।—

पीयूषोपमितं त्रिदोषशमनं स्याद्दन्तनिष्पीड़ितं
तद्वच्चे-[illegible]जं तदपरं श्लेष्मानिलघ्नं कियत् ।
एतद्यातहरन्तु वातजननं जाड्यप्रतिश्यायदं
प्रोक्तं पर्य्युषितं कफानिलकरं पानीयमिक्षुद्भवम् ॥ ८७ ॥

अथ यावनालशररसगुणाः।—

मधुरं लवणक्षारं स्निग्धं सोष्णं रुचिप्रदम्।
वृष्यं वातकफघ्नं च यावनालशरात् रसम् ॥ ९८ ॥

( मं सेताचाऊँस। कं केजोलदकबु। )

अथ पक्वेक्षुरसगुणाः।—

पक्वेक्षुरसः स्निग्धः स्यात् कफवातनाशनोऽतिगुरुः।
अतिपाकेन विदाहं तनुते पित्तास्रदोषशोषांश्च ॥ ९९ ॥

( मं ताविलारस। कं, कासिदरसु। )

[ इति इक्षुप्रकरणम्। ]

अथ गुड़नाम।—

गुड़ः स्यादिक्षुसारस्तु मधुरो रसपाकजः।
शिशुप्रियः सितादिः स्यादरुणो रसजः स्मृतः ॥ १०० ॥

( मं नवागुड़ाचानामगुण। कं होसबेल्लदहेसरुगुण।
गो गुड़। )

अथ पुरातनगुड़गुणाः।—

पित्तघ्नः पवनार्त्तिजिद्रुचिकरो हृद्यस्त्रिदोषापहः
संयोगेन विशेषतो ज्वरहरः सन्तापशान्तिप्रदः।
विण्मूत्रामयशोधनोऽग्निजननः पाण्डुप्रमेहान्तकः
स्निग्धः स्वादुतरो लघुः श्रमहरः पथ्यः पुराणो गुड़ः ॥१०१॥

( मं जुनागुल। कं हलेयबेल्ल। )

अथ यावनालोत्थगुड़गुणाः।—

स्याद्यावनालरसपाकभवो गुड़ोऽयं
क्षारः कटुः सुमधुरः कफवातहारी।

पित्तप्रदः सततमेष निषेव्यमाणः
कण्डूतिकुष्ठजननोऽस्रविदाहहारी ॥ १०२ ॥
( मं कालकंवेजोपलेयांपाऊं साघागूलु । कं इसुरुगंविजोल-
दकेव्विनवेल्ल । गौ जनारेर गुड़ । )

[ इति गुड़प्रकरणम् । ]

अथ साधारणशर्करानामगुणाः ।—

शर्करोत्था तु मीनाण्डी श्वेता मत्स्यण्डिका च सा ।
अहिच्छत्रा तु सिकता सिता चैव गुड़ोद्भवा ॥ १०३ ॥
शर्करा मधुरा शीता पित्तदाहश्रमापहा ।
रक्तदोषहरा भ्रान्ति-क्रिमिकोपप्रणाशिनी ॥ १०४ ॥

अथ पञ्चेक्षुशर्करागुणाः ।—

स्निग्धा पुण्ड्रकशर्करा हितकरी क्षीणे क्षयेऽरोचके
चक्षुष्या बलवर्द्धिनी सुमधुरा रूक्षा च वंशेक्षुजा ।
वृष्या तृप्तिबलप्रदा श्रमहरा श्यामेक्षुजा शीतला
स्निग्धा कान्तिकरी रसालजनिता रक्तेक्षुजा पित्तजित् ॥१०५॥

अथ यावनालीशर्करानामगुणाः ।—

यावनाली हिमोत्पन्ना हिमानी हिमशर्करा ।
क्षुद्रशर्करिका क्षुद्रा गुन्द्रुड़ाजालबिन्दुजा ॥ १०६ ॥
हिमजा शर्करा गौल्या सोष्णा तिक्ताऽतिपिच्छिला ।
वातघ्नी सारिका रुच्या दाहपित्तास्रदायिनी ॥ १०७ ॥
( मं गुड़गुड़ा । कं तुगितु । गौ जनारेर चिनि । )

[ इति शर्कराप्रकरणम् । ]

अथ मधुशर्करानामगुणाः ।—

सितजाऽन्या शर्करजा माधवी मधुशर्करा ।
माक्षीकशर्करा प्रोक्ता सिताखण्डश्च खण्डकः ॥ १०८ ॥
सिताखण्डोऽतिमधुरश्चक्षुष्यः छर्दिनाशनः ।
कुष्ठव्रणकफश्वास-हिक्कापित्तास्रदोषनुत् ॥ १०९ ॥

( मं, कं, मालखण्ड । गौ सिताखण्ड, पाटाली । )

अथ तवराजशर्करा ।—

यवासशर्करा त्वन्या सुधा मोदकमोदकः ।
तवराजः खण्डसारः खण्डजा खण्डमोदकः ॥ ११० ॥
तवराजोऽतिमधुरः पित्तश्रमतृषापहः ।
वृष्यो विदाहमूर्च्छार्त्ति-भ्रान्तिशान्तिकरः सरः ॥ १११ ॥

( मेना इति प्रसिद्धा। )

अथ तवराजखण्डनामगुणाः ।—

तवराजोद्भवः खण्डः सुधा मोदकजस्तथा ।
खण्डजो द्रवजः सिद्ध-मोदकामृतसारजः ॥ ११२ ॥
दाहं निवारयति तापमपाकरोति
तृप्तिं नियच्छति निहन्ति च मोहमूर्च्छाम् ।
श्वासं निवारयति तर्पयतीन्द्रियाणि
शीतः सदा सुमधुरः खलु सिद्धिखण्डः ॥ ११३ ॥

( मं खण्डतवराज । कं तिसरेमालखण्ड । तें मूरनेयपाकद-मन्नखण्ड । गौ मेनारखाँड़ । )

[ इति मद्यखण्डानि । ]

अथ मधुसामान्यनाम ।—

मधु क्षौद्रं च माक्षीकं माक्षिकं कुसुमासवम् ।
पुष्पासवं पवित्रञ्च पित्र्यं पुष्परसाह्वयम् ॥ ११४ ॥
( मं जेनतुप्प । हिं सहद । तां मध । तें तेने । गौ मधु । )

अथ मधुजातयः ।—

माक्षिकं भ्रामरं क्षौद्रं पौत्तिकं छात्रकं तथा ।
आर्घ्यमौद्दालकं दालमित्यष्टौ मधुजातयः ॥ ११५ ॥

अथ माक्षिकमधुलक्षणम् ।—

नानापुष्परसाहाराः कपिला वनमक्षिकाः ।
याः स्थूलास्ताभिरुत्पन्नं मधुमाक्षिकमुच्यते ॥ ११६ ॥

अथ भ्रामरमधुलक्षणम् ।—

ये स्निग्धाञ्जनगोलाभाः पुष्पासवपरायणाः ।
भ्रमरैर्जनितं तैस्तु भ्रामरं मधु भण्यते ॥ ११७ ॥

अथ क्षौद्रमधुलक्षणम् ।—

पिङ्गला मक्षिकाः सूक्ष्माः क्षुद्रा इति हि विश्रुताः ।
ताभिरुत्पादितं यत्तु तत् क्षौद्रं मधु कथ्यते ॥ ११८ ॥

अथ पौत्तिकमधुलक्षणम् ।—

अन्नजा मक्षिकाः पिङ्गाः पुत्तिका इति कीर्त्तिताः ।
तज्जातं मधु धीमद्भिः पौत्तिकं समुदाहृतम् ॥ ११९ ॥

अथ छात्रकमधुलक्षणम् ।—

छत्राकारन्तु पटलं सरघाः पीतपिङ्गलाः ।
यत्कुर्वन्ति तदुत्पन्नं मधु छात्रकमीरितम् ॥ १२० ॥

अथ आर्घ्यमधुलक्षणम्।—

मक्षिकास्तीक्ष्णतुण्डा यास्तथा षट्पदसन्निभाः॥
तदुद्भूतं यदर्घार्हं तदार्घ्यं मधु वर्ण्यते॥ १२१॥

अथ औद्दालकमधुलक्षणम्।—

औद्दालाः कपिलाः कोटा भूमिकद्दलनाः स्मृताः।
वल्मीकान्तस्तदुत्पन्नमौद्दालकमुदीर्य्यते॥ १२२॥

अथ दालमधुलक्षणम्।—

इन्द्रनीलदलाकाराः सूक्ष्माश्चिन्वन्ति मक्षिकाः।
यद्वृक्षकोटरान्तस्थं मधु दालमिदं स्मृतम्॥ १२३॥

अथ अष्टमधुवर्णाः।—

इत्येतस्याष्टधा भेदैरुत्पत्तिः कथिता क्रमात्।
अथ वक्ष्याम्यहं तेषां वर्णवीर्य्यादिकं क्रमात्॥ १२४॥
माक्षिकं तैलवर्णं स्यात् श्वेतं भ्रामरमुच्यते।
क्षौद्रन्तु कपिलाभासं पौत्तिकं घृतसन्निभम्॥ १२५॥
आपीतवर्णं छात्रं स्यात्पिङ्गलं चार्घ्यनामकम्।
औद्दालं स्वर्णसदृशमापीतं दालमुच्यते॥ १२६॥

अथ अष्टविधमधुगुणाः।—

माक्षिकं मधुरं रूक्षं लघु श्वासादिदोषनुत्।
भ्रामरं पिच्छिलं रूक्षं मधुरं मुखजाड्यजित्॥ १२७॥
क्षौद्रं तु शीतं चक्षुष्यं पिच्छिलं पित्तवातहृत्।
पौत्तिकं मधु रूक्षोष्णमस्रपित्तादिदाहकृत्॥ १२८॥
श्वित्रमेहकृमिघ्नञ्च विद्याच्छात्रं गुणोत्तरम्।
आर्घ्यमध्वतिचक्षुष्यं कफपित्तादिदोषहृत्॥ १२९॥

औद्दालकन्तु कुष्ठादि-दोषघ्नं सर्वसिद्धिदम् ।
दालं कटु कषायाम्लं मधुरं पित्तदायि च ॥ १३० ॥

[ इति अष्टमधुगुणाः । ]

अथ नूतनपुरातनमधुगुणाः ।—

नवं मधु भवेत् स्थौल्यं नातिश्लेष्मकरं परम् ।
देहस्थौल्यापहं ग्राहि पुराणं मधु लेखनम् ॥ १३१ ॥

( मं नवाजुना । कं योसपलेयजेनतुप्पंगलु । )

अथ पक्कामममधुनोः गुणाः ।—

पक्कं दोषत्रयघ्नं मधु विविधरुजाजाड्यजिह्वाऽऽमयादि-
ध्वंसं धत्ते च रुच्यं बलमतिधृतिदं वीर्य्यवृद्धिं विधत्ते ।
आमं चेदामगुल्मामयपवनरुजापित्तदाहास्रदोषं
हन्याद्वातञ्च शोषं जनयति नियतं ध्वंसयत्यन्तवृद्धिम् ॥१३२॥

( मं ताविलाह्विरिवामधाचेगुण । कं कासिदपसियजेन-
तुप्पंदगुण । )

अथ मध्वादिगुणाः ।—

व्रणशोधनसन्धाने व्रणसंरोपणादिषु ।
साधारण्या मधु हितं तत्तुल्या मधुशर्करा ॥ १३३ ॥

अथ उष्णमधुगुणाः ।—

उष्णैः सहोष्णकाले वा स्वयमुष्णमथापि वा ।
आमं मधु मनुष्याणां विषवत्तापदायकम् ॥ १३४ ॥

अथ दुष्टमधुलक्षणम् ।—

कीटकादियुतमम्लदूषितं यच्च पर्य्युषितकं मधु स्वतः ।
कण्टकोटरगतञ्च मेचकं तच्च गेहजनितञ्च दोषकृत् ॥१३५॥

अथ निर्दोषसदोषमधुगुणाः ।—

दण्डैर्निहत्य यदुपात्तमपास्तदंशं
तादृग्विधं मधु रसायनयोगयोग्यम् ।
हिक्कागुदाङ्कुरविशोफकफव्रणादि-
दोषापहं भवति दोषदमन्यथा चेत् ॥ १३६ ॥

अथ मधुशर्करानामगुणाः ।

माध्वी सिता मधूत्पन्ना मधुजा मधुशर्करा ।
माक्षीकशर्करा चैषा क्षौद्रजा क्षौद्रशर्करा ॥ १३७ ॥
यद्गुणं यन्मधु प्रोक्तं तद्गुणा तस्य शर्करा ।
विशेषाद्बलवृष्यश्च तर्पणं क्षीणदेहिनाम् ॥ १३८ ॥

[ इति मधुप्रकरणम् । ]

अथ मद्यसामान्यनाम, तद्गुणाश्च :—

मद्यं सुरा प्रसन्ना स्यान्मदिरा वारुणी वरा ।
मत्ता कादम्बरी शीता चपला कामिनी प्रिया ॥ १३९ ॥
मदगन्धा च माध्वीकं मधु सन्धानमासवः ।
परिस्रुताऽमृता वीरा मेधावी मदनी च सा ॥ १४० ॥
सुप्रतिभा मनोज्ञा च विपाना मोदिनी तथा ।
हालाहलगुणाऽरिष्टं सरकोऽथ मधूलिका ।
मदोत्कटा महानन्दा द्वात्रिंशदभिधाः क्रमात् ॥ १४१ ॥
मद्यं सुमधुराम्लं च कफमारुतनाशनम् ।
बलदीप्तिकरं हृद्यं सरमेतन्मदावहम् ॥ १४२ ॥ *

* मद्यं तावत्त्रिविधं, गौड़ी माध्वी पैष्टिकी चेति ; तानि अन्नमद्यानि सौगन्धिकादिद्रव्यान्तरयोगतो विविधानि च ।

अन्यच्च ।—

स्याज्जातकीरसगुड़ादिकृता तु गौड़ी
पुष्पद्रवादिमधुसारमयी तु माध्वी ।
पैष्टी पुनर्विविधधान्यविकारजाता
ख्याता मदाधिकतयाऽत्र च पूर्वपूर्वा ॥ १४३ ॥

तालादिरसनिर्य्यासैः सैन्धीं हालां सुरां जगुः ।
नानाद्रव्यकदम्बेन मद्यं कादम्बरं स्मृतम् ।
सैन्धी कादम्बरी चैव द्विविधं मद्यलक्षणम् ॥ १४४ ॥

अथ गौड़ीमद्यगुणाः ।—

गौड़ी तीक्ष्णोष्णमधुरा वातहृत्पित्तकारिणी ।
बलकृद्दीपनी पथ्या कान्तिकृत्तर्पणी परा ॥ १४५ ॥

अथ माध्वीमद्यगुणाः ।—

माध्वी तु मधुरा हृद्या नात्युष्णा पित्तवातहृत् ।
पाण्डुकामलगुल्मार्शः-प्रमेहशमनी परा ॥ १४६ ॥

अथ पैष्टीगुणाः ।—

पैष्टी कटूष्णा तीक्ष्णा स्यान्मधुरा दीपनी परा ॥ १४७ ॥

अथ सैन्धीमद्यगुणाः ।—

सैन्धी शीता कषायाम्ला पित्तहृद्वातदा च सा ॥ १४८ ॥

अथ ऋतुभेदतः मद्यभेदव्यवस्था ।—

गौड़ी तु शिशिरे पेया पैष्टी हेमन्तवर्षयोः ।
शरद्ग्रीष्मवसन्तेषु माध्वी ग्राह्या न चान्यथा ॥ १४९ ॥

अथ कतिचित् मद्यगुणाः ।—

कादम्बरीशर्करजादि मद्यं सुशीतलं वृष्यकरं मदाढ्यम् ।
माध्वीसमं स्यात्तृणवृक्षजातं मद्यं सुशीतं गुरु तर्पणञ्च ॥ १५० ॥
सर्वेषां तृणवृक्षाणां निर्य्यासं शीतलं गुरु ।
मोहनं बलकृद्वृष्यं तृष्णासन्तापनाशनम् ॥ १५१ ॥
ऐक्षवं तु भवेन्मद्यं शिशिरञ्च मदोत्कटम् ।
यवधान्यकृतं मद्यं गुरु विष्टम्भदायकम् ॥ १५२ ॥
शर्कराधातकीतोये कृतं शीतं मनोहरम् ।
शार्करं कथ्यते मद्यं वृष्यं दीपनमोहनम् ॥ १५३ ॥

किञ्च ।—

अन्ये द्वादशधा मद्य-भेदानाहुर्मनीषिणः ।
उक्तेष्वन्तर्भवन्तीति नान्यैस्तु पृथगीरिताः ॥ १५४ ॥

अथ नवजीर्णमद्यगुणाः ।—

मद्यं नवं सर्वविकारहेतुः सर्वन्तु वातादिकदोषदायि ।
जीर्णन्तु सर्वं सकलामयघ्नं बलप्रदं वृष्यकरञ्च दीपनम् ॥१५५॥

अथ मद्यप्रयोगार्हनिर्देशः ।—

मद्यप्रयोगं कुर्वन्ति शूद्रादिषु महार्त्तिषु ।
द्विजैस्त्रीभिस्तु न ग्राह्यं यद्यप्युज्जीवयेन्मृतम् ॥ १५६ ॥
इत्थं वार्द्धिनदीनदह्रदसरःकुल्यादितीरान्तर-
प्रक्रान्तेक्षुगुड़ादिमाक्षिकभिदामद्यप्रभेदानपि ।

प्रागस्मात्प्रतिबुध्य नामगुणतो निर्णीतयोगौचितौ
याथातथ्यवशाद्विनिश्चितमनाः कुर्वीत वैद्यः क्रियाम् ॥१५७॥
ये रस्यमाना हि नृणां यथास्वं दोषान्निरस्यन्त्यपि दुर्निरासान् ।
तेषां रसानां वसतिः किलायं वर्गः प्रसिद्धो रसवर्गनाम्ना ॥१५८॥
निस्यन्दं दुग्धसिन्धावमृतमथ समस्तौषधीनां न दोहं
तापाह्वं नो चिकित्सामभिलषति रसं नापि दोषाकरस्य ।
लब्ध्वा यत् सौहृदय्यं जगति बुधजनस्तेन वर्गः कृतोऽस्मिन्
पानीयादिः प्रसिद्धिं व्रजति मनुमितो नामगोमौंलिरत्ने ॥१५९॥

इति श्रीनरहरिपण्डितविरचिते निघण्टुराजे
पानीयादिवर्गः चतुर्दशः ।

---

## अथ क्षीरादिवर्गः ।

अथ दुग्धनाम ।—

क्षीरं पीयूषमूधस्यं दुग्धं स्तन्यं पयोऽमृतम् ॥ १ ॥

( मं दूध । कं हालू । गौ दुध । )

अथ दध्यादिनाम ।—

क्षीरजं दधि तद्रूप्यं विरलं मस्तु तज्जलम् ॥ २ ॥

( क्षीरजं दधि । मं दहिं । कं मोसरु । तद्रूप्यं विरलं ।
मं पातालदहिं । कं नेक्षितुमोसरु । गौ दै । मस्तु मं
दहिं, चेंपाथि । कं मोसरनीरु । गौ दैएर मात् । )

अथ नवनीतनाम ( तक्रजम् ) ।—

दधिजं नवनीतं स्यात्सारो हैयङ्गवीनकम् ॥ ३ ॥

( मं, कं, लोण्णी । गौ ननी, माखन । )

अथ घृतनाम ।—

घृतमाज्यं हविः सर्पिः पवित्रं नवनीतजम् ।
अमृतं चाभिघारश्च होम्यमायुश्च तैजसम् ॥ ४ ॥

( मं तूप । कं तुप्प । गौ घि । )

स्रक्षणं स्नेहनं स्नेहः स्निग्धता स्नच्च एव च ।
अभ्यङ्गोऽभ्यञ्जनञ्चैव चोपड़श्च घृतादिकः ॥ ५ ॥

( मं चोप्पड । कं इडस्तु । )

अथ तक्रनाम ।—

तक्रं गोरसजं घोलं कालशेयविलोड़ितम् ।
दण्डाहतमरिष्टोऽम्लमुदश्विन्मथितं द्रवः ॥ ६ ॥

( मं ताक । कं मज्जिगे । गौ घोल् । )

अथ तक्रविशेषः ।—

तक्रं त्रिभागदधिसंयुतमम्बु धीरै-
स्तक्रं दधिद्विगुणवारियुतन्तु मस्तु ।
दध्यम्भसी यदि समे तदुदश्विदाहु-
स्तत्केवलं तु मथितं मुनयो वदन्ति ॥ ७ ॥

अथ गोमूत्रमलनाम ।—

गोमूत्रं गोजलं गोऽम्भो गोनिष्यन्दश्च गोद्रवः ।
गोमयं गोपुरीषं स्याद् गोविष्ठा गोमलश्च तत् ॥ ८ ॥

[ इति क्षीरादिसमस्तद्रव्यनामानि । ]

गोमहिषीछागलाविकगजतुरगखरोष्ट्रमानुषस्त्रीणाम् ।
क्षीरादिकगुणदोषौ वक्ष्ये क्रमतो यथायोगम् ॥ ९ ॥

अथ गोदुग्धगुणाः ।—

गव्यं क्षीरं पथ्यमत्यन्तरुच्यं स्वादु स्निग्धं पित्तवातामयघ्नम् ।
कान्तिप्रज्ञाबुद्धिमेधाङ्गपुष्टिं धत्ते स्पष्टं वीर्य्यवृद्धिं विधत्ते ॥१०॥

(मं गाईचेंदूध ।)

अथ महिषीदुग्धगुणाः ।—

गौल्यन्तु महिषीक्षीरं विपाके शीतलं गुरु ।
बलपुष्टिप्रदं वृष्यं पित्तदाहास्रनाशनम् ॥ ११ ॥

( मं म्हैसीचेंदूध । कं यम्मेयहालु । )

अथ अजापयोगुणाः ।—

अजानां लघुकायत्वान्नानाद्रव्यनिषेवणात् ।
नात्यम्बुपानाद्व्यायामात्सर्वव्याधिहरं पयः ॥ १२ ॥

( मं शेलीदूध । कं पुट्ट आड़िनहालु । तां जाजनगरे ।)

अथ सूक्ष्माजपयोगुणाः । –

सूक्ष्माजदुग्धेति च संवदाहं(?) गोदुग्धवीर्य्याग्स्वधिकं गुणे च ।
सुक्षीणदेहेषु च पथ्यमुक्तं स्थूलाजदुग्धं किल किञ्चिदूनम् ॥१३॥

( मं थोरेशेलिचेंदूधगुण । कं हिरिय आड़ीनहालु । )

अथाविदुग्धगुणाः ।—

आविकन्तु पयः स्निग्धं कफपित्तहरं परम् ।
स्थौल्यमेहहरं पथ्यं लोमघ्नं गुरु वृद्धिदम् ॥ १४ ॥

( मं मेंढ़िचेंदूध । कं कम्बलगुरियहालु । )

अथ हस्तिनीपयोगुणाः ।—

मधुरं हस्तिनीक्षीरं वृष्यं गुरु कषायकम् ।
स्निग्धं स्थैर्य्यकरं शीतं चक्षुष्यं बलवर्द्धनम् ॥ १५ ॥

( मं हातिणिचेंदूध । कं आनेयहालु । )

अथ अश्वीक्षीरगुणाः ।—

अश्वीक्षीरं तु रूक्षाम्लं लवणं दीपनं लघु ।
देहस्थैर्य्यकरं बल्यं गौरवं कान्तिकृत्परम् ॥ १६ ॥

( मं घोड़ीचेंदूध । )

अथ गर्दभीक्षीरगुणाः ।—

बलकृद्गर्दभीक्षीरं वातश्वासहरं परम् ।
मधुराम्लरसं रूक्षं दीपनं पथ्यदं स्मृतम् ॥ १७ ॥

( मं गाढ़वीचेंदुध । कं कत्तेयहालु । )

अथ उष्ट्रीपयोगुणाः ।—

उष्ट्रीक्षीरं कुष्ठशोफापहं तत्पित्तार्शोघ्नं तत्कफाटोपहारि ।
आनाहार्त्तिजन्तुगुल्मोदराख्यं श्वासोल्लासं नाशयत्याशु पीतम् ॥१८॥

( मं करडोंदूध । कं औंठियहालु । )

अथ मानुषीक्षीरगुणाः ।—

मधुरं मानुषीक्षीरं कषायञ्च हिमं लघु ।
चक्षुष्यं दीपनं पथ्यं पाचनं रोचनं च तत् ॥ १९ ॥

( मं स्त्रीचेंदूध । कं हेङ्गुसिनहालु । )

[ इति एकादशक्षीरगुणाः । ]

अथामपक्वदुग्धगुणाः ।—

क्षीरं कासश्वासकोपाय सर्वं गुर्वामं स्यात्प्रायशो दोषदायि ।
तच्चेत्सम्यक् वर्त्तितं पथ्यमुक्तं नारीक्षीरं त्वाममेवामयघ्नम् ॥ २० ॥
( मं हिरवेंताविलेंदूध । कं बिसियद्दालकासिदद्दालु । )

अथ धारोष्णक्षीरगुणाः ।—

उक्तं गव्यादिकं दुग्धं धारोष्णममृतोपमम् ।
सर्वामयहरं पथ्यं चिरसंस्थं तु दोषदम् ॥ २१ ॥

अन्यच्च ।—

केऽप्याविकं पथ्यतमं शृतोष्णं क्षीरं त्वजानां शृतशीतमाहुः ।
दोहान्तशीतं महिषीपयश्च गव्यं तु धारोष्णमिदं प्रशस्तम् ॥२२॥

अथ कालविशेषे वयोविशेषे च पीतक्षीरगुणाः ।—

वृष्यं बृंहणमग्निवर्द्धनकरं पूर्वाह्णपीतं पयो
मध्याह्ने बलदायकं कफहरं कृच्छ्रस्य विच्छेदकम् ।
बाल्ये वह्निकरं ततो बलकरं वीर्य्यप्रदं वार्द्धके
रात्रौ क्षीरमनेकदोषशमनं सेव्यं ततः सर्वदा ॥ २३ ॥

अथ दीर्घकालमपक्वदुग्धदोषाः ।—

क्षीरं मुहूर्त्तत्रितयोषितं यदतप्तमेतद्विकृतिं प्रयाति ।
उष्णं तु दोषं कुरुते तदुष्ट्रं विषोपमं स्यादुषितं दशानाम् ॥२४॥

अथ ज्वरे दुग्धप्रयोगस्य गुणदोषौ ।

जीर्णज्वरे कफे क्षीणे क्षीरं स्यादमृतोपमम् ।
तदेव तरुणे पीतं विषवद्धन्ति मानुषम् ॥ २५ ॥

अथ जलसहितपक्वक्षीरगुणाः ।—

चतुर्थभागं सलिलं निधाय यत्नाद् यदावर्त्तितमुत्तमं तत् ।
सर्वामयघ्नं बलपुष्टिकारि वीर्य्यप्रदं क्षीरमतिप्रशस्तम् ॥२६॥

अथ कालविशेषे दुग्धविशेषः ।—

गव्यं पूर्वाह्णकाले स्यादपराह्णे तु माहिषम् ।
क्षीरं सशर्करं पथ्यं यद्वा सात्म्येन च सर्वदा ॥ २७ ॥

अथ शृतशीतादिक्षीरगुणाः ।—

पित्तघ्नं शृतशीतलं कफहरं पक्वं तदुष्णं भवे-
च्छीतं यत्तु न पाचितं तदखिलं विष्टम्भदोषप्रदम् ।
धारोष्णं त्वमृतं पयः श्रमहरं निद्राकरं कान्तिदं
वृष्यं बृंहणमग्निवर्द्धनमतिस्वादु त्रिदोषापहम् ॥ २८ ॥

अथ वर्ज्जनीयक्षीरम् ।—

क्षीरं न युञ्जीत कदाऽप्यतप्तं तप्तं न चैतल्लवणेन सार्द्धम् ।
पिष्टान्नसन्धानकमाषमुद्गकोशातकीकन्दफलादिकैश्च ॥ २९ ॥

अन्यच्च ।—

मत्स्यमांसगुडमुद्गमूलकैः कुष्ठमावहति सेवितं पयः ।
शाकजाम्बवरसैस्तु सेवितं मारयत्यबुधमाशु सर्पवत् ॥ ३० ॥

अथ क्षीरसेवनविधिः ।—

स्निग्धं शीतं गुरु क्षीरं सर्वकालं न सेवयेत् ।
दीप्ताग्निं कुरुते मन्दं मन्दाग्निं नष्टमेव च ॥ ३१ ॥
नित्यं तीव्राग्निना सेव्यं सुपक्वं माहिषं पयः ।
पुष्णन्ति धातवः सर्वे बलपुष्टिविवर्धनम् ॥ ३२ ॥

अथ नवप्रसूतायाः क्षीरदोषाः ।—

क्षीरं गवाजकादेर्मधुरं क्षारं नवप्रसूतानाम् ।
रूक्षञ्च पित्तदाहं करोति रक्तामयं कुरुते ॥ २३ ॥

( मं तानीचेंदूध । कं यलगंदियह्वालु । )

अथ मध्यचिरप्रसूतायाः क्षीरगुणदोषाः । —

मधुरं त्रिदोषशमनं क्षीरं मध्यप्रसूतानाम् ।
लवणं मधुरं क्षीरं विदाहजननं चिरप्रसूतानाम् ॥ २४ ॥

( मं पाड़सेगाईचेंदुध । कं कड़कन्दियाविनपालु । )

अथ अल्पवयस्कादीनां क्षीरगुणाः ।—

गुणहीनं निःसारं क्षीरं प्रथमप्रसूतानाम् ।
मध्यवयसां रसायनमुक्तमिदं दुर्बलं तु वृद्धानाम् ॥ २५ ॥

( मं पाढ़ उलादिदूध । कं चोचिल्लुमादलागिपालु । )

अथ गर्भिण्याः क्षीरगुणाः ।—

तासां मासत्रयादूर्द्ध्वं गुर्विणीनाञ्च यत्पयः ।
तद्धाहि लवणं क्षीरं मधुरं पित्तदोषकृत् ॥ २६ ॥

( मं गर्भिणीगायिचेंदूध । कं गब्बदाविनपालु । )

अथ देशवर्णादिविशेषात् क्षीरगुणाः ।—

गवादीनां वर्णभेदाद्गुणा दुग्धादिके पृथक् ।
कैश्चिदुक्ता विशेषाश्च विशेषो देशभेदतः ॥ २७ ॥

तथा चोक्तम् ।—

देशेषु देशेषु च तेषु तेषु तृणाम्बुनो यादृशदोषयुक्ते ।
तत्सेवनादेव गवादिकानां गुणादि दुग्धादिषु तादृशं स्मृतम् ॥२८॥

अथ कीलाटगुणाः ।—

शीतं स्निग्धं गुरुर्गौल्यं वृष्यं पित्तापहं परम् ।
ज्ञेया चैवाभिधा तस्य कीलाटन्तु पयःच्छदः ॥ ३९ ॥

[ इति क्षीरप्रकरणम् । ]

अथ गोदधिगुणाः ।—

दधि गव्यमतिपवित्रं शीतं स्निग्धञ्च दीपनं बलकृत् ।
मधुरमरोचकहारि ग्राहि च वातामयघ्नञ्च ॥ ४० ॥

( मं गाईचेंदहिं । कं आकलमोसरु । )

अथ महिषीदधिगुणाः ।—

माहिषं मधुरं स्निग्धं श्लेष्मकृद्रक्तपित्तजित् ।
बलास्रवर्द्धनं वृष्यं श्रमघ्नं शोधनं दधि ॥ ४१ ॥

( मं महिषिचेंदहिं । कं यम्मेयमोसरु । )

अथ अजादधिगुणाः ।—

दध्याजं कफवातघ्नं लघूष्णं नेत्रदोषनुत् ।
दुर्नामश्वासकासघ्नं रुच्यं दीपनपाचनम् ॥ ४२ ॥

( मं शेलिचेंदहिं । कं आडिनमोसरु । )

अथ आविकदधिगुणाः ।—

आविकं दधि सुस्निग्धं कफपित्तकरं गुरु ।
वाते च रक्तवाते च पथ्यं शोफव्रणापहम् ॥ ४३ ॥

( मं मेंढिचेंदहिं । कं कुरियमोसरु । )

अथ हस्तिनीदधिगुणाः ।—

हस्तिनीदधि कषायलघूष्णं पक्तिशूलशमनं रुचिप्रदम् ।

दीप्तिदं खलु बलासगदघ्नं वीर्य्यवर्द्धनबलप्रदमुक्तम् ॥ ४४ ॥

( मं ह्यातिणीदर्हिं । कं आनेयमींसरु । )

अथ अश्वीदधिगुणाः ।—

अश्वीदधि स्यान्मधुरं कषायं कफार्त्तिमूर्च्छाऽऽमयहारि रूक्षम् ।
वाताल्पदं दीपनकारि नेत्रदोषापहं तत्कथितं पृथिव्याम् ॥४५॥

( मं घोड़िचेंदर्हिं । कं कुदिरेयमींसरु । )

अथ गर्दभीदधिगुणाः ।—

गर्दभीदधि रूक्षोष्णं लघु दीपनपाचनम् ।
मधुराम्लरसं रुच्यं वातदोषविनाशनम् ॥ ४६ ॥

( मं गाढ़वीचेंदर्हिं । कं कत्तेयमींसरु । )

अथ उष्ट्रीदधिगुणाः ।—

औष्ट्रमर्शांसि कुष्ठानि क्रिमिशूलोदराणि च ।
निहन्ति कटुकं स्वादु किञ्चिदम्लरसं दधि ॥ ४७ ॥

( मं करढीचेंदर्हिं । कं ओंठियमींसरु । )

अथ स्त्रीदधिनामगुणाः ।—

विपाके मधुरं बल्यमम्लं सन्तर्पणं गुरु ।
चक्षुष्यं ग्रहदोषघ्नं दधि स्त्रीस्तन्यसम्भवम् ॥ ४८ ॥

( कं हेम्मेकलहालिनमींसरु । )

[ इति नवभेदं दधि । ]

अथ सामान्यदधिगुणाः ।—

दध्यम्लं गुरु वातदोषशमनं संग्राहि मूत्रावहं
बल्यं शोफकरञ्च रुच्यशमनं वक्त्रस्य शान्तिप्रदम् ।

कासश्वाससुपीनसेषु विषमे शीतज्वरे स्याद्धितं
रक्तोद्रेककरं करोति सततं शुक्रस्य वृद्धिं पराम् ॥ ४८. ॥

अन्यच्च ।—

दधि मधुरमीषदम्लं मधुराम्लं वा हितं न चात्युष्णम् ।
यावद्यावन्मधुरं दोषहरं तावदुक्तमिदम् ॥ ५० ॥

अथ दधिसेवनविधिः गुणाश्च ।—

लवणमरिचसर्पिःशर्करामुद्गधात्री-
कुसुमरसविहीनं नैतदश्नन्ति नित्यम् ।
न च शरदि वसन्ते नोष्णकाले न रात्रौ
न दधि कफविकारे पित्तदोषेऽपि नाद्यात् ॥ ५१ ॥
त्रिकटुकयुतमेतद्राजिकाचूर्णमिश्रं
कफहरमनिलघ्नं वह्निसन्धुक्षणञ्च ।
तुहिनशिशिरकाले सेवितं चातिपथ्यं
रचयति तनुदार्ढ्यं कान्तिमश्वं च नृणाम् ॥ ५२ ॥

[ इति दधिप्रकरणम् । ]

अथ मस्तुगुणाः ।—

उष्णाम्लं रुचिपक्तिदं क्लमहरं बल्यं कषायं सरं
भुक्तिच्छेदकरं तृषोदरगदप्लीहार्शसां नाशनम् ।
स्रोतःशुद्धिकरं कफानिलहरं विष्टम्भशूलापहं
पाण्डुश्वासविकारगुल्मशमनं मस्तु प्रशस्तं लघु ॥ ५३ ॥

( मं दधिचैपाणीगुण । कं [illegible] ।)

अथ तक्रत्रयगुणाः ।—

उष्णं श्लेष्मसमीरहारि मथितं तत् श्लेष्मपित्तापहं
रुच्यं प्राहुरुदश्विदाख्यमधिकं तक्रं त्रिदोषापहम् ।
मन्दाग्नावरुचौ विदाहविषमश्वासार्त्तिकासादिषु
श्रेष्ठं पथ्यतमं वदन्ति सुधियस्तक्रत्रयं ह्युत्तमम् ॥ ५४ ॥

तथा च ।—

तक्रं त्रिदोषशमनं रुचिदीपनीयं
रुच्यं वमिश्रमहरं क्लमहारि मस्तु ।
बल्यप्रदं पवननाशमुदश्विदाख्यं
शस्तं कफश्रममरुद्दमनेषु घोलम् ॥ ५५ ॥

अथ तक्रस्याम्लादिरसानां गुणाः ।—

अम्लेन वातं मधुरेण पित्तं कफं कषायेण निहन्ति सद्यः ।
यथा सुराणाममृतं हिताय तथा नराणामिह तक्रमाहुः ॥५६॥

अपि च ।—

आमातिसारे च विसूचिकायां वातज्वरे पाण्डुषु कामलेषु ।
प्रमेहगुल्मोदरवातशूले नित्यं पिबेत्तक्रमरोचके च ॥ ५७ ॥
शीतकालेऽग्निमान्द्ये च कफे पाण्ड्वामयेषु च ।
मार्गोपरोधे कुष्ठादि-व्याधौ तक्रं प्रशस्यते ॥ ५८ ॥
वातोदरी पिबेत्तक्रं पिप्पलीलवणान्वितम् ।
शर्करामरिचोपेतं स्वादु पित्तोदरी पिबेत् ॥ ५९ ॥
यवानीसैन्धवाजाजी-व्योषयुक्तं कफोदरे ।
सन्निपातोदरे तक्रं त्रिकटुक्षारसैन्धवम् ॥ ६० ॥

अथ रोगादिविशेषे तक्रस्य वर्जनीयता ।—

तक्रं दद्यान्नो चते नोष्णकाले नो दौर्बल्ये नो तृषामूर्च्छिते च ।
नैव भ्रान्तौ नैव पित्तास्रदोषे नैतद्दद्यात्सूतिकायां विशेषात् ॥६१॥

अथ अनुद्धृतोद्धृतस्नेहतक्रगुणाः ।—

तक्रं स्नेहान्वितं तुन्द-निद्राजाड्यप्रदं गुरु ।
अर्द्धावशिष्टं सामान्यं निःशेषं लघु पथ्यदम् ॥ ६२ ॥

( मं ताक । कं अलेमज्जिगे । )

[ इति तक्रप्रकरणम् । ]

अथ साधारणनवनीतगुणाः ।—

शीतं वर्णबलावहं सुमधुरं वृष्यं च संग्राहकं
वातघ्नं कफहारकं रुचिकरं सर्वाङ्गशूलापहम् ।
कासघ्नं श्रमनाशनं सुखकरं कान्तिप्रदं पुष्टिदं
चक्षुष्यं नवनीतमुद्धृतनवं गोः सर्वदोषापहम् ॥ ६३ ॥

( मं साधारणलोणियाचेंगुण । कं साधारणबेण्णिगुण । )

अथ गोमाहिष्योर्नवनीतगुणाः ।—

गव्यञ्च माहिषञ्चापि नवनीतं नवोद्भवम् ।
शस्यते बालवृद्धानां बलकृत्पुष्टिवर्द्धनम् ॥ ६४ ॥

( मं गाइम्हैसिचेंलोणी । कं आकलयम्मेयबेण्णेगुण । )

अथ माहिषनवनीतस्य विशेषगुणाः ।—

माहिषं नवनीतन्तु कषायं मधुरं रसे ।
शीतं वृष्यप्रदं ग्राहि पित्तघ्नं तु बलप्रदम् ॥ ६५ ॥

( मं महिषीच्लोणीगुण । कं एम्मेयबेण्णेगुण । )

अथ लघूजानवनीतगुणाः ।—

लघूजाजन्तु मधुरं कषायञ्च त्रिदोषनुत् ।
चक्षुष्यं दीपनं बल्यं नवनीतं हितं सदा ॥ ६६ ॥

( मं आजनगरसेलिलोणिगुण । कं दीपदाड़िबणीयगुण । )

अथ छागनवनीतगुणाः ।—

नवनीतं नवोत्थन्तु छागजं चयकासजित् ।
बल्यं नेत्रामयघ्नं च कफघ्नं दीपनं परम् ॥ ६७ ॥

( मं लोवससेलिचेंगुण । कं देसवाल आडिनबेणीयगुण । )

अथ आविकनवनीतगुणाः ।—

आविकं नवनीतन्तु विपाके तु हिमं लघु ।
योनिशूले कफे वाते दुर्नाम्नि च हितं सदा ॥ ६८ ॥

( मं एड़िकोषेंलोणीगुण । कं एलगुर्रियबेणीगुण । )

अथ एडुकनवनीतगुणाः ।—

ऐडकं नवनीतन्तु कषायं शीतलं लघु ।
मेधाहृद्गुरु पुष्यं च स्थौल्यं मन्दाग्निदीपनम् ॥ ६९ ॥

( मं मेंढ़िषेंलोणीगुण । कं कुरियबेणीगुण । )

अथ हस्तिनीनवनीतगुणाः ।—

हस्तिनीनवनीतं तु कषायं शीतलं लघु ।
तिक्तं विष्टम्भि जन्तुघ्नं हन्ति पित्तकफक्रिमीन् ॥७०॥

( मं हातिणीलोणीगुण । कं आनेयबेणीगुण । )

अथ अश्वीयनवनीतगुणाः ।—

अश्वीयं नवनीतं स्यात्कषायं कफवातजित् ।

चक्षुष्यं कटुकं चोष्णमोषद्वातापहारकम् ॥ ७१ ॥

( मं घोड़ीचेंलोणीगुण । कं कुदिरेबेणीगुण । )

अथ गर्दभीनवनीतगुणाः ।—

गर्दभीनवनीतन्तु कषायं कफवातनुत् ।
बल्यं दीपनदं पाके लघूष्णं मूत्रदोषनुत् ॥ ७२ ॥

( मं गाढ़वोचेंलोणीगुण । कं कत्तेयबेणीगुण । )

अथ उष्ट्रीनवनीतगुणाः ।—

औष्ट्रन्तु नवनीतं स्याद्विपाके लघु शीतलम् ।
व्रणक्रिमिकफास्रघ्नं वातघ्नं विषनाशनम् ॥ ७३ ॥

( मं करेंद्दीचेंलोणीगुण । कं औंठियबेणीयगुण । )

अथ नारीनवनीतगुणाः ।—

नवनीतन्तु नारीणां रुच्यं पाके लघु स्मृतम् ।
चक्षुष्यं सर्वरोगघ्नं दीपनं विषनाशनम् ॥ ७४ ॥

( मं स्त्रीचेंलोणीगुण । कं हेंगुसिनबेणीयगुण । )

अथ सद्योनवनीतगुणाः ।—

शीतं रुच्यनवोद्धृतं सुमधुरं वृष्यञ्च वातापहं
कासघ्नं क्रिमिनाशनं कफकरं संग्राहि शूलापहम् ।
बल्यं पुष्टिकरं तृषार्त्तिशमनं सन्तापविच्छेदनं
चक्षुष्यं श्रमहारि तर्पणकरं दध्युद्भवं पित्तजित् ॥ ७५ ॥

अथ पर्य्युषितनवनीतगुणाः ।—

एकाहाद्युषितं प्रोक्तमुत्तरोत्तरगन्धदम् ।

अहृद्यं सर्वरोगाढ्यं दधिजं तद्घृतं स्मृतम् ॥ ७६ ॥

( मं जुनेंलोणीतूपगुण । कं पळपवेणियगुण । )

[ इति एकादशनवनीतप्रकरणम् । ]

अथ गव्यघृतगुणाः ।—

धीकान्तिस्मृतिदायकं बलकरं मेधाप्रदं पुष्टिकृत्
वातश्लेष्महरं श्रमोपशमनं पित्तापहं हृद्यदम् ।
वह्नेर्वृद्धिकरं विपाकमधुरं वृष्यं वपुःस्थैर्यदं
गव्यं हव्यतमं घृतं बहुगुणं भोग्यं भवेद्भाग्यतः ॥ ७७ ॥

( मं गाइचेंतूप । कं आकलतुप्पउ । )

अथ माहिषीघृतगुणाः ।—

सर्पिर्माहिषमुत्तमं धृतिकरं सौख्यप्रदं कान्तिकृत्
वातश्लेष्मनिवर्हणं बलकरं वर्णप्रदाने क्षमम् ।
दुर्नामग्रहणीविकारशमनं मन्दानलोद्दीपनं
चक्षुष्यं नवगव्यतः परमिदं हृद्यं मनोहारि च ॥ ७८ ॥

( मं म्हैसीचेंतूप । कं यम्मेयतुप्पउ । )

अथ अजाघृतगुणाः ।—

आजमाज्यन्तु चक्षुष्यं दीपनं बलवर्द्धनम् ।
कासश्वासकफान्तकं राजयक्ष्मसु शस्यते ॥ ७९ ॥

( मं शेलीचेंतूप । कं आडिनतुप्पउ । )

अथ आविकघृतगुणाः ।—

पाके लघ्वाविकं सर्पिर्नवं पित्तप्रकोपणम् ।
योनिदोषेकफे वाते शोफे कम्पे च तद्धितम् ॥८०॥

( मं एडिचेंतूप । कं एलगुरियतुप्पउ । )

अथ एडकघृतगुणाः ।—

ऐडकं घृतमतीवगौरवाढ्यमेव सुकुमारदेहिनाम् ।
बुद्धिपाटवकरं बलावहं सेवितं च कुरुते नृणां वपुः ॥ ८१ ॥

( मं मेंढ़ीचेंतूप । कं लग्गिगुर्वियतुप्प । )

अथ हस्तिनीघृतगुणाः ।—

निहन्ति हस्तिनीसर्पिः कफपित्तविषक्रिमीन् ।
कषायं लघु विष्टम्भि तिक्तं चाग्निकरं परम् ॥ ८२ ॥

( मं हात्तिणीतूप ; कं कुदिरेतुप्प । )

अथ अश्वीघृतगुणाः ।—

अश्वीसर्पिस्तु कटुकं मधुरं च कषायकम् ।
ईषद्दीपनदं मूर्च्छा-हारि वाताल्पदं गुरु ॥ ८३ ॥

( मं घोड्डिचेंतूप । कं घोलिगेयतुप्प । )

अथ गर्दभीघृतगुणाः ।—

घृतं गार्दभिकं बल्यं दीपनं मूत्रदोषनुत् ।
पाके लघूष्णवीर्य्यञ्च कषायं कफनाशनम् ॥ ८४ ॥

( म गाढ़वीचेंतूप । कं कत्तेयतुप्प । )

अथ उष्ट्रीघृतगुणाः ।—

घृतमौष्ट्रन्तु मधुरं विपाके कटुशीतलम् ।
कुष्ठक्रिमिहरं वात-कफगुल्मोदरापहम् ॥ ८५ ॥

( मं करहीचेंतूप । कं ओंट्टेयतुप्प । )

अथ नारीघृतगुणाः ।—

नारीसर्पिस्तु चक्षुष्यं पथ्यं सर्वामयापहम् ।

मन्दाग्निदीपनं रुच्यं पाके लघु विषापहम् ॥ ८६ ॥

( मं स्त्रौचेंतूप । कं हेङ्गुसिनतुप्प । )

अथ पुराणघृतगुणाः ।—

मदापस्मारमूर्च्छादि-शिरःकर्णाक्षिजा रुजः ।
सर्पिः पुराणं जयति व्रणशोधनरोपणम् ॥ ८७ ॥

( मं, कं, जुनेंतूप । )

अथ साधारणघृतगुणाः ।—

आयुर्वृद्धिं वपुषि दृढतां सौकुमार्य्यं च कान्तिं
बुद्धिं धत्ते स्मृतिबलकरं शीतविध्वंसनं च ।
पथ्यं बाल्ये वयसि तरुणे वार्द्धके चातिबल्यं
नान्यत्किञ्चिज्जगति गुणदं सर्पिषः पथ्यमस्ति ॥ ८८ ॥

[ इति घृतप्रकरणम् । ]

अथ काञ्जिकनामगुणाः ।—

काञ्जिकं काञ्जिका वीरं कुल्माषाभिभवं तथा ।
अवन्तिसोमं धान्याम्लमारनालोऽम्लसारकः ॥ ८९ ॥
काञ्जिकं वातशोफघ्नं पित्तघ्नं ज्वरनाशनम् ।
दाहमूर्च्छाश्रमघ्नञ्च शूलाध्मानविबन्धनुत् ॥ ९० ॥

( मं काञ्जि । कं अम्बिल । गौ काँजि । )

अथ काञ्जितैलगुणाः ।—

काञ्जिकं काञ्जितैलञ्च पलितं वातकारकम् ।
दाहकं गात्रशैथिल्यं मर्दनान्न च भक्षणात् ॥ ९१ ॥

अथ चुक्रनामगुणाः । ( काञ्जिकभेदः ) ।—

चुक्रं सहस्रवेधञ्च रसाम्लं चक्रवेधकम् ।

शाखाम्लभेदनश्चैवमम्लसारश्च चुक्रिका ॥ ८२ ॥
चुक्रं तिक्ताम्लकं स्वादु कफपित्तविनाशनम् ।
नासिकागददुर्गन्ध-शिरोरोगहरं परम् ॥ ८३ ॥

अथ सौवीरकतुषोदकनामगुणाः ।—

सौवीरकं सुवीराम्लं ज्ञेयं गोधूमसम्भवम् ।
यवाम्लजं यवोत्थं च तुषोत्थं च तुषोदकम् ॥ ८४ ॥
सौवीरकं चाम्लरसं केश्यं मस्तकदोषजित् ।
जराशैथिल्यहरणं बलसन्तर्पणं परम् ॥ ८५ ॥
तण्डुलोत्थं तण्डुलाम्बु कषायं मधुरं लघु ।
संग्राहि विषविच्छर्दि-तृड्दाहव्रणनाशकृत् ।
तुषाम्बु दीपनं हृद्यं हृत्पाण्डुकृमिरोगनुत् ॥ ८६ ॥

( ( मं धुवरा । कं अक्किगच्चिहरे । गो गम ओ यवेर काँजि । )

अथ भक्तकाञ्जिकगुणाः ।—

अन्नोदजः शिवरसस्त्र्यहात्पर्युषिते रसे ।
दीपनो मधुराम्लस्तु दाहजिल्लघुतर्पणः ॥ ८७ ॥

( मं, कं, शिवरस । )

[ इति काञ्जिकादिप्रकरणम् । ]

अथ गोमूत्रगुणाः ।—

गोमूत्रं कटुतिक्तोष्णं कफवातहरं लघु ।
पित्तकृद्दीपनं मेध्यं त्वग्दोषघ्नं मतिप्रदम् ॥ ८८ ॥

( कं आकलगोत्तगुण । )

अथ माहिषमूत्रगुणाः ।—

माहिषं मूत्रमानाह-शोफगुल्माक्षिदोषनुत् ।

कटूष्णं कुष्ठकण्डूति-शूलोदररुजापहम् ॥ ९९ ॥

( मं म्हेसाचेंमूत । क यम्मेगोंत । )

अथ अजामूत्रगुणाः ।—

अजामूत्रं कटूष्णञ्च रूक्षं नाड़ीविषार्त्तिजित् ।
प्लीहोदरकफश्वास-गुल्मशोफहरं लघु ॥ १०० ॥

( मं सेलिचेंमूत्र । गौ छागलेर मूत । )

अथ आविकमूत्रगुणाः ।—

आविकं तिक्तकटुकं मूत्रमुष्णं च कुष्ठजित् ।
दुर्नामोदरशूलास्र-शोफमेहविषापहम् ॥ १०१ ॥

( मं आाडनगामूत्र । कं कुरीयगांमूत्र । गौ भेड़ारमूत । )

हस्तिमूत्रगुणाः ।—

हस्तिमूत्रं तु तिक्तोष्णं लवणं वातभूतनुत् ।
तिक्तं कषायं शूलघ्नं हिक्काश्वासहरं परम् ॥ १०२ ॥

( म हातिणीचेंमूत्र । कं आनेयगोमूत्र । )

अथ अश्वमूत्रगुणाः ।—

अश्वमूत्रं तु तिक्तोष्णं तीक्ष्णं च विषदोषजित् ।
वातप्रकोपशमनं पित्तकारि प्रदीपनम् ॥ १०३ ॥

( मं घोड़ेयाचेंमूत । कं कुदरेयमूत्र । )

अथ गर्दभमूत्रगुणाः ।—

खरमूत्रं कटूष्णं च क्षारं तीक्ष्णं कफापहम् ।
महावातापहं भूत-कम्पोन्मादहरं परम् ॥ १०४ ॥

( मं गाढ़वाचेंमूत । कं कत्तेयमूत्र । )

अथ उष्ट्रमूत्रगुणाः ।—

औष्ट्रकं कटु तिक्तोष्णं लवणं पित्तकोपनम् ।
बल्यं जठररोगघ्नं वातदोषविनाशनम् ॥ १०५ ॥

( मं करचौमूत्र । कं ओंठेयगोंवत । )

अथ मानुषमूत्रगुणाः ।—

मानुषं मूत्रमामघ्नं क्रिमित्रणविषार्त्तिनुत् ।
तिक्तोष्णं लवणं रूक्षं भूतत्वग्दोषवातजित् ॥ १०६ ॥

( मं नरमूत्र । )

अथ गोमूत्रसाध्यरोगाः ।—

शूलगुल्मोदरानाह-वातविच्छर्दनादिषु ।
मूत्रप्रयोगसाध्येषु गोमूत्रं कल्पयेद्बुधः ॥ १०७ ॥

[ इति नवमूत्रप्रकरणम् । ]

अथ तैलयोनयः ।—

तैलं यत्तिलसर्षपोदितकुसुम्भोत्थातसीधान्यजं
यच्चैरण्डकरञ्जकेङ्गुदिफलैर्निम्बाक्षशिग्रूस्थिभिः ।
ज्योतिष्मत्यभयोद्भवं मधुरिकाकोशाम्रचिञ्चाभवं
कर्पूरत्रपुसादिजञ्च सकलं सिद्धैः क्रमात् कथ्यते ॥ १०८ ॥

अथ तिलतैलगुणाः ।—

तिलतैलमलङ्करोति केशं मधुरं तिक्तकषायमुष्णतीक्ष्णम् ।
बलकृत्कफवातजन्तुखर्जूव्रणकण्डूतिहरं च कान्तिदायि ॥१०९॥

अथ सार्षपतैलगुणाः ।—

सर्षपतैलं तिक्तं कटूकोष्णं वातकफविकारघ्नम् ।
पित्तास्रदोषदं क्रिमिकुष्ठघ्नं तिलजवच्च चक्षुष्यम् ॥ ११० ॥

अथ कुसुम्भतैलगुणाः ।—

कुसुम्भतैलं क्रिमिहारि तेजोबलावहं यक्ष्ममलापहं च ।
त्रिदोषकृत्पुष्टिबलक्षयं च करोति कण्डूञ्च करोति दृष्टेः ॥१११॥

( गौ कुसुमवीजेर तेल । )

अथ अतसीतैलगुणाः ।—

मधुरं त्वतसीतैलं पिच्छिलं चानिलापहम् ।
मदगन्धि कषायञ्च कफकासापहारकम् ॥ ११२ ॥

( मं एसेल । कं अगसेयणे । हिं अलसीका तेल । गौ तिसिर तेल,
मसनेर तेल । )

अथ धान्यजतैलगुणाः ।—

गोधूमयावनालव्रीहियवाद्यखिलधान्यजं तैलम् ।
वातकफपित्तशमनं कण्डूकुष्ठादिहारि चक्षुष्यम् ॥ ११३ ॥

अथ एरण्डतैलगुणाः ।—

एरण्डतैलं क्रमिदोषनाशनं वातामयघ्नं सकलाङ्गशूलहृत् ।
कुष्ठापहं स्वादु रसायनोत्तमं पित्तप्रकोपं कुरुतेऽतिदीपनम् ॥११४॥

( मं आंडलकेयएणे । गौ रेड़ीर तेल । )

अथ करञ्जतैलगुणाः ।—

करञ्जतैलं नयनार्त्तिनाशनं वातामयध्वंसनमुष्णतीक्ष्णकम् ।
कुष्ठार्त्तिकण्डूतिविचर्चिकापहं लेपेन नानाविधचर्मदोषनुत् ॥११५॥

( कं हुलिगिलेयणे । गौ करम्चार तेल । )

अथ इङ्गुदीतैलगुणाः ।—

स्निग्धं स्यादिङ्गुदीतैलं मधुरं पित्तनाशनम् ।

शीतलं कान्तिदं बल्यं श्लेष्मलं केशवर्द्धनम् ॥ ११६ ॥
( मं हिङ्गुयाचेंतैल । कं हिङ्गुलयणे । )

अथ निम्बतैलगुणाः ।—

निम्बतैलं तु नात्युष्णं क्रिमिकुष्ठकफापहम् ॥ ११७ ॥
( कं बेविनेणे । )

अथ अक्षतैलगुणाः ।—

आक्षं स्वादु हिमं केश्यं गुरु पित्तानिलापहम् ॥ ११८ ॥
( मं बेहवेयाचेंतैल । कं तारिययणे । गौ बहेड़ावीजेर तेल । )

अथ शिग्रुतैलगुणाः ।—

शिग्रुतैलं कटूष्णञ्च वातजित्कफनाशनम् ।
त्वग्दोषव्रणकण्डूति-शोफहारि च पिच्छिलम् ॥ ११९ ॥
( मं सेगुतेल । कं नुगिययणे । गौ सजिनावीजेर तेल । )

अथ ज्योतिष्मतीतैलगुणाः ।—

कटु ज्योतिष्मतीतैलं तिक्तोष्णं वातनाशनम् ।
पित्तसन्तापनं मेधा-प्रज्ञाबुद्धिविवर्द्धनम् ॥ १२० ॥
( मं कें किनेणे । गौ लताफट्कीर तेल । )

अथ हरीतकीतैलगुणाः ।—

शीतं हरीतकीतैलं कषायं मधुरं कटु ।
सर्वव्याधिहरं पथ्यं नानात्वग्दोषनाशनम् ॥ १२१ ॥
( मं हिरडेल । कं अणिलेयणे । )

अथ राजिकातैलगुणाः ।—

तीक्ष्णन्तु राजिकातैलं ज्ञेयं वातादिदोषनुत् ।

शिशिरं कटु पुंस्त्वघ्नं केश्यं त्वग्दोषनाशनम् ॥ १२२ ॥

( मं मुहुरितेल । कं सासवेययणे । गौ राइसरिषार तेल । )

अथ कोशाम्रजतैलगुणाः ।—

सरं कोशाम्रजं तैलं क्रिमिकुष्ठव्रणापहम् ।
तिक्ताम्लमधुरं बल्यं पथ्यं रोचनपाचनम् ॥ १२३ ॥

( मं आंबेल । कं साबिनेणे । गौ क्याओड़ारतेल । )

अथ चिञ्चातैलगुणाः ।—

यच्च चिञ्चाभवं तैलं कटु पाके विलेखनम् ।
कफवातहरं रुच्यं कषायं नातिशीतलम् ॥ १२४ ॥

( मं पिंसीरातेल । कं चिक्कणिकेययणे । गौ काँइवीजेर तेल । )

अथ कर्पूरतैलनामगुणाः ।—

कर्पूरतैलहिमतैलसितांशुतैल-
शीताभ्रतैलतुहिनांशुसुधांशुतैलम् ।
कर्पूरतैलं कटुकोष्णकफामहारि
वातामयघ्नरददार्ढ्यदपित्तहारि ॥ १२५ ॥

( मं कपुरेयणे । गौ कर्पूरेर तेल । )

अथ त्रपुसादितैलम् ।—

त्रपुसैर्वारुकचारककुष्माण्डप्रभृतिबीजजं च यत्तैलम् ।
तन्मधुरं गुरु शिशिरं केश्यं कफपित्तनाशि कान्तिकरम् ॥१२६॥

( मं काकड़ी । कं वालुकादितैलं । तें सौंतेगुबलादि-
यंसौंते । गौ शसा, कांकुड़ इत्यादिबीजेर तेल । )

अथ अविधिप्रयुक्ततैलस्य विषतुल्यता।—

तैलं न सेवयेद्धीमान् यस्य कस्य च यद्भवेत्।
विषसाम्यगुणत्वाच्च योगी तन्न प्रयोजयेत्॥ १२७॥

उक्तञ्च।—

विषस्य तैलस्य न किञ्चिदन्तरं
मृतस्य सुप्तस्य न किञ्चिदन्तरम्।
तृणस्य दासस्य न किञ्चिदन्तरं
मूर्खस्य काष्ठस्य न किञ्चिदन्तरम्॥ १२८॥

[ इति तैलप्रकरणम्। ]

इत्थं गवादिकपयःप्रभृतिप्रपञ्च-
प्रस्ताववर्णिततिलादिकतैलजातम्।
वर्गं निसर्गललितोज्ज्वलशब्दसर्गं
बुद्ध्वा भिषक्पतिरशङ्कतया भिषज्येत्॥ १२९॥

पाता मात्मनः किल यान्ति प्रत्युपचिकीर्षया यानि।
तेषामेव निवासः परिकथितः पेयवर्ग इति कृतिभिः॥ १३०॥

पायं पायं मधुरविमलां शीतलां यस्य कीर्त्ति-
स्रोतोधारां जहति सुजना दुर्जनासङ्गदौस्थ्यम्।
वर्गस्तस्य व्रजति नरहरेर्नामनिर्माणनाम्न-
श्चूडारत्ने खलु तिथिमितः क्षीरकादिः समाप्तिम्॥ १३१॥

इति श्रीनरहरिपण्डितविरचिते राजनिघण्टौ
क्षीरादिवर्गः पञ्चदशः समाप्तः।

-०*०-

# अथ शाल्यादिवर्गः।

---

अथ धान्यप्रकरणम्।—

धान्यं भोग्यश्च भोगार्हमन्नाद्यं जीवसाधनम्।
तच्च तावत् त्रिधा ज्ञेयं शूकशिम्बीतृणाह्वयम्॥ १॥

व्रीह्यादिकं यदिह शूकसमन्वितं स्यात्
तच्छूकधान्यमथ मुद्गमकुष्टकादि।
शिम्बीनिगूढ़मिति तत्प्रवदन्ति शिम्बी-
धान्यं तृणोद्भवतया तृणधान्यमन्यत्॥ २॥
वातादिदोषशमनं लघु शूकधान्यं
तेजोबलातिशयवीर्य्यविवृद्धिदायि।
शिम्बीभवं गुरु हिमं च विबन्धदायि
वातूलकं तु शिशिरं तृणधान्यमाहुः॥ ३॥

देशे देशे शूकधान्येषु संख्या ज्ञातुं शक्या नैव तद्दैवतैर्वा।
तस्मादेषां येषु भोगोपयोगास्तान्यस्माभिर्व्याक्रियन्ते कियन्ति॥ ४॥

अथ शालिनाम ; तद्भेदाश्च।—

शालयः कलमा रुच्या व्रीहिश्रेष्ठा नृपप्रियाः।
धान्योत्तमाश्च विज्ञेयाः कैदाराः सुकुमारकाः॥५॥
राजान्नषष्टिकसितेतररक्तमुण्ड-
स्थूलाणुगन्धनिरपादिकशालिसंज्ञाः।

नीवारश्चेति दशधा भुवि शालयस्तु
तेषां क्रमेण गुणनामगणं ब्रवीमि ॥ ६ ॥

अथ राजान्नादिशालिलक्षणम् ।—

राजान्नं दीर्घशूकः खरिपुदिवसजं षष्टिको वर्णतो द्वौ
निःशूको मुण्डशालिः स्वगुणविशदितः स्वाभिधानास्त्रयोऽन्ये ।
मासैर्योऽन्यस्त्रिभिः स्यात् स भवति निरपो योऽपि वृष्ट्यम्बुसम्भू-
रेष स्याद्व्रीहिसंज्ञस्तदिति दशविधाः शालयस्तु प्रसिद्धाः ॥ ७ ॥

अथ राजान्ननामगुणाः तद्भेदाश्च ।—

शालिर्नृपान्नं राजान्नं राजार्हं दीर्घशूककम् ।
धान्यश्रेष्ठं राजधान्यं राजेष्टं दीर्घकूरकम् ॥ ८ ॥
राजान्नं तु त्रिदोषघ्नं सुस्निग्धं मधुरं लघु ।
दीपनं बलकृत्पथ्यं कान्तिदं वीर्यवर्द्धनम् ॥ ९ ॥

राजान्नं त्रिविधं स्वशूकभिदया ज्ञेयं सितं लोहितं
कृष्णं चेति रसाधिकं च तदिदं स्यादौत्तरोत्तर्य्यतः ।
त्रैविध्यादिह तण्डुलाश्च हरिताः श्वेतास्तथा लोहिताः
सामान्येन भवन्ति तेऽप्यथ गुणैः स्युः पूर्वपूर्वोत्तराः ॥१०॥

( राजान्नं कार्णाटके प्रसिद्धम् । गौ राजभोग । )

अथ षष्टिकनामगुणाः ।—

षष्टिकः षष्टिशालिः स्यात् षष्टिजः स्निग्धतण्डुलः ।
षष्टिवासरजः सोऽयं ज्ञेयो मासद्वयोद्भवः ॥ ११ ॥
गौरो नीलः षष्टिकोऽयं द्विधा स्या-
दाद्यो वृष्यः शीतलो दोषहारी ।

बल्यः पथ्यो दीपनो वीर्य्यवृद्धिं
दत्ते चास्मात्किञ्चिदूनो द्वितीयः ॥ १२ ॥
( षष्टिशालिर्मालवे प्रसिद्धः । गौ षेटेधान । )

अथ कृष्णशालिनामगुणाः ।—

कृष्णशालिः कालशालिः श्यामशालिः सितेतरः ॥ १३ ॥
कृष्णशालिस्त्रिदोषघ्नो मधुरः पुष्टिवर्द्धनः ।
वर्णकान्तिकरो बल्यो दाहजिद्वीर्य्यवृद्धिकृत् ॥ १४ ॥
( कं करियनेलु । गौ केलेधान । )

अथ रक्तशालिनामगुणाः ।—

रक्तशालिस्ताम्रशालिः शोणशालिश्च लोहितः ।
रक्तशालिः सुमधुरो लघुः स्निग्धो बलावहः ॥ १५ ॥
रुचिकृद्दीपनः पथ्यो ?खजाढ्यरुजापहः ।
सर्वामयहरो वृष्यो पित्तदाहानिलास्रजित् ॥ १६ ॥
( कं केदनेलु । तैं एर्रनिवर्णगलधान्यमु । गौ निचि दादखानि । )

अथ मुण्डशालिनामगुणाः ।—

मुण्डशालिर्मुण्डकको निःशूको यवशूकजः ॥ १७ ॥
मुण्डशालिस्त्रिदोषघ्नो मधुराम्लो बलप्रदः ॥ १८ ॥
( मं निःशूकशालि । कं मोण्डमलु । बम्० बोडुकेभात ।
गौ बोरोधान । )

अथ स्थूलशालिनामगुणाः ।—

स्थूलशालिर्महाशालिः स्थूलाङ्गः स्थूलतण्डुलः ।
एवंगन्धाढ्यशालेश्च नामान्यूह्यानि सूरिभिः ॥ १९ ॥

महाशालिः स्वादुर्मधुरशिशिरः पित्तशमनो
ज्वरं जीर्णं दाहं जठरजश्रमक्लाय शमयेत्।
शिशूनां यूनां वा यदपि जरतां वा हितकरः
सदा सेव्यः सर्वैरमलबलवीर्य्याणि कुरुते ॥ २० ॥
(मं बड़ीशालि। कं दोड्डनेलु। गौ मोटाधान।)

अथ सूक्ष्मशालिनामगुणाः।—

सूक्ष्मशालिः सूचिशालिः पीतशालिश्च सूचकः ॥ २१ ॥
सूक्ष्मशालिः सुमधुरो लघुः पित्तास्रदाहनुत्।
दीपनः पाचनश्चैव किञ्चिद्वातविकारजित् ॥ २२ ॥
(मं छोटाधान। कं सण्णनेलु। गौ सरुधान।)

अथ गन्धशालिनामगुणाः।—

गन्धशालिस्तु कल्माषो गन्धालुः कलमोत्तमः।
सुगन्धिर्गन्धबहुलः सुरभिर्गन्धतण्डुलः ॥ २३ ॥
सुगन्धशालिर्मधुरोऽतितृष्यदः पित्तश्रमास्रारुचिदाहशान्तिदः।
स्तन्यस्तु गर्भस्थिरताल्पवातदः पुष्टिप्रदश्चाल्पकफश्च बल्यदः ॥२४॥
(कं कम्पकलवी। गौ सुगन्धिधान।)

अथ निरपशालिगुणाः।— *

निरपो मधुरः स्निग्धः शीतलो दाहपित्तजित्।
त्रिदोषशमनो रुच्यः पथ्यः सर्वामयापनुत् ॥ २५ ॥
(मं रूपशालि। कं तुरुनेलु।)

* जलशून्यक्षेत्रे उत्पन्नकृष्णशालिधान्यविशेषे।

अथ व्रीहिशालिगुणाः ।—

व्रीहिर्गौरो मधुरशिशिरः पित्तहारी कषायः
स्निग्धो वृष्यः क्रमिकफहरस्तापरक्तापहश्च ।
पुष्टिं दत्ते श्रमशमनकृद्वीर्य्यवृद्धिं विधत्ते
कृष्णोऽत्यन्तं जनयति मुदं वातकृन्मोचकोऽन्यः ॥ २६ ॥
( मं सालुवे । कं केद्दयेनेलु । गौ आशुधान, आउशधान । )

अथ पृथक्शालिनामानि ।—

मण्डकः स्थूलशालिश्च स्याद्दिम्बशालिकस्तथा ।
निजातिशाणहुल्याश्च विम्बी कौसेन्दुकस्तथा ॥ २७ ॥
प्रसाधिका जीरकाख्या सश्यामा मधुरा मता ।
राजानां मौलिकस्यापि शालिः स्यादुर्वरी तथा ॥ २८ ॥
सूक्ष्मशालिः कुदितिका सुशालिर्गुरुशालयः ।
वनशालिर्गुण्डुरुकी चोरिका पङ्क्तयः पृथक् ।
एतानि शालिनामानि प्रख्यातानि प्रसिद्धतः ॥ २९ ॥

अथ व्रीहिषष्टिधान्यनाम ।—

अशोचा पाटला व्रीहिर्व्रीहिको व्रीहिधान्यकः ।
व्रीहिसंधान्यमुद्दिष्टः अर्द्धधान्यस्तु व्रीहिकः ॥ ३० ॥
गर्भे पाकषिकः षष्टिः षष्टिको बलसम्भवः ।
सुधान्यं पथ्यकारी च सुपविः प्रश्नविप्रियः ॥ ३१ ॥
( मं साठी । )

अथ कलमशालिनामगुणाः ।—

शालिस्तु कलमाद्यस्तु कलमो नाकलायकः ।
कदम्बपुष्पगन्धश्च कालजातः कलोद्भवः ॥ ३२ ॥

पित्तश्लेष्मकरो वृष्यः कलमो मधुरस्तथा ॥ ३३ ॥

( बं कलम । गो कलमाधान । )

अथ रक्तशालिनामगुणाः ।—

लोहितो रक्तशालिः स्यात् काष्ठलोहितशालयः ।
कृशाली कृषशालिस्तु रक्तशाल्यः सुशाल्यकः ॥ ३४ ॥
तृष्णाघ्नो मलकृच्छ्रघ्नो हृद्यस्तु मतिदाः परे ॥ ३५ ॥

अथ सुगन्धशालिनामगुणाः ।—

महाशालिः सुगन्धा स्यात् सुगन्धा गन्धसम्भवा ।
गन्धाढ्या गन्धमाल्या च गन्धानी गन्धमालिनी ॥ ३६ ॥
सुगन्धा मधुरा हृद्या कफपित्तज्वरास्रजित् ॥ ३७ ॥

अथ कुङ्कुमशालिनामगुणाः ।—

जलोद्भवा जलरुहा जलजाता सुजातका ।
रक्ताङ्कुलं सुकारश्च कुङ्कुमं समवर्णजा ॥ ३८ ॥
कुङ्कुमा मधुरा शीता रक्तपित्तातिसारजित् ॥ ३९ ॥

अथ तिलवासिनीशालिनामगुणाः । —

तिलजा नीलनामा स्याद्दीर्घकृष्णा सुपूजका ।
मधुरा च सुगन्धा च तिलवासी निगद्यते ॥ ४० ॥
राजादनी राजप्रिया राजभावा मुनिप्रिया ।
तिलनी तिलपर्णी च आमगन्धा प्रवासिनी ॥ ४१ ॥
कफपित्तहराः स्निग्धाः कासश्वासहराः पराः ।
शीघ्रपाककरा हृद्या लघवः शुक्रवर्द्धनाः ॥ ४२ ॥
कोमलाहारसम्भूतास्तिलवासीमहागुणाः ।
पाण्डुरोगेषु शूलेषु चामवाते प्रशस्यते ॥ ४३ ॥

अथ वल्लशालिनामगुणाः ।—

वल्लको वल्लशालिः स्यात् दीर्घस्तु शालकोपितः ।
राजप्रिया पथ्यकरा मध्यदेशसमुद्भवा ॥ ४४ ॥
वल्लिका लघवः प्रोक्ता सुखपाककरास्तथा ॥ ४५ ॥
( मं धकोडधान । )

अथ कलाटकनामगुणाः ।—

कलाटकः कबिलः स्यान्नुकसो गवड़ः स्मृतः ।
गुरुवको गुरड़कः सुखभोजी सुभोजकः ॥ ४६ ॥
कबिलो गन्धकारी च लघुपाककरोऽपि च ।
[illegible]रः स्वादुः शूलश्वासनिवारणः ।
ग्रहणीगुल्मकुष्ठघ्नो विकलो भोजने शुभः ॥ ४७ ॥
( कं कविलागवड़शालिगुण । गो पचिराजधान । )

अथ कुष्माण्डिकाशालिनामगुणाः ।—

कुष्माण्डिका कुम्भड़िका रक्ता सुमधुरा गुरुः ।
सुगन्धा दुर्जरा पीता स्थूलतण्डुलकोमला ॥ ४८ ॥
( मं कुष्माण्डशालि । )

अथ कुम्भशालिगुणाः ।—

कुम्भिका मधुरा स्निग्धा वातपित्तनिवर्हिणी ॥ ४९ ॥

अथ कौसुम्भीशालिनामगुणाः ।—

सौरभं गुण्डिकः शुण्डी कौसुम्भी कठिनोऽफलः ॥ ५० ॥
कौसुम्भी लघुपाका च वातपित्तनिबर्हिणी ॥ ५१ ॥

अथ उम्पासशालिनामगुणाः ।—

उम्पास उम्पिकाशालिर्मधुरा गुरुतण्डुला ।
बहुशूका सुगन्धाढ्या तारुण्यजनवल्लभा ॥ ५२ ॥
उम्पिका मधुरा स्निग्धा सुगन्धा च कषायका ।
पित्तश्लेष्महरा रूक्षा उम्पिकाऽनिलनाशिनी ॥ ५३ ॥

अथ पक्षिकशालिनामगुणाः ।—

पक्षिकः पक्षिलावण्यः पक्षिराजो मुनिप्रियः ।
स्थूलतण्डुलसम्भूता-गन्धो बहलगन्धकृत् ॥ ५४ ॥
( मं पांखियाशालि । )

अथ शालिविशेषाः ।—

दग्धायामवनौ जाताः शालयो लघुपाकिनः ।
किञ्चित् सतिक्ता मधुराः पाचना बलवर्द्धनाः ॥ ५५ ॥
केदारा मधुरा वृष्या बल्याः पित्तविवर्द्धनाः ।
[illegible]मला गुरवः कफनाशनाः ॥ ५६ ॥
शालयो ये च्छिन्नरुहा रूक्षास्ते बद्धवर्चसः ॥ ५७ ॥
रोप्यातिरोप्या लघवः शीघ्रपाका गुणोत्तराः ।
विदाहिनो दोषहरा बल्या मूत्रविवर्द्धनाः ॥ ५८ ॥

[ इति शालयः । ]

अथ यावनालनाम ।—

यावनालो यवनालः शिखरी हृस्वतण्डुलः ।
दीर्घनालो दीर्घशरः क्षेत्रेक्षुक्षेक्षुपत्रकः ॥ ५९ ॥

( मं सामान्यजुआरि । कं जोलदहैसर । तें जोन्नलु । वम्० मकइ, बजा, वुट । ता मक्कशोलम् । हिं मक्का ; भुट्टा । गो जनार । )

अथ श्वेतयावनालनामगुणाः ।—

धवलो यावनालस्तु पाण्डुरस्तारतण्डुलः ।
नक्षत्राकृतिविस्तारो वृत्तो मौक्तिकतण्डुलः ॥ ६० ॥
जूर्णाह्वयो देवधान्यं जूर्णलो बीजपुष्पकः ।
जूनलः पुष्पगन्धश्च सुगन्धः सेगुरुन्दकः ॥ ६१ ॥
धवलो यावनालस्तु शीत्यो बल्यस्त्रिदोषजित् ।
वृष्यो रुचिप्रदोऽर्शोघ्नः पथ्यो गुल्मव्रणापहः ॥ ६२ ॥

( मं श्वेतजुवारि । कं बिलियजोल । )

अथ तुवरनामगुणाः ।—

अथ तुवरयावनालस्तुवरश्च कषाययावनालश्च ।
स [illegible] हितलोहितस्तुवरधान्यश्च ॥ ६३ ॥
तुवरो यावनालस्तु कषायोष्णो विशोफकृत् ।
संग्राही वातशमनो विदाही शोषकारकः ॥ ६४ ॥

( मं तुरेजोंधले । कं ओगरजाल । गो रक्तजनार । )

अथ शारदयावनालगुणाः ।—

शारदो यावनालस्तु श्लेष्मदः पिच्छिलो गुरुः ।
शिशिरो मधुरो वृष्यो दोषघ्नो बलपुष्टिदः ॥ ६५ ॥

( मं कारमांगसजोंधले । कं कारजोल । )

[ इति यावनालः । ]

अथ गोधूमनामगुणाः।—

गोधूमो बहुदुग्धः स्यादपूपो म्लेच्छभोजनः।
यवनो निस्तुषः क्षीरी रसालः सुमनश्च सः॥ ६६॥
गोधूमः स्निग्धमधुरो वातघ्नः पित्तदाहकृत्।
गुरुः श्लेष्मामदो बल्यो रुचिरो वीर्य्यवर्द्धनः॥ ६७॥
( मं गहुं। कं गोधि। तें गोधुमलु। हिं गेंहूं। गौ गम्।)

अथ लघुगोधूमगुणाः।-

स्निग्धोऽन्यो लघुगोधूमो गुरुर्वृष्यः कफापहः।
आमदोषकरो बल्यो मधुरो वीर्य्यपुष्टिदः॥ ६८॥
( मं छोटागोहूं। कं सणगोधी।)

[ इति गोधूम। ]

अथ यवनामगुणाः।-

यवस्तु मेध्यः सितशूकसंज्ञो दिव्योऽक्षतः कञ्चुकिधान्यराजौ।
स्यात्तीक्ष्णशूकस्तुरगप्रियश्च शक्तुर्हयेष्टश्च पवित्रधान्यम्॥६९॥
यवः कषायो मधुरः सुशीतलः प्रमेहजित्तिक्तकफापहारकः।
अशूकमुण्डस्तु यवो बलप्रदो वृष्यश्च नृणां बहुवीर्य्यपुष्टिदः॥७०॥
( मं जव, युज। कं मुण्ड, जयवे। तें यवलनेचुधान्यमु।
तां वार्लिअरिसु। गौ यव।)

अथ वेणुजयवनामगुणाः।—

वेणुजो वेणुवीजश्च वंशजो वंशतण्डुलः।
वंशधान्यं च वंशाह्वो वेणुवंशादिधायवः॥ ७१॥

शीतः कषायो मधुरस्तु रूक्षो मेहक्रिमिश्लेष्मविषापहश्च ।
पुष्टिं च वीर्य्यञ्च बलञ्च दत्ते पित्तापहो वेणुयवः प्रशस्तः ॥७२॥
( मं वेणुजव । कं विदरक्की । तें वेदुरु विरयमु । गौ बाँशेर चाल । )

[ इति यवः । ]

अथ मुद्गनाम ।—

मुद्गस्तु सूपश्रेष्ठः स्याद्वर्णार्हश्च रसोत्तमः ।
भुक्तिप्रदो हयानन्दो भूबलो वाजिभोजनः ॥ ७३ ॥
( मं साधारणमुंग । कं हेसरेव । तें पेसलु । पञ्जा० मुंजि । हिं हारिमुं । गौः मुग । )

अथ कृष्णमुद्गनामगुणाः ।—

कृष्णमुद्गस्तु वासन्तो माधवश्च सुराष्ट्रजः ॥ ७४ ॥
कृष्णमुद्गस्त्रिदोषघ्नो मधुरो वातनाशनः ।
लघुश्च दीपनः पथ्यो बलवीर्य्याङ्गपुष्टिदः ॥ ७५ ॥
( मं करियामुंग । कं करिहेसरु । गौ कृष्णमुग । )

अथ शारदमुद्गनामगुणाः ।—

शारदस्तु हरिन्मुद्गो धूसरोऽन्यश्च शारदः ॥ ७६ ॥
हरिन्मुद्गः कषायश्च मधुरः कफपित्तहृत् ।
रक्त[illegible]ामयघ्नश्च शीतलो लघुदीपनः ॥ ७७ ॥
( मं हरियरमुंग । कं हसरुसेसरु । गौ हारिमुग । )

अथ धूसरमुद्गगुणाः ।—

तद्वच्च धूसरो मुद्गो रसवीर्य्यादिषु स्मृतः ।
कषायो मधुरो रूक्षः पित्तवातविबन्धकृत् ॥ ७८ ॥
( मं धूसरमुंग । कं पीवरमूंग । तें [illegible] । )

अथ मुद्गयूषगुणाः ।—

पित्तज्वरार्त्तिशमनं लघु मुद्गयूषं
सन्तापहारि तदरोचकनाशनञ्च ।
रक्तप्रसादनमिदं यदि सैन्धवेन
युक्तं तदा भवति सर्वरुजापहारि ॥ ७९ ॥

( मं मूंगकाढ़ा । कं हेसरुकटु । )

अथ धान्यमाषनामगुणाः ।—

माषस्तु कुरुविन्दः स्याद्धान्यवीरो वृषाकरः ।
मांसलश्च बलाढ्यश्च पितरश्च पितृजोत्तमः ॥ ८० ॥

माषः स्निग्धो बहुमलकरः शोषणः श्लेष्मकारी
वीर्य्योष्णो झटिति कुरुते रक्तपित्तप्रकोपम् ।
हन्याद्वातं गुरुबलकरो रोचनो भक्ष्यमाणः
स्वादुर्नित्यं श्रमसुखवतां सेवनीयो नराणाम् ॥ ८१ ॥

( मं उरिद । कं उडु । तें मिनुमलु । गौ माषकलाय । )

अथ राजमाषनामगुणाः ।—

राजमाषो नीलमाषो नृपमाषो नृपोचितः ॥ ८२ ॥
कफपित्तहरो रुच्यो वातकृद्बलदायकः ॥ ८३ ॥

( मं नीलउरीद । कं नीलउडु । हिं लोबिया, रेंस, बोड़ा ।
गौ बरबटी । )

[ इति माषाः । ]

अथ चणकनामगुणाः ।—

चणकस्तु हरिमन्थः स्यात्सुगन्धः कृष्णकञ्चुकः ।
बालभोज्यो वाजिभक्ष्यश्चणकः कञ्चुकी च सः ॥ ८४ ॥

चणको मधुरो रूक्षो मेहजिद्वातपित्तकृत् ।
दीप्तिवर्णकरो बल्यो रुच्यश्वाध्मानकारकः ॥ ८५ ॥

( मं चणा । कं कडले । हिं चाणा । गौ छोला । )

अथ आमचणकगुणाः ।—

आमश्चणः शीतलरुच्यकारी सन्तर्पणो दाहतृषापहारी ।
शैत्योऽश्मरीशोषविनाशकारी कषाय ईषत्कटु वीर्यकारी ॥८६॥

( मं कंचेओदे, रहिला । कं हसियकडले । गौ कांचा छोला । )

अथ कृष्णचणकगुणाः ।—

कृष्णस्तु चणकः शीतो मधुरः कासपित्तहृत् ।
पित्तातिसारकासघ्नो बल्यश्चैव रसायनः ॥ ८७ ॥

( मं करियाचणा । कं करियकडले । गौ कालछोला । )

अथ गौरचणकगुणाः ।—

चणो गौरस्तु मधुरो बलकृद्रोचनः परः ।
श्वेतो वातकरो रुच्यः पित्तघ्नः शिशिरो गुरुः ॥ ८८ ॥

( मं श्वेतचणा । कं बिलियकडले । गौ शादा छोला । )

अथ भृष्टचणकगुणाः ।—

सुभृष्टचणको रुच्यो वातघ्नो रक्तदोषकृत् ।
वीर्य्योष्णो लघुश्चैव कफशैत्यापहारकः ॥ ८९ ॥

( मं फुटाभुजा । कं हुरकडले । गौ भाजा छोला । )

अथ चणकयूषगुणाः ।—

चणस्य यूषं मधुरं कषायं कफापहं वातविकारहेतुः ।
श्वासोर्ध्वकासक्षमपीनसानां करोति नाशं बलदीपनत्वम् ॥९०॥

( मं रहिलाकरजूस )

अथ पर्य्युषितचणोदकगुणाः।—

चणोदकं चन्द्रमरीचिशीतं पीतं प्रगे पित्तरुजापहारि।
पुष्टिप्रदं नैजगुणं च पाके सन्तर्पणं मञ्जुलमाधुरीकम्॥ ८१॥

( मं रात्रिभिजलाचणाकरपाणि। कं कडलननदकडलेपनीर। गौ छोलाभिजान जल। )

अथ वनमुद्गनामगुणाः।—

मकुष्टको मयष्टश्च वनमुद्गः क्षमौलकः।
अमृतोऽरण्यमुद्गश्च वल्लीमुद्गश्च कीर्त्तितः॥ ८२॥
मकुष्टकः कषायः स्यान्मधुरो रक्तपित्तजित्।
ज्वरदाहहरः पथ्यो रुचिकृत्सर्वदोषहृत्॥ ८३॥

( मं मुद्गविशेषभेद। मालवे प्रसिद्धः। हिं मुद्दट, मोट, मुगानी। गौ वनमुग। )

अथ मसूरनामगुणाः।—

मसूरो रागदालिस्तु मङ्गल्यः पृथुबीजकः।
शूरः कल्याणबीजश्च गुरुबीजो मसूरकः॥ ८४॥
मसूरो मधुरः शीतः संग्राही कफपित्तजित्।
वातामयकरश्चैव मूत्रकृच्छ्रहरो लघुः॥ ८५॥

( मं मसाई। कं मसागि। गौ मुसूरी। )

अथ कलायनामगुणाः।—

कलायो मुण्डचणको हरेणुश्च सतीनकः।
त्रासनो नालकः * कण्ठी सतीनश्च हरेणुकः॥ ८६॥

* केचित् नलक इति पठन्ति।

कलायः कुरुते वातं पित्तदाहकफापहः ।
रुचिपुष्टिप्रदः शीतः कषायश्चामदोषकृत् ॥ ९७ ॥

( मं वटुरा । कं वट्टकडले । गो मटर । )

अथ लङ्कानामगुणाः ।—

लङ्का कराला त्रिपुटा काण्डिका रूक्षणात्मिका ॥ ९८ ॥
लङ्का रुच्या हिमा गौल्या पित्तजिद्वातकृद्गुरुः ॥ ९९ ॥

( मं मटुराचपटा । कं लांक । गो तेओड़ा । )

अथ आढ़कीनाम ; तद्भेदा गुणाश्च ।—

आढ़की तुवरी वर्य्या करवीरभुजा तथा ।
वृत्तवीजा पीतपुष्पा श्वेता रक्ताऽसिता त्रिधा ॥ १०० ॥
आढ़की तु कषाया च मधुरा कफपित्तजित् ।
ईषद्वातकरा रुच्या विदला गुरुग्राहिका ॥ १०१ ॥
सा च श्वेता दोषदात्री तु रक्ता रुच्या बल्या पित्ततापादिहन्त्री ।
सा श्यामा चेद्दीपनी पित्तदाहध्वंसा बल्यश्चाढ़कीयूषमुक्तम् ॥१०२॥

( मं साधारणतूरी । कं तोगरि । हिं रहर, तुमर, ठर् ।
गौ अड़र, भाहरि । )

अथ कुलित्थनामगुणाः ।—

...लित्थस्ताम्रवीजश्च श्वेतवीजः सितेतरः ॥ १०३ ॥
कुलित्थस्तु कषायोष्णो रूक्षो वातकफाप...ः ॥ १०४ ॥

( मं कुलत्थि । कं हुलवली । तें भोवलु । गो कुर्त्थिकलाय । )

अथ चवनामगुणाः ।—

चवः क्षुधाऽभिजननश्चपलो दीर्घशिम्बिकः ।
सुकुमारो वृत्तबीजो मधुरः चवकश्च सः ॥ १०५ ॥
चवः कषायमधुरः शीतलः कफपित्तहृत् ।
वृष्यः श्रमहरो रूच्चः पवनाध्मानकारकः ॥ १०६ ॥

( मं रत्तरा। कं राजमाष । तें बरबटा । तां अलसंदे । गौ वर्बटी । )

अथ निष्पावनामगुणाः ; तद्भेदाश्च ।—

मधुरः श्वेतनिष्पावो माध्वीका मधुशर्करा ।
पलङ्कषा स्थूलशिम्बी वृत्ता मधुसिता सिता ॥ १०७ ॥
मधुशर्करा सुरुच्या मधुराल्पकषायका ।
शिशिरा वातुला बल्याऽप्याध्मानगुरुपुष्टिदा ॥ १०८ ॥

( मं निवारानि । कं आवरे । तें वर्चौं । गौ शादाशिम् । )

सोऽन्यश्च कटुनिष्पावः खर्वुरो नदीजस्तथा ॥ १०९ ॥
नदीनिष्पावकस्तिक्तः कटुकोऽस्त्रप्रदो गुरुः ।
वातलः कफदो रूचः कषायो विषदोषनुत् ॥ ११० ॥

( मं नदीचेवर्चौं । कं तोरेआवरे । )

अथ तिलनामगुणाः ।—

तिलस्तु होमधान्यं स्यात् पवित्रः पितृतर्पणः ।
पापघ्नः पूतधान्यश्च जटिलस्तु वनोद्भवः ॥ १११ ॥

स्निग्धो वर्णबलाग्निवृद्धिजनन[illegible]न्यानिलघ्नो गुरुः
सोष्णः पित्तकरोऽल्प[illegible]करणः केश्योऽतिपथ्यो व्रणे ।
संग्राही मधुरः कषायसहित[illegible]क्तो विपाके कटुः
कृष्णः पथ्यतमः सितोऽल्पगुणदः क्षीणास्तथाऽन्ये तिलाः ॥ ११२ ॥

( मं तिल । कं एलु । तें नुव्वुलु, मञ्चिनूने नुव्वुलु । तां वाळेबेय । फा॰ कुञ्जद । दां वारिकतिल । हिं मिठातिल । गौ तिल । )

अथ पललनामगुणाः ।—

पललं तिलकल्कं स्यात्तिलचूर्णञ्च पिष्टकम् ॥ ११३ ॥
पललं मधुरं वृष्यं पित्तास्रबलपुष्टिदम् ॥ ११४ ॥

( मं पिना । कं गसियगेसरु हिं तिलकुटि । गौ तिलबाँटा । )

अथ तिलकिट्टनामगुणाः ।—

तिलकिट्टन्तु पिण्याकः खलः स्यात् तिलकल्कजः ॥ ११५ ॥
पिण्याकः कटुको गौल्यः कफवातप्रमेहनुत् ॥ ११६ ॥

( मं खरी । कं हिण्डि । गौ खैल । )

अथ अतसीनामगुणाः ।—

अतसी पिच्छला देवी मदगन्धा मदोत्कटा ।
उमा क्षुमा हैमवती सुनीला नीलपुष्पिका ॥ ११७ ॥
अतसी मदगन्धा स्यान्मधुरा बलकारिका ।
कफवातकरी चेषत् पित्तहृत् कुष्ठवातनुत् ॥ ११८ ॥

( मं अलसी । कं अगसे । तें नल्लयगसि । गौ मसिना । )

अथ आसुरीनामगुणाः ।—

आसुरी राजिका राजी रक्तिका रक्तसर्षपः ।
तीक्ष्णगन्धा मधुरिका क्षवकः क्षुवकः क्षवः ॥ ११९ ॥
आसुरी कटुतिक्तोष्णा वातघ्नीहार्त्तिशूलनुत् ।
दाहपित्तमदं हन्ति कफगुल्मकृमिव्रणान् ॥ १२० ॥

( मं मडुरी। कं सासिराई। तें अवलो। तां कडुवो। हिं माकुड़ा-राइ। गौ राइसरिषा। )

अथ राजक्षवकनामगुणाः।—

राजक्षवकः कृष्णस्तीक्ष्णफला राजराजिका राज्ञी।
सा कृष्णसर्षपाख्या विज्ञेया राजसर्षपाख्या च ॥ १२१ ॥
राजसर्षपकस्तिक्तः कटूष्णो वातशूलनुत्।
पित्तदाहकृते गुल्म-कण्डूकुष्ठव्रणापहः ॥ १२२ ॥

( गौ कालसरिषा। )

अथ तीक्ष्णकनामगुणाः।—

तीक्ष्णकश्च दुराधर्षो रक्षोघ्नः कुष्ठनाशनः।
सिद्धप्रयोजनः सिद्ध-साधनः सितसर्षपः ॥ १२३ ॥
सिद्धार्थः कटुतिक्तोष्णो वातरक्तग्रहापहः।
त्वग्दोषशमनो रुच्यो विषभूतव्रणापहः ॥ १२४ ॥

( मं श्वेतसरिसो। कं विलियसासवे। गौ श्वादासरिषा। )

[ इति सर्षपाः। ]

अथ शिम्बीधान्यनाम।—

धान्यानां कम्बुके शिम्बो बीजगुप्तिश्च शाम्भवो।
तद्गुप्तानि च धान्यानि शिम्बीधान्यानि चक्षते ॥१२५॥

[ इति शिम्बीधान्यप्रकरणम्। ]

अथ श्यामाकनामगुणाः।—

श्यामाकः श्यामकः श्यामश्चिबीजः स्यादविप्रियः।
सुकुमारो राजधान्यं तृणबीजोत्तमश्च सः ॥ १२६ ॥

श्यामाको मधुरः स्निग्धः कषायो लघुशीतलः ।
वातकृत्कफपित्तघ्नः संग्राही विषदोषनुत् ॥ १२७ ॥
( मं सांवां । कं सावे । गो श्यामाधान । )

अथ कोद्रवनामगुणाः ।—

कोद्रवः कोरदूषश्च कुद्दालो मदनाग्रजः ।
स च देशविशेषेण नानाभेदः प्रकीर्त्तितः ॥ १२८ ॥
कोद्रवो मधुरस्तिक्तो व्रणिनां पथ्यकारकः ।
कफपित्तहरो रूक्षो मोहकृद्वातलो गुरुः ॥ १२९ ॥
( मं कोद्रव । कं हारक । गो कोदोधान । )

अथ वरकनामगुणाः ।—

वरकः स्थूलकङ्गुश्च रूक्षः स्थूलप्रियङ्गुकः ॥ १३० ॥
वरको मधुरो रूक्षः कषायो वातपित्तकृत् ॥ १३१ ॥
( मं वरग । कं प्रियङ्गु । गो मोठा कांनिधान । )

अथ कङ्गुनामगुणाः ।—

कङ्गुणी कङ्गनी प्रोक्ता चीनकः पीततण्डुलः ।
वातलः सुकुमारश्च स च नानाविधाभिधः ॥ १३२ ॥
प्रियङ्गुर्मधुरो रुच्यः कषायः स्वादुशीतलः ।
वात[illegible]दाहघ्नो रूक्षो भग्नास्थिबन्धकृत् ॥ १३३ ॥
( मं कांङ्ग । कं नवणी । तें फ्रेंकथायु, कोद्रलु । गो कांनिधान । )

अथ नीवारनामगुणाः ।—

नीवारोऽरण्यशालिः स्यान्मुनिधान्यं तृणोद्भवम् ॥ १३४ ॥
नीवारो मधुरः स्निग्धः पवित्रः पथ्यदो लघुः ॥ १३५ ॥

( मं नीवारा। कं व्यरतुमेधि। तें निवरिवट्टु। हिं तीन्नी।
गो उड़िधान। )

अथ रागीनामगुणाः।—

रागी तु लाञ्छनः स्याद्बहुदलकणिशश्च गुच्छकणिशश्च ॥१३६॥
तिक्तो मधुरकषायः शीतः पित्तास्रनाशनो बलदः ॥ १३७ ॥

( मं नाचणी। कं रविगुचणी। )

अथ कुरीधान्यगुणाः।—

कुरी तु तृणधान्यं स्यान्मधुरं तद्बलप्रदम्।
हरितं वार्धकं पक्वं वाजिनां पुष्टिदायकम् ॥ १३८ ॥

( मं, कं, कुरिधान्याचकूळे। यमुनातीरे प्रसिद्धा। )

[ इति तृणधान्यानि। ]

अथ लाजादिनामगुणाः।—

ये के च व्रीहयो भ्रष्टास्ते लाजा इति कीर्त्तिताः ॥ १३९ ॥
यवादयश्च ये भ्रष्टा धानास्ते परिकीर्त्तिताः ॥ १४० ॥
लाजा च यवधाना च तर्पणी पित्तनाशिनी।
गोधूमयावनालोत्थाः किञ्चिदुष्णाश्च दीपनाः ॥ १४१ ॥

( मं लाजाधान्य। कं लाईकर अथ। तें प्रोतने। हिं बहुरा।
गो खै ; यवादि भाजा। )

अथ आकुलानामगुणाः।—

तथैव गोधूमैराकुलाः परिकीर्त्तिताः।
आकुला गुरवो रूक्षा मधुराः बलकारिणः ॥ १४२ ॥

( मं, कं, थैंवे। चरसोंका इति भाषा। )

अथ पृथुकानामगुणाः ।—

व्रीहयोऽप्यर्द्धपक्काश्च तप्तास्ते पृथुकाः स्मृताः ।
पृथुकाः स्वादवः स्निग्धा हृद्या मदनवर्द्धनाः ॥ १४३ ॥
( मं चिउरा । कं पश्चे । गौ चिँड़े । )

अथ पूपलागुणाः ।—

पूपला मधुराः प्रोक्ता वृष्यास्ते बलदाः स्मृताः ।
पित्तहृत्तर्पणा हृद्याः स्निग्धास्ते बलवर्द्धनाः ॥ १४४ ॥
( मं ओफली । कं हविग्रतने । गौ वड़ा, पुलौ । )

अथ चिपिटानामगुणाः ।—

ये चान्ये यावनालाद्याश्चिपिटास्तप्ततण्डुलाः ॥ १४५ ॥
शालेययावनालीय-चिपिटाः पुष्टिवर्द्धनाः ॥ १४६ ॥
( मं गादाजोग्गरीकरम्रितने । गौ जनारप्रभृतिर चिँड़ा । )

अथ दुग्धवीजानामगुणाः ।—

अतप्ततण्डुलास्ते तु दुग्धवीजाः प्रकीर्त्तिताः ॥ १४७ ॥
दुग्धवीजा सुमधुरा दुर्जरा वीर्य्यपुष्टिदा ॥ १४८ ॥
( मं वेलुवसेयेनीवक । )

अथ तप्तमुद्गादिगुणाः ।—

तप्तास्तु मुद्गचणकाः सुमनादिलङ्का
सद्यस्तृषार्त्तिरुचिपित्तकृतश्च जग्धाः ।
वाताल्पदाः सुखकरा ह्यबलाश्च रूक्षा
हृद्या भवन्ति युव-जर्जरबालकानाम् ॥ १४९ ॥
( मं फूटाचणकरलाव । )

अथ अर्द्धपक्वमुद्गादिगुणाः ।—

मुद्गगोधूमचणका यावर्नालादयः स्मृताः ।
यदर्द्धपक्वं तद्धान्यं विष्टम्भाध्मानदोषकृत् ॥ १५० ॥

( मं, कं, घुघुनी । )

अथ कर्णिकानाम ।—

शुष्कगोधूमचूर्णन्तु कर्णिका समुदाहृता ॥ १५१ ॥

( मं कणिकि । )

अथ दालिनाम ।—

स्फोटस्तु चणकादीनां दालिति परिकीर्त्तिताः ॥ १५२ ॥

( मं दालिचणाकी । गौ डा'ल । )

अथ हरितलूनगुणाः ।—

पक्वं हरितलूनञ्च धान्यं सर्वगुणावहम् ॥ १५३ ॥

( मं हिरवेंसांवगिलें । )

अथ शुष्कलूनगुणाः ।—

शुष्कलूनन्तु निःसारं रूक्षं तत्सत्त्वनाशनम् ॥ १५४ ॥

( मं शुष्क अन्न । )

अथ कोषधान्यादिगुणाः ।—

कोषधान्यं नवं बल्यं मधुरं वत्सरोषितम् ॥ १५५ ॥

( मं राखा पुराना अन्नकरगुणाः । )

अथ नवपुराणादिधान्यगुणाः ।—

नवं धान्यमभिष्यन्दि लघु संवत्सरोषितम् ।
द्व्यब्दोषितं लघु पथ्यं त्रिवर्षादबलं भवेत् ॥ १५६ ॥

( मं नवाधान्यकरगुणा । )

अथ नवपुराणधान्यादिगुणाः ।—

चणास्तु यवगोधूम-तिलमाषा नवा हिताः ।
पुराणा विरसा रूक्षास्त्वहिता दुर्जराबलाः ॥ १५७ ॥

अथ वापितादिधान्यानां गुणाः ।—

धान्यं वापितमुत्तमं तदखिलं छिन्नोद्भवं मध्यमं
ज्ञेयं यद्यदवापितं तदधमं निःसारदोषप्रदम् ।
दग्धायां भुवि यत्ततोऽपि विपिने ये वापिताः शालयो
ये च छिन्नभवा भवन्ति खलु ते विण्मूत्रबन्धप्रदाः ॥ १५८ ॥

अथ क्षारोदकोद्भूतधान्यगुणाः ।—

क्षारोदकसमुत्पन्नं धान्यं श्लेष्मरुजापहम् ॥ १५९ ॥

अथ स्निग्धभूमिसमुद्भवधान्यगुणाः ।—

सुस्निग्धमृत्तिकोद्भूतं धान्यमोजोबलावहम् ॥ १६० ॥

अथ बालुकामयभूमिधान्यगुणाः ।—

बलपुष्टिप्रभावघ्नं बालुकामृत्तिकोद्भवम् ॥ १६१ ॥

( मं भरडभूमिधान्यगुणा । )

अथ धान्यादीनां श्रेष्ठत्वनिरूपणम् ।—

धान्यं श्रेष्ठं षष्टिकं राजभोग्यं
मांसं त्वाजं तैत्तिरं लावकीयम् ।
पानीयं स्यात् कृष्णमृत्स्नासमुत्थं
क्षीराज्यादौ गव्यमाजं प्रशस्तम् ॥ १६२ ॥

इत्थं प्रसिद्धतरधान्यगुणाभिधान-
वीर्य्याभिवर्णनविशृङ्खलवाग्विलासम् ।

आम्नाय वर्गमिममाशु लभेत वैद्यो
विद्यां विपन्नजनजीवनदानधन्याम् ॥ १६३ ॥

यानि सदा भुज्यन्ते भुञ्जानजनाश्च यानि भुञ्जन्ते ।
तेषां खलु धान्यानां वर्गोऽयं भोज्यवर्ग इति कथितः ॥१६४॥

येनाचारचणेन मुग्धमधुरश्रीशालिना सन्महा-
मानार्हा बहुधान्यसम्पदुचिता संनीयते सन्ततम् ।
तेन श्रीनृहरीश्वरेण रचिते नामोक्तिचूड़ामणौ
वर्गोऽयं स्थितमेति नूत्नरचनो धान्याह्वयः षोड़शः ॥ १६५ ॥

इति श्रीनरहरिपण्डितविरचिते राजनिघण्टौ भोज्यवर्गापर-
नामधान्यवर्गः षोड़शः ।

—०✱०—

## अथ मांसादिवर्गः ।



अथ मांसनाम ।—

मांसन्तु पिशितं क्रव्यं पलन्तु रक्तमस्रजम् ।
पललं जाङ्गलं कीरमामिषञ्च तदुच्यते ॥ १ ॥

अथ सद्योहतहरिणादिमांसगुणाः ।—

सद्योहतस्य मांसं श्रेष्ठं हरिणादिकस्य यूनस्तु ।
श्रेयं सुगन्धि पथ्यं आङ्गलदेशस्थितस्य पथ्यतमम् ॥ २ ॥

अथ त्याज्यमांसकथनम् ।—

बालस्य वृद्धस्य कृशस्य रोगिणो विषाग्निदग्धस्य मृतस्य चाम्बुषु ।
त्याज्यं मृगादेः पिशितं तु तस्य विगन्धि शुष्कञ्च [illegible] ॥३॥

अथ मांसानां सामान्यगुणाः ।—

सर्वं मांसं वातविध्वंसि वृष्यं बल्यं रुच्यं बृंहणं तच्च मांसम् ।
देशस्थानाच्चात्मसंस्थं स्वभावैर्भूयो नानारूपतां याति नूनम् ॥४॥

अथ अनूपादिदेशत्रयोद्भूतमांसगुणाः ।—

तत्रानूपीयमांसं गवयरुरुमृगक्रोड़गण्डादिकानां
स्निग्धं पथ्यं च बल्यं लघु शमशिखराद्युद्भवं जाङ्गलीयम् ।
पुष्टिं दीप्तिं च दत्ते रुचिकृदथ लघु स्वादु साधारणीयं
वृष्यं बल्यं च रुच्यं रुरुहरिणमृगक्रोड़सारङ्गकाणाम् ॥ ५ ॥

मांसं सारसहंसरात्रिविरहिक्रौञ्चादिजं शीतलं
स्निग्धं वातकफापहं गुरु ततः स्वादु त्रिदोषापहम् ।
पथ्यं लावकतित्तिरादिजनितं वृष्यं लघु स्यात्परं
चक्रकौञ्चमयरतित्तिरभवं देशत्रयादोष्टशम् ॥ ६ ॥

अथ द्रुतादिगामिनां विलादिवासिनाञ्च जातिभेदाः ।—

द्रुतो विलम्बितश्चैव प्लवश्चेति गतैस्त्रयः ।
स्थानतोऽपि त्रयस्ते तु विलस्थलजलाश्रयाः ॥ ७ ॥
पुनस्ते तु प्रसहना प्रतुदा विष्किरा इति ।
स्वभावतस्त्रयः प्रोक्ताः क्रमशो मृगपक्षिणः ॥ ८ ॥
अथैषां क्रमशो लक्ष्म-गुणान्वक्ष्यामि वर्गशः ।
एवं नवविधाः प्रोक्तास्त एव मृगपक्षिणः ॥ ९ ॥

अथ द्रुतगतिमृगाणां नाम मांसगुणाश्च ।—

अजशशहरिणादयः स्वयं ये द्रुतगमना द्रुतसंज्ञकाः स्मृतास्ते ।
तदुदितपललं च पथ्यबल्यं रचयति वीर्यमदप्रदं लघु स्यात् ॥१०॥

अथ विलम्बितगतिमृगाणां नाम मांसगुणाश्च ।—

गजखड्गमुखा महामृगा निजगत्यैव विलम्बिताः स्मृतास्ते ।
बलकान्तिमिश्रितं च पिच्छलं कफकासानिलमान्द्यदं गुरु स्यात् ॥११॥

अथ प्लवगतिमृगाणां नाम मांसगुणाश्च ।—

सारसहंसबलाकाचक्रक्रौञ्चादयो जले प्लवनात् ।
प्लवसंज्ञाः कथितास्ते तन्मांसं गुरूष्णं च बलदायि ॥ १२ ॥

अथ विलेशयानां नाम तन्मांसगुणाश्च ।—

अहिनकुलशल्यगोधामूषकमुख्या विलेशयाः कथिताः ।
श्वासानिलकासहरं तन्मांसं पित्तदाहकरम् ॥ १३ ॥

अथ स्थलेशयानां नाम मांसगुणाश्च ।—

क्रोड़रुरुकुरङ्गाद्या विविधा ये मृगादयः ।
स्थलेशयास्तु ते सर्वे मांसं सर्वगुणावहम् ॥ १४ ॥

अथ जलेशयानां नाम मांसगुणाश्च ।—

झषमकरनक्रकर्कटकूर्मप्रमुखा जलेशयाः कथिताः ।
मांसं तेषां तु सरं वृष्यं गुरु शिशिरबलसमीरकरम् ॥ १५ ॥

अथ प्रसहनानां नाम मांसगुणाश्च ।—

शार्दूलसिंहशरभर्क्षतरक्षुमुख्या
येऽन्ये प्रसह्य विनिहन्त्यभिवर्त्तयन्ति ।
ते कीर्त्तिताः प्रसहनाः पललं तदीय-
मर्शःप्रमेहजठरामयजाड्यहारि ॥ १६ ॥

अथ प्रतुदानां नाम मांसगुणाश्च ।—

भोक्ता निष्कृष्यामिषं स प्रतुदः प्रोक्तो गृध्रश्येनकाकादिको यः ।

मांसं तस्य स्वादु सन्तर्पणञ्च स्निग्धं बल्यं पित्तदाहास्नदायि ॥१७॥

अथ विष्किराणां नाम तन्मांसगुणाश्च ।—

भक्ष्याश्च कुक्कुटकपोतकतित्तिराद्याः
क्षौणीं विलिख्य नखरैः खलु वर्त्तयन्ति ।
ते विष्किराः प्रकथिताः पिशितं तदीयं
वृष्यं कषायमधुरं शिशिरं च रुच्यम् ॥ १८ ॥

अथ स्थानविशेषगतमृगपक्षिणां मांसगुणाः ।—

अयमेव गुणो ज्ञेयः पक्षिणां च यथाक्रमम् ।
सर्वस्थानविशेषेण संख्या च गतिरुच्यते ॥ १९ ॥

यत्र स्थिता ये गतितोऽपि देशादन्यत्र याता मृगपक्षिमुख्याः ।
स्वस्वोचितस्थाननिवर्त्तनेन मांसेऽपि तेषां गुणपर्य्ययाः स्युः ॥२०॥

अथ खड्गमांसगुणाः । ( गण्डकः ) ।—

मांसं खड्गमृगोत्थं तु बलकृद् वृंहणं गुरु ॥ २१ ॥
( गौ गण्डार । )

अथ गवयमांसगुणाः ।— *

गवयस्यामिषं बल्यं रुच्यं वृष्यञ्च वृंहणम् ॥ २२ ॥
( मं अनायु । )

अथ रुरुमांसगुणाः । ( कुलचरमृगभेदः ) ।—

रुरुक्रव्यं गुरु स्निग्धं मन्दवह्निबलप्रदम् ॥ २३ ॥
( मं रोहु । )

---

* गलकम्बलशून्यः गोसदृशः कुलचरपशुभेदः ।

अथ गोमांसगुणाः ।—

अपूतं गोभवं क्रव्यं गुरु वातकफप्रदम् ॥ २४ ॥

( मं गायमांकेल । )

अथ वनमहिषमांसगुणाः ।—

वनमहिषामिषं स्यादोषल्लघु दीपनञ्च बलदायि ॥ २५ ॥

अथ ग्राममहिषमांसगुणाः ।—

ग्रामीणमहिषमांसं स्निग्धं निद्राकरञ्च पित्तहरम् ॥ २६ ॥

अथ हस्तिमांसगुणाः ।—

हस्तिक्रव्यं गुरु स्निग्धं वातलं श्लेष्मकारकम् ।
बहुपुष्टिप्रदं चैव दुर्जरं मन्दवह्निदम् ॥ २७ ॥

अथ अश्वमांसगुणाः ।—

अश्वमांसं भवेदुष्णं वातघ्नं बलदं लघु ।
पित्तदाहप्रदं नृणां तदेतच्चातिसेवनात् ॥ २८ ॥

अथ उष्ट्रमांसगुणाः ।—

उष्ट्रमांसन्तु शिशिरं त्रिदोषशमनं लघु ।
बलपुष्टिप्रदं रुच्यं मधुरं वीर्य्यवर्द्धनम् ॥ २९ ॥

( मं कन्देयमांस । गो उटेरमांस । )

अथ ग्राम्यारण्यगर्दभमांसगुणाः ।—

गर्दभप्रभवं मांसं किञ्चिद्गुरु बलप्रदम् ।
रुच्यं तु वन्यजं शैत्यं बहुवीर्य्यबलप्रदम् ॥ ३० ॥

अथ एणमांसगुणाः ।— *

एणस्य मांसं लघुशीतपथ्यं त्रिदोषहृत् षड्रसजञ्च रुच्यम् ॥३१॥

---

* एणः कृष्णसारः ।

अथ कुरङ्गमांसगुणाः । ( कुरङ्गः स्वल्पहरिणः ) ।—

कुरङ्गमांसं मधुरञ्च तद्वत् कफापहं मांसदपित्तनाशि ॥ ३२ ॥

अथ सारङ्गमांसगुणाः ।—

सारङ्गं जाङ्गलं स्निग्धं मधुरं लघु वृष्यकम् ॥ ३३ ॥

( गौ चित्रमृग । )

अथ शिखरीमांसगुणाः । ( मृगभेदः ) ।—

शिखरीसम्भवं मांसं लघु हृद्यं बलप्रदम् ॥ ३४ ॥

( मं हन्दीपमांस । )

अथ ग्राम्यारण्यवराहमांसगुणाः ।—

वराहमांसं गुरु वातहारि वृष्यं बलस्वेदकरं वनोत्थम् ॥ ३५ ॥

तस्माद्गुरु ग्रामवराहमांसं तनोति मेदो बलवीर्य्यवृद्धिम् ॥ ३६ ॥

( मं गढ़शूरो । )

अथ शरशृङ्गमांसगुणाः ।—

शरशृङ्गस्य मांसं तु गुरु स्निग्धं कफप्रदम् ।

बल्यं वृष्यकरं पुष्टि-किञ्चिद्वातकरं परम् ॥ ३७ ॥

( मं आङ्गिनमांस । )

अथ छागमांसगुणाः ।—

छागमांसं लघु स्निग्धं नातिशीतं रुचिप्रदम् ।

निर्दोषं वातपित्तघ्नं मधुरं बलपुष्टिदम् ॥ ३८ ॥

छागपोतभवं मांसं लघु शीतं प्रमेहजित् ।

ईषल्लघु बलं दत्ते तदेव [illegible] ॥ ३९ ॥

( मं आङ्गिनमरीयमांसगुणाः, करचलकुरीयमांस । गौ पाँठारमांस । )

अथ औरभ्रमांसगुणाः। ( कम्बलमृगः। )

औरभ्रं मधुरं शीतं गुरु विष्टम्भि बृंहणम् ॥ ४० ॥

( मं भेड़ीकरमांस। गौ म्याड़ारमांस। )

अथ आविकमांसगुणाः।—

आविकं मधुरं मांसं किञ्चिद्गुरु बलप्रदम् ॥ ४१ ॥

( मं एडुकियमांस। गौ भेड़ारमांस। )

अथ शल्यमांसगुणाः।—

शल्यमांसं गुरु स्निग्धं दीपनं श्वासकासजित् ॥ ४२ ॥

( मं मकुलीयमांस। गौ सजारुमांस। )

अथ नाकुलमांसगुणाः।—

पिच्छिलं नाकुलं मांसं वातघ्नं श्लेष्मपित्तकृत् ॥ ४३ ॥

( मं वुउड़। गौ नेउलेरमांस। )

अथ गोधामांसगुणाः।—

गोधामांसन्तु वातघ्नं श्वासकासहरञ्च तत् ॥ ४४ ॥

( मं मोलनमांस। हिं गोहीमांस। गौ गोसापेर मांस। )

अथ शशमांसगुणाः।—

शशमांसं त्रिदोषघ्नं दीपनं श्वासकासजित् ॥ ४५ ॥

( मं खरहा। तें चेवुलपिल्लि। गौ खरगोषेरमांस। )

अथ वर्ज्यविलेशयमांसगुणाः।—

अन्ये विलेशया ये स्युः कोकड़ोन्दुरुकादयः।*
मांसञ्च गर्हितं तेषां मान्द्यं गौरवदुर्जरम् ॥ ४६ ॥

[ इति मृगाः। ]

---

* कोकड़ः "कटुफार" इति लोके। उन्दुरुकः मूषिकः।

अथ आरण्यकुक्कुटमांसगुणाः ।—

आरण्यकुक्कुटकाव्यं हृद्यं श्लेष्महरं लघु ॥ ४७ ॥

अथ ग्राम्यकुक्कुटमांसगुणाः ।—

ग्राम्यकुक्कुटजं स्निग्धं वातहृद्दीपनं गुरु ॥ ४८ ॥

( तें कोडि, कुक्क । हिं मुर्गा । गौ कुंकड़ा । )

अथ हारीतमांसगुणाः ।—

हारीतपललं स्वादु कफपित्तास्रदोषजित् ॥ ४९ ॥

( गौ हरेल घुघु। )

अथ विविधकपोतमांसगुणाः ।—

वर्द्धनं वीर्य्यबलयोस्तद्वदेव कपोतजम् ॥ ५० ॥

पारावतपलं स्निग्धं मधुरं गुरु शीतलम् ।

पित्तास्रदाहनुद्बल्यं तथाऽन्यद्वीर्य्यवृद्धिदम् ॥ ५१ ॥

( मं परेवामांस । तें पारुवापिट्ट । गौ पायरारमांस । )

अथ तित्तिरिमांसगुणाः । ( वसन्तगौर ) । —

स्निग्धं तित्तिरिजं मांसं लघु वीर्य्यबलप्रदम् ।

कषायं मधुरं शीतं त्रिदोषशमनं परम् ॥ ५२ ॥

( गौ ठिठिरमांस । )

अथ लावकमांसगुणाः ।—

तद्वच्च लावकं मांसं पथ्यं ग्राहि लघु स्मृतम् ॥ ५३ ॥

( मं लावुकपिट्ट, लावुगी । गौ बटेरपाखी । )

अथ वर्त्तकमांसगुणाः ।—

तद्वच्च वर्त्तकं मांसं निर्दोषं वीर्य्यपुष्टिदम् ॥ ५४ ॥

( मं गुब्बि ; हिं बटेरी गुडगुडे । गौ भारुइपाखी । )

अथ ग्राम्यारण्यचटकमांसगुणाः ।—

चटकायाः पलं शीतं लघु वृष्यं बलप्रदम् ॥ ५५ ॥

तद्वचारण्यचटक-क्रव्यं लघु च पथ्यदम् ॥ ५६ ॥

( मं चिरैया, बनचोरई, चिमणा । हिं चबुडैया । गौ चड़ाइ । )

अथ कपिञ्जलमांसगुणाः । ( गौरतित्तिरिः ) ।—

चटकात् शीतलं रुच्यं वृष्यं कापिञ्जलामिषम् ॥ ५७ ॥

अथ चकोरमांसगुणाः ।—

तद्वच्चकोरजं मांसं वृष्यं च बलपुष्टिदम् ॥ ५८ ॥

( हि तोक्का । गौ चातकपाखी । )

अथ चक्रवाकमांसगुणाः ।—

क्रव्यं तु चक्रवाकस्य लघु स्निग्धं बलप्रदम् ।

वह्निकृत्सर्वशूलघ्नमुष्णं वातामयापहम् ॥ ५९ ॥

( गौ चकाचकी, रामचका । )

अथ सारसमांसगुणाः ।—

सारसस्य तु मांसञ्च मधुराम्लकषायकम् ।

महातीसारपित्तघ्नं ग्रहण्यर्शोरुजापहम् ॥ ६० ॥

अथ जलचरपक्षिमांसगुणाः ।—

स्निग्धहिमं गुरु वृष्यं मांसं जलपक्षिणान्तु वातहरम् ॥ ६१ ॥

तेष्वपि च हंसमांसं वृष्यतमं तिमिरहरणञ्च ॥ ६२ ॥

( मं बैद्धकि । गौ हांस इत्यादि । )

अथ बकादिमांसगुणाः ।—

अन्ये बकबलाकाद्या गुरवो मांसभक्षणात् ।

अनुक्तं तु मृगादीनां मांसं ग्राह्यं हितादिषु ॥ ६३ ॥

[ इति पक्षिमांसगुणाः । ]

अथ मत्स्यस्य सामान्यगुणाः ।—

मत्स्याः स्निग्धोष्णगुरवो वातघ्ना रक्तपित्तदाः ।
तत्र कांश्चिदपि ब्रूमो विशेषगुणलक्षणान् ॥ ६४ ॥

( मं मत्स्यगलु । )

केषाञ्चित् मत्स्यानां नामानि ।—

रोहितो गर्गरो भीरुर्बालको बर्बरस्तथा ।
छागलो रक्तमत्स्योऽथ महिषश्चाविलस्तथा ॥ ६५ ॥
वातूकोऽलोमशा चाऽपि ज्ञेया कर्णवशादयः ।
लक्ष्यलक्षणवीर्य्यादीन् कथयामि यथाक्रमम् ॥ ६६ ॥

अथ रोहितमत्स्यलक्षणगुणाः ।—

क्षण्याः शल्की श्वेतकुक्षिस्तु मत्स्यो
यः श्रेष्ठोऽसौ रोहितो वृत्तवक्त्रः ।
कोष्णं वल्यं रोहितस्यापि मांसं
वातं हन्ति स्निग्धमाप्नोति वीर्य्यम् ॥ ६७ ॥

( तें एरमीण्यु । गौ रुइमाछ । )

अथ गर्गरमत्स्यलक्षणगुणाः ।—

यः पीतवर्णोऽपि च पिच्छिलाङ्गः पृष्ठे तु रेखाबहुलः सशल्कः
स गर्गरो बर्बरनादरूक्षो जड़श्च शीतः कफवातदायी ॥ ६८ ॥

( गो गागुरामाछ । )

अथ भोकमत्स्यलक्षणगुणाः।—

पृष्ठे पक्षौ द्वौ गले पुच्छकं चेत्
सर्पाभः स्यात् फूत्कृतो वृत्ततुण्डः।
ज्ञेयः शल्की मत्स्यको भोकसंज्ञः
स्निग्धो वृष्यो दुर्जरो वातकारी ॥ ६८ ॥

( मं अहिर। कं ईमलग )

अथ वालमत्स्यलक्षणगुणाः।—

नातिस्थूलो वृत्तवक्त्रोऽपि शस्तो
धत्ते दन्तान् श्मश्रुलो दीर्घकायः।
सन्ध्यायां वा रात्रिशेषे च वर्ण्यः
प्रोक्तो वालः पथ्यबल्यः सुवृष्यः ॥ ७० ॥

अथ बर्बरमत्स्यलक्षणगुणाः।—

पृष्ठे कुक्षौ कण्टकी दीर्घतुण्डः सर्पाभो यः सोऽप्ययं बर्बराख्यः।
वाताटोपं सोऽपि दत्ते जडश्च बल्यः स्निग्धो दुर्जरो वीर्यकारी ॥७१॥

अथ छागलमत्स्यलक्षणगुणाः।—

श्वेतं सुकायं समदीर्घवृत्तं निःशल्ककं छागलकं वदन्ति।
गले त्रिकण्टः किल तस्य पृष्ठे कण्टः सुपथ्यो रुचिदो बलप्रदः ॥७२

( गौ आड़माछ )

अथ रक्तमत्स्यलक्षणगुणाः।—

यो रक्ताङ्गो नातिदीर्घो न चाल्पो
नातिस्थूलो रक्तमत्स्यः स चोक्तः।
शीतो वृष्यः पुष्टिकृद्दीपनोऽसौ
नाग्रं धत्ते किञ्च दोषत्रयस्य ॥ ७३ ॥

अथ महिषमत्स्यलक्षणगुणाः ।—

यः कृष्णो दीर्घकायः स्यात् स्थूलशल्को बलाधिकः ।
मत्स्यो महिषनामाऽसौ दीपनो बलवीर्य्यदः ॥ ७४ ॥

अथ आविलमत्स्यलक्षणगुणाः ।—

शुक्लाङ्गस्ताम्रपक्षो यः स्वल्पाङ्गश्चाविलाह्वयः ।
सुरुच्यो मधुरो बल्यो गुणाढ्यो वीर्य्यपुष्टिदः ॥ ७५ ॥

अथ वातूकमत्स्यलक्षणगुणाः ।—

यः स्थूलाङ्गो माहिषाकारको यस्तालुस्थाने नीरजाभां दधाति ।
शल्कं स्थूलं यस्य वातूककोऽसौ दत्ते वीर्य्यं दीपनं वृष्यदायी ॥७६॥

अथालोमशमत्स्यलक्षणगुणाः ।—

वितस्तिमानः श्वेताङ्गः सूक्ष्मशल्कः सुदीपनः ।
अलोमशाह्वयो मत्स्यो बलवीर्य्याङ्गपुष्टिदः ॥ ७७ ॥

अथ कर्णवशादिमत्स्यलक्षणगुणाः ।—

यो वृत्तगौरस्यः कृष्णाङ्गः शल्की कर्णवशाभिधः ॥ ७८ ॥
दीपनः पाचनः पथ्यो वृष्योऽसौ बलपुष्टिदः ॥ ७९ ॥

( गौ कालवश् । )

अथ सशल्कमत्स्यानां गुणाः ।—

निःशल्का निन्दिता मत्स्याः सर्वे शल्कयुता हिताः ।
वपुःस्थैर्य्यकरा वीर्य्य-बलपुष्टिविवर्द्धनाः ॥ ८० ॥

अथ ह्रदादिजातमत्स्यानां गुणाः ।

ह्रदकुल्याजलधिनिर्झरतड़ागवापीजले च ये मत्स्याः ।
ते तु जड़ा नादेया यथोत्तरं लघुतरास्तु नादेयाः ॥ ८१ ॥ *

---

* ते जड़ा मत्स्याः न आदेयाः न ग्रहणीयाः आ-दा धातो रूपमिदम् ।

अथ समुद्रमत्स्यगुणाः।—

क्षाराम्बुमत्स्या गुरवोऽस्रदाहदा
विष्टम्भदास्ते लवणार्णवादिजाः।
तानश्नतां स्वादुजलस्थिता अपि
ज्ञेया जडास्तेऽपि तथा श्रुतानिमान्॥ ८२॥

[ इति मत्स्याः। ]

अथ शैलादिजप्राणिमांसानामनुक्तौ हेतुः।—

शैलाटवीनगरभूजलचारिणो ये
ये केऽपि सत्त्वनिवहाः खलु सप्तसंख्याः।
तन्मांसमत्र न वितथ्यमथाभ्यधायि
ग्रन्थस्य विस्तरभयाच्च नवोपयोगात्॥ ८३॥

अथ पक्वभृष्टमांसगुणाः।—

पक्वं मांसं हितं सर्वं बलवीर्य्यविवर्द्धनम्।
भृष्टमांसं विदाहि स्यादस्रवातादिदोषकृत्॥ ८४॥

अथ स्त्रीपुरुषभेदेन मांसगुणाः।—

पूर्वार्द्धं पुरुषस्य तद्गुरुतरं पश्चार्द्धभागः स्त्रियाः
स्त्री गुर्वी किल गुर्विणी यदि तथा योषिच्च तुल्या लघुः।
पक्षी चेत्पुरुषो लघुः श्रृणु शिरःस्कन्धोरुपृष्ठे क्रमात्
मांसं यच्च कटिस्थितं तदखिलं गुर्वेव सर्वात्मना॥ ८५॥

रसरक्तादिधातूनां गुरुः स्यादुत्तरोत्तरम्।
मेढ्रहृद्वृक्कयकृन्मांसं वार्षणं चातिमात्रतः॥ ८६॥

---

तेषां भोजनं न विधेयमिति तात्पर्य्यम्। नादेयाः नद्यां भवाः इति वाक्ये ढेयप्रत्ययः बोध्यः।

इत्थं प्रतिस्थलविलाम्बुनभःप्रचार-
प्राण्यङ्गमांसगुणनिर्णयपूर्णमेनम् ।
वर्गं विचार्य्य भिषजा विनियुज्यमानो
भुक्त्वाऽशनं न विकृतिं समुपैति मर्त्यः ॥ ८७ ॥

यस्यासीत् समितिद्विपाधिपमहत्कुम्भान्तरस्थामिष-
प्रायाभ्यासपिपासयेव तरुणी नेत्राम्बुधारा द्विषाम् ।
तस्यायं पुरुषप्रतापसुहृदः श्रीमन्नृसिंहेशितु-
र्वर्गः सप्तदशो निषीदति कृतौ नामादिचूड़ामणौ ॥ ८८ ॥

इति श्रीनरहरिपण्डितविरचिते निघण्टुराजापरनाम्न्यभिधान-
चूड़ामणौ मांसादिवर्गः सप्तदशः समाप्तः ।

## अथ मनुष्यादिवर्गः ।

अथ मनुष्यनाम ।—

मनुष्या मानुषा मर्त्त्या मनुजा मानवा नराः ।
द्विपादाश्चेतना भूस्था भूमिजा भूस्पृशो विशः ॥ १ ॥

अथ पुरुषनाम ।—

पुरुषः पूरुषो ना च नरः पञ्चजनः पुमान् ;
अर्थाश्रयोऽधिकारी स्यात्कर्मार्हश्च जनोऽर्थवान् ॥ २ ॥

( मं द्विशम् । )

अथ स्त्रीनाम।—

स्त्री योषिद्वनिताऽबला सुनयना नारी च सीमन्तिनी
रामा वामदृगङ्गना च ललना कान्ता पुरन्ध्री वधूः।
सुभ्रूः सा वरवर्णिनी च सुतनुस्तन्वी तनुः कामिनी
तन्वङ्गी रमणी कुरङ्गनयना भीरुः प्रिया भामिनी ॥ ३ ॥
योषिन्महेला महिला विलासिनी
नितम्बिनी साऽपि च मत्तकाशिनी।
जनी सुनेत्रा प्रमदा च सुन्दरी
स्यादञ्चितभ्रूर्ललिता विलासिनी ॥ ४ ॥
मानिनी च वरारोहा नताङ्गी च नतोदरा।
प्रतीपदर्शिनी श्यामा कामिनी दर्शनी च सा ॥ ५ ॥

अथ भर्त्तानाम।—

भर्त्ता पतिर्वरः कान्तः परिणेता प्रियो गृही ॥ ६ ॥
( मं दैवज्ञतीयदैवरु। )

अथ भार्य्यानाम।—

भार्य्या पत्नी प्रिया जाया दाराश्च गृहिणी च सा ॥ ७ ॥

अथ नपुंसकादिनाम।—

नपुंसकं भवेत् क्लीवं तृतीया प्रकृतिस्तथा।
षण्ढः पण्डश्च नारी तु पोटा स्त्रीपुंसलक्षणा ॥ ८ ॥

अथ राज्ञः प्रधानपत्नीनाम।—

अथ राज्ञी च पट्टार्हा महिषी राजवल्लभा ॥ ९ ॥
( मं काहिनवश। )

अथ राज्ञः अन्यान्यपत्नीनाम ।—

भोगिन्योऽन्या विलासिन्यः सम्भुङ्क्ते यास्तु पार्थिवः ॥१०॥

राजभोग्याः सुमुख्यो यास्ता भट्टिन्य इति स्मृताः ॥ ११ ॥

( मं मूले । )

अथ वेश्यानाम ।--

वेश्या तु गणिका भोग्या वारस्त्री स्मरदीपिका ॥ १२ ॥

अथ ब्राह्मणनाम ।—

ब्रह्मा तु ब्राह्मणो विप्रः षट्कर्मा च द्विजोत्तमः ॥ १३ ॥

अथ क्षत्रियनाम ।—

राजा तु सार्वभौमः स्यात् पार्थिवः क्षत्रियो नृपः ॥ १४ ॥

अथ वैश्यनाम ।—

वैश्यस्तु व्यवहर्त्ता विड् वार्त्तिको वाणिजो वणिक् ॥ १५ ॥

( भौंक्कलिङ्गन् । )

अथ शूद्रनाम ।—

शूद्रः पज्जस्तुर्यः स्यात् द्विजदास उपासकः ॥ १६ ॥

अथ सङ्करजात्युत्पत्तिकथनम् ।—

विप्रः क्षत्रो वैश्यशूद्रौ च वर्णास्त्वत्वारोऽमी तत्र पूर्वे द्विजाः स्युः ।

एषामेव प्रातिलोम्यानुलोम्याज्जायन्तेऽन्या जातयः सङ्करेण ॥१७॥

अथ बालसामान्यनामानि ।—

बालः पाकोऽर्भको गर्भः पोतकः पृथुकः शिशुः ।

शावोऽर्भो बालिशो डिम्भो वटर्माणवको मतः ॥ १८ ॥

अथ वयोविशेषात् शिशुनामानि।—

जातोऽर्भकः पञ्चदिनेन मासतः
पाकस्त्रिभिस्तैरथ पोतकाभिधः।
षड्भिस्तु मासैः पृथुकोऽब्दतः शिशु-
स्त्रिभिर्वटुर्माणवकश्च सप्तभिः॥ १८॥

अथ वयोऽनुसारेण बालादिसंज्ञाविशेषः।—

बालोऽब्दैः पञ्चदशभिः कुमारस्त्रिंशता स्मृतः।
युवा पञ्चाशता वर्षैर्वृद्धः स्यादत उत्तरैः॥ २०॥

अथ कौमाराद्यवस्थावधिः।—

कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावधि।
कैशोरमा-पञ्चदशाद्यौवनं तु ततः परम्॥ २१॥

अथ युववृद्धनामानि।—

युवा वयःस्थस्तरुणो वृद्धस्तु स्थविरो जरन्।
प्रवया यातयामश्च जीनो जीर्णश्च जर्जरः॥ २२॥

[ इति पुरुषवयोऽवस्था। ]

अथ बालिकानामानि।—

बालोत्तानशया डिम्भा स्तनपा च स्तनन्धयी॥ २३॥

अथ कन्यानामानि।—

कन्या कुमारी गौरी तु नग्निकाऽनागतार्त्तवा॥ २४॥

अथ मध्यमानाम।—

सा मध्यमा वयःस्था च युवती सुस्तनी च सा।
चिरण्टी सुवयाः श्यामा प्रौढ़ा दृष्टरजाश्च सा॥ २५॥

अथ गुर्विणीनाम ।—

गुर्विण्यापन्नसत्त्वा स्यादन्तर्वत्नी च गर्भिणी ॥ २६ ॥

अथ वृद्धानाम ।—

निष्फला जरती वृद्धा स्थविरा च गतार्त्तवा ॥ २७ ॥

अथ रजस्वलानाम ।—

पुष्पिता मलिना म्लाना पांशुला च रजस्वला ॥ २८ ॥

अथ वन्ध्यानाम ।—

वन्ध्याऽवकेशिनी शून्या मोघपुष्पा वृथाऽऽर्त्तवा ॥ २९ ॥

अथ तनुनामानि ।—

तनुस्तनूः संहननं शरीरं कलेवरं चेत्रवपुःपुराणि ।
गात्रं च मूर्त्तिर्घनकायदेहावष्टाङ्गपीड़ानि च विग्रहश्च ॥३०॥

अथ अवयवनाम ।—

अङ्गमंसः * प्रतीकश्चापघनोऽवयवोऽपि च ॥ ३१ ॥

अथ शिरोनामानि।—

शिरः शीर्षकमुण्डं च मूर्द्धा मौलिश्च मस्तकम् ।
वराङ्गमुत्तमाङ्गञ्च कपालं केशभृत् स्मृतम् ॥ ३२ ॥

अथ केशादिनाम ।—

केशाः शिरसिजा बालाः कुन्तला मूर्द्धजाः कचाः ।
चिकुराः कचहासाथ तद्वेष्टाः कवरीमुखाः ॥ ३३ ॥

अथ दृष्टिनाम ।—

दृग्दृष्टिर्लोचनं नेत्रं चक्षुर्नयनमम्बकम् ।
ईक्षणं ग्रहणं चाक्षि दर्शनञ्च विलोचनम् ॥ ३४ ॥

---

* अङ्गमंस इत्यत्र अङ्गमङ्क इति पाठान्तरं क्वचित् दृश्यते ।

अथापाङ्गादिनाम ।—

अपाङ्गो नेत्रपर्य्यन्तो नयनोपान्त इत्यपि ।
तयोर्मध्यगता तारा बिम्बिनी च कनीनिका ॥ ३५ ॥

अथ ललाटादिनामानि ।—

भालं ललाटमलिकं कथयन्ति गोधि-
र्भ्रूर्भ्रिल्लिका च नयनोर्ध्वगरोमराजिः ।
मध्यं तयोर्भवति कूर्चमथ श्रुतिस्तु
श्रोत्रः श्रवः श्रवणकर्णवचोग्रहाश्च ॥ ३६ ॥

अथ ओष्ठादिनामानि ।—

ओष्ठोऽधरो दन्तवासो दन्तवस्त्रं रदच्छदः ।
तयोरुभयतो देशौ यौ प्रान्तौ सृक्कणी च तौ ॥ ३७ ॥

अथ घ्राणनाम ।—

घ्राणं गन्धवहो घोणा सिङ्घिनी नासिका च सा ॥ ३८ ॥

अथ शङ्खस्य नासिकामलस्य च नाम ।—

शङ्खः कर्णसमीपः स्यात्, सिङ्घाणं नासिकामले ॥ ३९ ॥

अथ मुखनाम ।—

तुण्डमास्यं मुखं वक्त्रं वदनं लपनानने ॥ ४० ॥

अथ चिवुकादिनाम ।—

ओष्ठाधरस्तु चिवुकं गण्डो गल्लः कपोलकः ॥ ४१ ॥

अथ हन्वादिनाम ।—

हनूस्तदूर्द्धं दशनाश्च दन्ता द्विजा रदास्ते रदनास्तयोक्ताः ॥ ४२ ॥

अथ जिह्वादिनाम ।—

जिह्वा रसज्ञा रसना च लोला स्यात्काकुदं तालु च तालुकं च ॥४३

अथ नाभ्यादिनाम।—

नाभिः स्यादुदरावर्त्तस्ततोऽधो वस्तिरुच्यते।
वस्तिश्च वातशीर्षं स्याद् गर्भस्थानञ्च तत् स्त्रियाः॥ ६५॥

अथ गर्भाशयनाम।—

गर्भाशयो जरायुश्च गर्भाधारश्च च स्मृतः॥ ६६॥

अथ आमाशयनाम।—

नाभिस्तनान्तरं जन्तोरामाशयः इति स्मृतः॥ ६७॥

अथ पक्काशयादिनाम।—

पक्काशयो ह्यधो नाभेर[illegible]ः स्मृतः॥ ६८॥

अथ कट्यादिनाम।—

कटिः ककुद्मती श्रोणी, नितम्बश्च कटीरकम्।
आरोहं श्रोणिफलकं कलत्रं रसनापदम्॥ ६९॥
नितम्बश्चरमं श्रोणेः स्त्रीणां जघनमग्रतः॥ ७०॥

अथ ककुन्दरादिनाम।—

ककुन्दरौ तु सर्वेषां स्यातां जघनकूपकौ।
कटिप्रोथौ स्फिचौ पायुर्गुदापानं तदासनम्॥ ७१॥

अथ भगनाम।—

गुदमुष्कद्वयोर्मध्ये यो भागः स भगः स्मृतः॥ ७२॥

अथ मुष्कनाम।—

मुष्कोऽण्डमण्डकोषश्च वृषणो बीजपेशिका॥ ७३॥

अथ शिश्नादिनाम।—

शिश्नं शेफश्च लिङ्गञ्च मेढ्रं साधनमेहने॥ ७४॥
योनिर्भगो वराङ्गं स्यादुपस्थं स्मरमन्दिरम्॥ ७५॥

अथ ऊर्वादिनाम।—

ऊरू तु सक्थिनी श्रोणि-सक्थ्नोः सन्धिस्तु वङ्क्षणः।
जङ्घोरुमध्यपर्व स्याज्जान्वष्ठीवच्च चक्रिका॥ ७६॥

अथ जङ्घादिनाम।—

जङ्घा तु प्रसृता ज्ञेया तन्मध्ये पिण्डिका तथा॥ ७७॥

अथ घुटिकानाम।—

जङ्घाऽङ्घ्रिसन्धिग्रन्थौ तु घुटिका गुल्फ इत्यपि॥ ७८॥

अथ पार्ष्ण्यादिनाम।—

गुल्फस्याधस्तु पार्ष्णिः स्यात् पदाग्रं प्रपदं मतम्॥ ७९॥

अथ पादनाम।—

विक्रमश्चरणः पादः पादाङ्घ्रिश्च पदं क्रमः॥ ८०॥

अथ उत्सङ्गादिनाम।—

क्रोडमङ्कस्तथोत्सङ्गः प्राग्भागो वपुषः स्मृतः॥ ८१॥

अथ चपेटादिनाम।—

करो भवेत् संहितविस्तृताङ्गुल-
स्तलश्चपेटः प्रतलः प्रहस्तकः।
मुष्टिर्भवेत् संहृतपिण्डिताङ्गुला-
वाकुञ्चितोऽग्रे प्रसृतः प्रकीर्त्तितः॥ ८२॥

अथ अङ्गुष्ठतर्जन्याद्योरन्तरालनाम।—

स्यात् तर्जनी मध्यमिका त्वनामिका
कनिष्ठिकाऽङ्गुष्ठयुता यदा तदा।
प्रादे[illegible]धगोस्त्रवस्तथा
वितस्तिरत्यर्थमिह क्रमादियम्॥ ८३॥

अथ हस्तनाम ।—

हस्तस्तु विस्तृते पाणावा-मध्याङ्गुलिकूर्परम् ॥ ८४ ॥

अथ सरत्न्यरत्न्योर्नाम ।—

बद्धमुष्टौ सरत्निः स्यादरत्निरकनिष्ठकः ॥ ८५ ॥

अथ व्यामनाम ।—

व्यामः सहस्तयोः स्यात्तु तिर्यग्बाह्वोर्यदन्तरम् ।

ऊर्द्ध्वं विस्तृतदोष्पाणिर्न्मानं पौरुषं विदुः ॥ ८६ ॥

अथ मर्म्मनाम ।—

जीवस्थानं तु मर्म स्याज्जीवागारं तदुच्यते ॥ ८७ ॥

अथ मर्म्मस्थानानि ।—

मर्मस्थानं च तत्प्रोक्तं भ्रूमध्यादिष्वनेकधा ॥ ८८ ॥

भ्रूमध्यकण्ठगलशङ्खकचांसपृष्ठ-

ग्रीवागुदाण्डपदपाणियुगास्थिसन्धीन् ।

वैद्याः शरीरक्षणमितानि वदन्ति मर्म-

स्थानानि चाङ्गगतिनाशकराणि मर्त्ये ॥ ८९ ॥

अथ लालानाम ।—

लाला भवेन्मुखस्रावः सृणिका स्यन्दिनी च सा ॥ ९०

अथ स्वेदनेत्रमलनाम ।—

स्वेदो घर्मश्च घर्माम्भो दूषिका नेत्रयोर्मलम् ॥ ९१ ॥

अथ मलमूत्रयोर्नाम ।—

मलं विष्ठा पुरीषञ्च विट् किट्टं पूतिकञ्च तत् ।

मूत्रं तु गुह्यनिष्यन्दः प्रस्रावः स्रवणं स्रवः ॥ ९२ ॥

अथ वलीनाम।—

वली चर्मतरङ्गः स्यात्त्वगूर्मिस्त्वक्तरङ्गकः ॥ ९३ ॥

अथ पलितनाम।—

पलितञ्च जरा लक्ष्म केशशौक्लाश्च तद्भवेत् ॥ ९४ ॥

अथ सप्तधातवः।—

रसासृङ्मांसमेदोऽस्थि-मज्जानः शुक्रसंयुताः।
शरीरस्थैर्य्यदाः सम्यक् विज्ञेयाः सप्त धातवः ॥ ९५ ॥

अथ रसनाम।—

रसस्तु रसिका प्रोक्ता स्वेदमाता वपुःस्रवः।
चर्माभश्चर्मसारश्च रक्तसूरस्रमातृका ॥ ९६ ॥

अथ रक्तनाम।—

रक्तमस्रं रुधिरं त्वगजं कीलालक्षतजानि तु।
शोणितं लोहितं चासृक् शोणं लोहञ्च चर्मजम् ॥ ९७ ॥

अथ मांसनाम।— *

मांसन्तु पिशितं क्रव्यं पलं तु रस्यमस्रजम्।
पललं जाङ्गलं कीरमामिषञ्च तदुच्यते ॥ ९८ ॥

अथ मेदोनाम।—

मेदस्तु मांससारः स्यान्मांसस्नेहो वसा वपा ॥ ९९ ॥

अथास्थिनाम।—

मेदोजमस्थिधातुः स्यात् कुल्यं कीकसकं च तत् ॥१००॥

अथ मज्जनाम।—

अस्थिसारस्तु मज्जा स्यात्तेजो बीजं तथाऽस्थिजम्।

* पत्रः शीकस्तु ... मांसपेशीत्यादि ...

जीवनं देहसारश्च तथाऽस्थिस्नेहसंज्ञकम् ॥ १०१ ॥

अथ शुक्रनाम ।—

शुक्रं पुंस्त्वं रेतो बीजं वीर्य्यञ्च पौरुषं कथितम् ।
इन्द्रियमन्नविकारो मज्जरसो हर्षणं बलञ्चैव ॥ १०२ ॥

अथ रसादीनामुत्पत्तिक्रमकथनम् ।—

रसादस्रं ततो मांसं मांसान्मेदोऽस्थि तद्भवम् ।
अस्थ्नो मज्जा ततः शुक्रमित्थमेषां जनिक्रमः ॥ १०३ ॥

अथ क्लोममस्तिष्कयोर्नाम ।—

तिलकं क्लोम मस्तिष्कं स्नेहस्तु मस्तकोद्भवः ॥ १०४ ॥

अथ अन्त्रगुल्मयोर्नाम ।—

अन्त्रं पुरीतदाख्यातं प्लीहा गुल्म इति स्मृतः ॥ १०५ ॥

अथ स्नाय्वादिनाम ।—

वसा तु वस्नसा स्नायुर्वस्नोत्मा देहवल्कलम् ।
सा त्वक् ... ... ... .. ... ॥ १०६ ॥

अथ विविधनाडीनाम ।—

... ... शिरोधिजा मन्या धमनी धरणी धरा ।
तन्तुकी जीवितज्ञा च नाडी सिंही च कीर्त्तिता ॥१०७॥

अथ कण्डरानाम ।—

कण्डरा तु महास्नायुर्महानाडी च सा स्मृता ॥१०८ ॥

अथ शरीरास्थ्यादिनाम ।—

शरीरास्थि तु कङ्कालं स्यात्करङ्कोऽस्थिपञ्जरः ।
स्रोतांसि खानि छिद्राणि कालखण्डं यकृन्मतम् ॥ १०९

अथ शिरोऽस्थ्यादिनाम।—

शिरोऽस्थि तु करोटिः स्यात् शिरस्त्राणं तु शीर्षकम्।
तत् खण्डं खर्परं प्राहुः कपालं च तदीरितम्॥ ११० ॥

अथ पृष्ठास्थ्यादिनाम।—

पृष्ठास्थि तु कशेरुः स्यात् शाखास्थि नलकं स्मृतम्॥ १११ ॥

अथ पार्श्वास्थिनाम।—

पार्श्वास्थि पर्शुका प्रोक्तमिति देहाङ्गनिर्णयः॥ ११२ ॥

अथ आत्मनाम।—

आत्मा शरीरी क्षेत्रज्ञः पुद्गलः प्राण ईश्वरः।
जीवो विभुः पुमानीशः सर्वज्ञः शम्भुरव्ययः॥ ११३ ॥

अथ प्रकृतिनाम।—

प्रधानं प्रकृतिर्माया शक्तिश्चैतन्यमित्यपि॥ ११४ ॥

अथ अहङ्कारनाम।—

अहङ्कारोऽभिमानः स्यादहंताऽहंमतिस्तथा॥ ११५ ॥

अथ मनोनाम।—

मानसं हृदयं स्वान्तं चित्तं चेतो मनश्च हृत्॥ ११६ ॥

अथ सत्त्वादिगुणनाम।—

सत्त्वं रजस्तमश्चेति प्रोक्ताः पुंसस्त्रयो गुणाः॥ ११७ ॥

अथ अक्षपञ्चकनाम।—

श्रोत्रं त्वग्रसना नेत्रं नासा चेत्यक्षपञ्चकम्॥ ११८ ॥

अथ इन्द्रियनाम।—

अक्षं हृषीकं करणं खमर्णं विषयीन्द्रियम्॥ ११९ ॥

अथ विषयनाम ।—

शब्दः स्पर्शो रसो रूपं गन्धश्च विषया अमी ।
इन्द्रियार्था गोचरास्ते पञ्चभूतगुणाः स्मृताः ॥ १२० ॥

अथ पञ्चभूतनाम ।—

आकाशमनिलस्तोयं तेजः पृथ्वी च तान्यपि ।
क्रमेण पञ्च भूतानि कीर्तितानि मनीषिभिः ॥ १२१ ॥

इत्येष मानुषवयोऽन्तरवर्णगात्र-
धात्वङ्गलक्षणनिरूपणपूर्वमाद्यः ।
वर्गः कृतस्तु भिषजां बहुदेहदोष-
नाम्नां निदानगणनिर्णयभूनिवेशः ॥ १२२ ॥

इति पशुपतिपादाम्भोजसेवासमाधि-
प्रतिसमयसमुत्थानन्दसौख्यैकसीम्ना ।
नरहरिकृतिनाऽयं निर्मिते याति नाम-
प्रचयमुकुटरत्ने शान्तिमष्टादशाङ्कः ॥ १२३ ॥

इति श्रीनरहरिपण्डितविरचिते निघण्टुराजापरनाम्न्यभिधान-
चूडामणौ मनुष्यवर्गोऽष्टादशः ।

## अथ सिंहादिवर्गः ।

—•※•—

अथ सिंहनाम ।—

सिंहः पञ्चमुखो नखी मृगपतिर्मानी हरिः केसरी
क्रव्यादो नखरायुधो मृगरिपुः शूरश्च कण्ठीरवः ।
विक्रान्तो [illegible] बहुबलो दीप्तो बली विक्रमी
हर्य्यक्षः स च दीप्तपिङ्गल इति ख्यातो मृगेन्द्रश्च सः ॥ १ ॥

अथ शरभनाम ।—

महाशृङ्गस्तु शरभो मेघस्कन्धो महामनाः ।
अष्टपादो महासिंहो मनस्वी पर्वताश्रयः ॥ २ ॥

अथ व्याघ्रनाम ।—

व्याघ्रः पञ्चनखो व्यालः शार्दूलोऽथ गुहाशयः ।
तीक्ष्णदंष्ट्रः पुण्डरीको द्वीपी भीषणनखायुधः ॥ ३ ॥

अथ चित्रव्याघ्रनाम ।—

चित्रकश्चित्रकायः स्यादुपव्याघ्रो मृगान्तकः ।
शूरश्च क्षुद्रशार्दूलश्चित्रव्याघ्रश्च स स्मृतः ॥ ४ ॥

अथ भल्लूकनाम ।—

ऋक्षो भल्लूकोऽथ भल्लः सम्पक्षो दुर्वीषः स्यात् भल्लुकः पृष्ठहृष्टिः ।
द्राविडः स्यात् दीर्घ[illegible] [illegible] दुश्चरो दीर्घदर्शी ॥ ५ ॥

अथ तरक्षुनाम ।—

मृगादस्तु स विज्ञेयस्तरक्षुर्[illegible]: ॥ ६ ॥

( हिं तरख । गौ नेकड़ेवाघ । )

अथ शृगालनाम ।—

शिवा तु भूरिमायः स्यात् गोमायुर्मृगधूर्त्तकः ।
शृगालो वञ्चकः क्रोष्टा फेरवः फेरुजम्बुकौ ।
शालावृकः शिवालुश्च फेरण्डो व्याघ्रसेवकः ॥ ७ ॥

( हिं गिदड़, गादृड़ा । गौ शेयाल । )

अथ ईहामृगनाम ।—

ईहामृगस्तु कोकः स्याद्वृको वत्सादनोऽविभुक् ।
गोवत्सा। [illegible]पलारि[illegible]गलान्तो जलाश्रयः ॥ ८ ॥

( गौ घोग् । )

अथ कुक्कुरनाम ।—

कुक्कुरः सारमेयश्च भषकः श्वानकः शुनः ।
भूस्तरो वक्रलाङ्गूलो वृकारी रात्रिजागरः ॥ ९ ॥
कौलेयको ग्राममृगो मृगारिर्मृगदंशकः ।
शूरः शुनिः शयालुश्च भषः शरदि कामुकः ॥ १० ॥

अथ विड़ालनाम ।—

विड़ालो मूषकारातिः वृषदंशो [illegible]वेड़ाल[illegible]: ।
शालावृकश्च मार्जारो मायावी दीप्तलोचनः ॥ ११ ॥

अथ लोमशविड़ालनाम। ( गन्धमार्जार ) ।—

अन्यो लोमशमार्जारः पूतिको मारजातकः ।

सुगन्धिमूत्रपतनो गन्धमार्जारकश्च सः ॥ १२ ॥

[ इति प्रसद्धाः । ]

अथ हस्तिनामानि ।—

द्विरदगजमतङ्गजेभकुम्भि-

द्विरदनवारणहस्तिपद्मिनागाः ।

करिकरटिविषाणिकुञ्जरास्ते

रदनिमदावलसंमदद्विपाश्च ॥ १३ ॥

भद्रः स्तम्बेरमो दन्ती द्रुमारिः षष्टिहायनः ।

मातङ्गः पुष्करी दन्ता-वलश्चानेकपस्त्विभः ॥ १४ ॥

अथ त्रिविधगजनामानि ।—

भद्रो मन्द्रो मृगश्चेति विज्ञेयास्त्रिविधा ग ।

वनप्रचारसारूप्य-सत्त्वभेदोपलक्षिताः ॥ १५ ॥

अथ बालादिहस्तिनामानि ।—

स बालः कलभो ज्ञेयो दुर्दान्तो व्याल उच्यते ।

प्रभिन्नो गर्जितो भ्रान्तो मत्तो मदकलश्च सः ॥ १६ ॥

अथ करिणीनामानि ।—

इभी तु करिणी ज्ञेया हस्तिनी धेनुका वशा ।

करेणुः पद्मिनी चैव मातङ्गी वासिता च सा ॥ १७ ॥

अथ खड्गनामानि ।—

खड्गः खड्गमृगः क्रोधी मुखशृङ्गो मुखेबली ।

गण्डको वज्रचर्मा च खड्गो वार्ध्रीणसश्च सः ॥ १८ ॥*

( गौ गण्डार .

---

* वार्ध्रीणसः इत्यत्र वध्रीणमीणसाविति पाठभेदो दृश्यते ।

अथ उष्ट्रनामानि ।—

उष्ट्रो दीर्घगतिर्बली च करभो दासेरको धूसरो
लम्बोष्ठो लवणः क्रमेलक-महाजङ्घौ च वीजाङ्किकः ।
दीर्घः शृङ्खलको महानथ महाग्रीवो महाङ्गो महा-
नादः सोऽपि महाध्वगः स च महापृष्ठो बलिष्ठश्च सः ॥१८॥

अथ महिषनामानि ।—

महिषः कासरः क्रोधी कलुषश्चापि सैरिभः ।
लुलापमन्तरन्ताख्या विषाणी कवली बली ॥ २० ॥
( मं कोण । तें दुन्नपोतु । हिं भैंस । गौ मोस । )

अथ महिषीनामानि ।—

महिषी मन्दगमना महाघोरा पयस्विनी ।
लुलापकान्ता कलुषा तुरङ्गद्वेषिणी च सा ॥ २१ ॥
( मं एम्मे । )

अथ वृषनामानि ।—

गौस्तु भद्रो बलीवर्दो दम्यो दान्तः स्थिरो बली ।
उक्षाऽनड्वान् ककुद्मान् स्यादृषभो वृषभो वृषः ॥ २२ ॥
धुर्य्यो धुरीणो धौरेयः शाङ्करो हरवाहनः ।
रोहिणीरमणो वोढा गोनाथः सौरभेयकः ॥ २३ ॥

अन्यच्च ।—

वृषभस्तु वृषः प्रोक्तो महोक्षः पुङ्गवो बली ।
गोनाथ उक्षा ऋषभो गोप्रियो गोपतिश्च सः ॥ २४ ॥

अथ गवां वर्णभेदाः ।—

धवलः शबलस्ताम्रश्चित्रश्च धूसरस्तथा ।

इत्यादिवर्णभेदेन ज्ञेया गावोऽत्र भेदिताः ॥ २५ ॥

अथ शकटवहवृषनामानि ।—

विनीतः शिक्षितो दान्तो धूर्य्यो वोढ़ा च धौरिकः ॥२६॥

अथ बालवृषनामानि ।—

बालो वत्सतरः प्रोक्तो दुर्दान्तो गड़िरुच्यते ॥ २७ ॥

अथ गवीनामानि ।—

गौर्मातोस्रा शृङ्गिणी सौरभेयी
माहेयी * स्याद्रोहिणी धेनुरघ्न्या ।
दोग्ध्री भद्रा भूरिमत्यानडुह्यी
कल्याणी स्यात्पावनी चार्जुनी च ॥ २८ ॥

अथ वनवृषभनामानि ।—

वनगौर्गवयः प्रोक्तो बलभद्रो महागवः ॥ २९ ॥

अथ वनगवीनामानि ।—

गवयी वनधेनुः स्यात्सैव भिल्लगवी मता ॥ ३० ॥

अथ चमरचमरीमृगनामानि ।—

चमरो व्यजनो वन्या धेनुगो बालधिप्रियः ।
तस्य स्त्री चमरी प्रोक्ता दीर्घबाला गिरिप्रिया ॥ ३१ ॥

( मं चवरीगाय। कं चंवरि। गौ चामरीगाभि। )

अथारण्यवराहनामानि ।—

वराहः स्तब्धरोमा च रोमशः शूकरः किरिः ।
वक्रदंष्ट्रः किटिर्दंष्ट्री क्रोड़ो दन्तायुधो बली ॥ ३२ ॥

* माहेयीत्यत्र माहेश्वरीति पाठान्तरं दृश्यते ।

पृथुस्कन्धश्च भूदारः पोत्री घोणान्तभेदनः ।
कोलः पोत्रायुधः शूरो बहुपत्यो रदायुधः ॥ २३ ॥

अथ ग्राम्यवराहनाम ।—

अन्यस्तु विड्वराहः स्याद्ग्रामीणो ग्रामशूकरः ।
ग्राम्यक्रोड़ो ग्राम्यकोलो विष्ठाशी दारकश्च सः ॥ २४ ॥

[ इति विलम्बितमृगाः । ]

अथ घोटकनामानि ।—

अश्वो घोटस्तुरङ्गोऽर्वा तुरगश्च तुरङ्गमः ।
वाहो वाजी मुद्गभोजी वीतिः सप्तिश्च सैन्धवः ॥ २५ ॥
हरिर्हयश्च धाराटो जवनो जीवनो जवी ।
गन्धर्वो वाहनश्रेष्ठः श्रीभ्राताऽमृतसोदरः ॥ २६ ॥

( मं कुदुरे । गो घोंड़ा । )

अथाश्वभेदाः ।—

आरट्टसिन्धुजवनायुजपारसीक-
काम्बोजबाह्लिकमुखा विविधास्तुरङ्गाः ।
सान्नाणशैफकमुखा अपि देशतः स्यु-
र्वर्णेन तेऽपि च पुनर्बहुधा भवन्ति ॥ २७ ॥

अथ वर्णभेदेन नामभेदकथनम् ।—

श्वेतः कर्कः सोऽथ रक्तस्तु शोणो हैमः कृष्णो नीलवर्णस्तु नीलः ।
शुभ्रैर्नेत्रैर्मल्लिकाक्षो निदिष्टः कृष्णैरक्तः सोऽयमिन्द्रायुधाख्यः ॥२८॥
इत्थं नानावर्णभेदेन वाजी ज्ञातव्योऽयं लोकरूढ़ैः सुधीभिः ।
मत्वाऽऽभिर्न प्रपञ्चः कृतोऽ[illegible]योऽप्यत्र वाजी कुलीनः ॥२९॥

अथ वालघोटकनामानि ।—

सुकुलः सुविनीताश्वः किशोरस्तुरगार्भकः ॥ ४० ॥

अथाश्विनीनामानि ।—

वाजिनी वड़वा चापि प्रसूरश्वाऽश्विनी च सा ॥ ४१ ॥

अथ गर्द्दभनामानि ।—

गर्दभः शङ्कुकर्णश्च वालेयो रासभः खरः ।
भारवाहो भूरिगमश्चक्रीवान् धूसराह्वयः ॥ ४२ ॥

( कं कर्त्तं । गो गाधा । )

अथाश्वायां गर्द्दभादुत्पन्नस्य नामानि ।—

वेसरस्त्वश्वखरजः सक्तगर्भोऽध्वगः चमी ।
सन्तुष्टो मिश्रजः प्रोक्तो मिश्रशब्दोऽतिभारगः ॥ ४३ ॥
( गो खच्चर । )

अथ छागलनामानि ।—

अजो वुक्कश्च मेध्यः स्याल्लम्बकर्णः पशुश्च सः ।
छागलो वर्करश्छागस्तुभो वस्तः पयस्वलः ॥ ४४ ॥

अथाजानामानि ।—

अजा पयस्विनी भीरुश्छागी मेध्या गलस्तनी ॥ ४५ ॥

अथ मेषनामानि ।—

मेषो भेड़ो हुड़ो मेढ्रः जर्णायुरुरणस्तथा ।
एड़कः शृङ्गिणोऽविः स्यादुरभ्रो रोमशो वली ॥ ४६ ॥
नाना अविशेषेण मेषा नानाविधा श्रमी ॥ ४७ ॥

अथ मृगभेदानां नामानि ।—

मृगः कुरङ्गो वातायुः कृष्णसारः सुलोचनः ।
हरिणोऽजिनयोनिः स्यादेणः पृषत इत्यपि ॥ ४८ ॥
वातप्रमाथ सारङ्गः शाखिशृङ्गश्च चित्रलः ।
अन्यश्च भारशृङ्गः स्यात् महाशृङ्गो वनप्रियः ॥ ४९ ॥
रुरुस्तु रौहिषो रोहो स्यान्यङ्कुश्चैव शम्बरः ।
नीलकः पृषतश्चैव रङ्कुः शबलपृष्ठकः ॥ ५० ॥
शिखर्युपङ्कुरङ्गः स्यात् श्रीकारी च महाजवः ।
जवनो वेगिहरिणो जङ्घाली जाङ्घिकाह्वयः ॥ ५१ ॥

अथ वानरनामानि ।—

वानरो मर्कटः कीशः कपिः शाखामृगो हरिः ।
प्लवंगमो वनौकाश्च प्लवङ्गः प्लवगः प्लवः ॥ ५२ ॥

अथ वानराणां जातिभेदाः ।—

गोलाङ्गूलस्तु गौरास्यः कपिः कृष्णमुखो हि सः ।
मन्दुराभूषणाख्योऽयं विज्ञेयः कृष्णवानरः ॥ ५३ ॥

अथ शल्यकनामानि ।—

शल्यकः स्यात् शल्यमृगो वज्रशल्किर्बिलेशयः ॥ ५४ ॥
( मं एनयसग । कं खवलि मांजर । गौ शजारु । )

अथ शशकभेदः, तन्नामानि च ।—

शशोऽन्यः [illegible] शशी च शशकी च [illegible]
[illegible] नामानि तु विज्ञेयानि [illegible] ॥

अथ कोकडनामानि ।—

कोकड़ो जवन: प्रोक्त: कोकोवाचो विलेशय: ।

ज्ञेयश्चमरपुच्छश्च लोमशो धूम्रवर्णक: ॥ ५७ ॥

( मं मरी । कटुखार इति लोके । )

अथ नकुलनामानि ।—

नकुल: सूचिरदन: सर्पारिर्लोहितानन: ॥ ५८ ॥

( मं नेउरा । कं मङ्गुस । चिं नेवल । गौ वेजी । )

अथ सर्पनामानि ।—

दर्वीकरो द्विरसन: पातालनिलयो बली ।

नागश्च काद्रवेयश्च वक्रगो दन्दशूकक: ॥ ५९ ॥

चक्षु:श्रवा विषधरो गूढाङ्घ्रि: कुण्डली फणी ।

पन्नगो वायुभक्षश्च भोगी स्याज्जिह्मगश्च स: ॥ ६० ॥

सर्पो दंष्ट्री भुजङ्गोऽहिर्भुजगश्च सरीसृप: ।

कञ्चुकी दीर्घपुच्छश्च द्विजिह्व उरगश्च स: ॥ ६१ ॥

( मं साप । )

अथ विशेषविशेषसर्पलक्षणम् ।—

फणिनो धवलाङ्गा ये ते नागा इति कीर्त्तिता: ।

अन्ये रक्तादिवर्णाढ्या बोध्या: [illegible] ॥ ६२ ॥

गोनसो मण्डलीलश्चित्राङ्गो व्यन्तरो भवेत् ॥ ६३ ॥

कुत्सितो दुरितो ज्ञेयो राजिलं कुङ्कुमं विदुः ॥ ६४ ॥

( मं [illegible] । )

अथ [illegible] नामानि ।—

[illegible] तक्षका: ।

कर्कोटः कुलिकः शङ्ख इत्यमी नागनायकाः ॥ ६५ ॥

तदान्वयास्तु कुमुद-कम्बलाश्वतरादयः ॥ ६६ ॥

अथ द्विमुखाहिनाम ।—

आपद्धृत् द्विमुखो चैव धामणीत्यादयः परे ॥ ६७ ॥

( मं इतिश्रा । बम्० दुन्दुल । गौ राजसाप, शाँखिनी साप । )

[ इति सर्पविशेषाः । ]

अथ मूषिकनामानि ।—

मूषिको मूषकः पिङ्गोऽप्याखुरुन्दुरुको नखी ।

खनको विलकारी च धान्यारिश्व बहुप्रजः ॥ ६८ ॥

अथ महामूषकनाम ।—

अन्यो महामूषकः स्यान्मूषो विघ्नेशवाहनः ।

महाङ्गः शस्यमारी च भूफलो भित्तिपातनः ॥ ६९ ॥

( मं दोडुइलि । )

अथ छुछुन्दरीनामानि ।—

छुछुन्दरी राजपुत्री प्रोक्ताऽन्या प्रतिमूषिका ।

सुगन्धिमूषिका गन्धा शुण्डिनी शुण्डमूषिका ॥ ७० ॥

( गौ छुँचो । )

अथ गोधानामानि ।—

गोधा तु गोधिका ज्ञेया दारुमल्लाह्वया च सा ।

खरचर्मा पञ्चनखी पुलका दीर्घपुच्छिका ॥ ७१ ॥

( मं जडु । हिं गोही । गौ गोसाप । )

अथ गौधेयनामानि ।—

गोधाजः स्यात्तु गौधेयो गौधारो गोधिकासुतः ॥ ७२ ॥

अथ बर्बरीनामानि ।—

बर्बरी घोरिका घोरा दीर्घरूपा भयावहा ।
स्थूलचक्षुर्दीर्घपादा सर्पभक्षी गुणारिका ॥ ७३ ॥

( मं घुणारि । )

अथ गृहगोधिकानामानि ।—

ब्राह्मणी गृहगोधा च सुपदी रक्तपुच्छिका ॥ ७४ ॥

( मं ब्राह्मणी । कं अत्ति । हिं छिपकली, विषखापरा ।
गो टिक्टिकि । )

अथ कृकलासनामानि ।—

सरटः कृकलासः स्यात् प्रतिसूर्य्यः भयानकः ।
वृत्तिस्थः कण्टकागारो दुरारोहद्रुमाश्रयः ॥ ७५ ॥

( मं गोसुवे । गौ गिरगिटि, काँक्लास् । )

अथ जाहकनामानि । ( कृष्णसरटः ) । —

जाहको गात्रसङ्कोची मण्डली बहुरूपकः ।
कामरूपी विरूपी च विलवासः प्रकीर्त्तितः ॥ ७६ ॥

( कं येलुसरडु । रक्तशुपुनि बहुरूपी इति च वङ्गीया । )

अथ पल्लीनामानि ।—

पल्ली तु मुसली प्रोक्ता गृहगोधा गृहालिका ।
ज्येष्ठा च कुड्यमत्स्या च पल्लिका गृहगोधिका ॥ ७७ ॥

( गौ टिक्टिकिविशेष । )

अथ ऊर्णनाभनामानि ।—

तन्तुवाय ऊर्णनाभो लूता मर्कटकः क्रिमिः ॥ ७८ ॥

( हिं मकड़ी । गो माकड़सा । )

अथाञ्जलिकानाम ।—

हालाहला त्वञ्जलिका गिरिका बालमूषिका ॥ ७९ ॥

( गो नेंटे इंदुर । )

अथ वृश्चिकनामानि ।—

वृश्चिकः शूककीटः स्यादलिद्रोणश्च वृश्चिके ॥ ८० ॥

( मं विञ्चू । हिं विच्छू । गो विछा । )

अथ कर्णजलूकानामानि ।—

अथ कर्णजलूका स्याच्चित्राङ्गी शतपद्यपि ॥ ८१ ॥

( हिं काणखजूरा । गो काणकोटारो, केन्नो, कणखडाइ । )

अथ पिपीलिकानामानि ।—

पिपीलकः पिपीलश्च स्त्रीसंज्ञा च पिपीलिका ॥ ८२ ॥

( गौ चुटे पिंपड़े । )

अथ तैलपिपीलिकानामानि ।—

उदङ्गा कपिजङ्घिका ज्ञेया तैलपिपीलिका ॥ ८३ ॥

( गौ राङ्गापिंपड़े । )

अथ कृष्णपिपीलिकानामानि ।—

कृष्णाऽन्या च पिपीली तु स्थूला वृक्षरुहा च सा ॥ ८४ ॥

( गौ काटपिंपड़े । )

अथ मत्कुणनामानि ।—

मत्कुणो रक्तपायी स्याद्रक्ताङ्गो मञ्चकाश्रयी ॥ ८५ ॥

( गौ छारपोका । )

[ इति विलेशयाः । ]

अथ जलजन्तुनामानि।—

यादस्तु जलजन्तुः स्याज्जलप्राणी जलेशयः।
तत्रातिक्रूरकर्मा यः स जलव्याल उच्यते ॥ ८६ ॥

अथ मत्स्यनाम।—

मत्स्यो वैसारिणो मीनः पृथुरोमा झषोऽण्डजः।
विसारः शकुली शल्की पाठीनोऽनिमिषस्तिमिः ॥८७॥

अथ मत्स्यविशेषनामानि।—

राजीवः शकुलः शृङ्गी वागुसः शल्यपल्लवौ।
पाठीनः शकुलश्चैव नद्यावर्त्तश्च रोहितः ॥ ८८ ॥
मद्गुरस्तिमिरित्याद्या ज्ञेयास्तद्भेदजातयः।
तद्भेदो मकराख्योऽन्यो मातङ्गमकरोऽपरः ॥ ८९ ॥
चिलिचिमस्तिमिश्चैव तथाऽन्यश्च तिमिङ्गिलः।
तिमिङ्गिलगिलश्चेति महामत्स्या अमी मताः ॥ ९० ॥

[ इति मत्स्याः। ]

अथ शिशुकनामानि।—

शिशुकः शिशुमारः स्यात् स च ग्राहो वराहकः ॥९१॥

( मं सुसर। गौ शुशुक। "शुशु" इति वङ्गीयाः। )

अथ कुम्भीरनामानि।—

भवेन्नक्रस्तु कुम्भीरो गलग्राहो महाबलः ॥ ९२ ॥

अथ कच्छपनामानि।—

कच्छपः कमठः कूर्मो गूढाङ्गो धरणीधरः।
कच्छेष्टः पल्वलावासो वृत्तः कठिनपृष्ठकः ॥ ९३ ॥

( मं कांसव। गौ कच्छिम, शुन्दि, काठा, वारैकोल। )

अथ कर्कटनामानि।—

कर्कटः स्यात् कर्कटकः कुलीरश्च कुलीरकः।
सन्दंशकः पङ्कवासस्तिर्य्यग्गामी स चोद्ध्वदृक् ॥ ८४ ॥

अथ मण्डूकनामानि।—

मण्डूको दर्दुरो मण्डो हरिर्भेकश्च लूलकः।
शालूरः स च वर्षाभूः प्लवः कटुरवस्तथा।
समोऽन्यश्च मुण्डी च प्लवङ्गश्च प्लवङ्गमः ॥ ८५ ॥

अथ राजमण्डूकनामानि।—

पीतोऽन्यो राजमण्डूको महामण्डूक इत्यपि।
पीताङ्गः पीतमण्डूको वर्षाघोषो महारवः ॥ ८६ ॥

( गौ सोणावेङ्। )

अथ जलौकानामानि।—

जलूका तु जलौका स्याद्रक्तपा रक्तपायिनी।
रक्तसन्दोहिका तीक्ष्णा चर्म्मटी * जलजीविनी ॥ ८७ ॥

( मं जिगुले। गौ जोंक। )

अथ दात्यूहनामानि।—

जलकाकस्तु दात्यूहः स च स्यात्कालकण्ठकः ॥ ८८ ॥

( मं निकरकागे। गौ डाकपाखी।—

अथ कोपीनामानि।—

जलपारावतः कोपी प्रोक्तो जलकपोतकः ॥ ८९ ॥

( गौ जलपिपि। "फेंपी" इति लोके। )

---

* चर्मटी इत्यत्र वमनीति पाठान्तरं दृश्यते।

तथा च ।—

स्थले करितुरङ्गाद्या यावन्तः सन्ति जन्तवः ।
जलेऽपि ते च तावन्तो ज्ञातव्या जलपूर्वकाः ॥ १०० ॥

[ इति जलेशयाः । ]

अथ पक्षिसामान्यनामानि ।—

खगविहगविहङ्गमा विहङ्गः
पिपतिषुपत्रिपतत्रिपत्रवाहाः ।
शकुनिशकुनविष्किराण्डजा विः
पतगपतत्रिनभसङ्गमा नगौकाः ॥ १०१ ॥

वाजी पत्ररथः पक्षी द्विजो नीड़ोद्भवोऽनुगः ।
शकुन्तः पतगः पिच्छन् पतङ्गो विकिरश्च सः ॥१०२॥

अथ गरुड़नामानि ।—

गरुड़स्तार्क्ष्यो वैनतेयः खगेन्द्रो भुजगान्तकः ।
वज्रतुण्डश्च दाक्षाय्यो गरुत्मान् दूरदर्शनः ॥ १०३ ॥

अथ श्येननामानि । ( सञ्चानः ) ।—

श्येनः शशादः क्रव्यादः क्रूरो वेगी खगान्तकः ।
कामान्धस्तीव्रसम्पातस्तरस्वी तार्क्ष्यनायकः ॥ १०४ ॥

( मं सिचया । गौ सञ्चाल, वाज, शिकरे । )

अथ काष्ठकुट्टनाम ।—

काष्ठकुट्टः काष्ठभङ्गी काष्ठकूटश्च शब्दितः ॥ १०५ ॥

( मं काठकुटा । गौ काठठोकरा पाखी । )

अथ करकनामानि । ( रणगोधः । )—

करको नीलपिच्छः स्यात् लम्बकर्णो रणप्रियः ।
रणपक्षी पिच्छबाणः स्थूलनीलो भयङ्करः ॥ १०६ ॥

अथ कङ्कनामानि ।—

कङ्कस्तु लोहपृष्ठः स्यात् सन्दंशवदनः खरः ।
रणालङ्करणः क्रूरः स च स्यादामिषप्रियः ॥ १०७ ॥
( मं कागे । गौ काँक्पाखी । "हाड़गिले" इति केचित् । )

अथ काकनामानि ।—

काकस्तु वायसो ध्वाङ्क्षः काणोऽरिष्टः सकृत्प्रजः ।
बलिभुक बलिपुष्टश्च धूलिजङ्घो निमित्तकृत् ॥ १०८ ॥
कौशिकारिश्चिरायुश्च करटो मुखरः खरः ।
आत्मघोषो महालोलश्चिरजीवी चलाचलः ॥ १०९ ॥

अथ द्रोणकाकनामानि ।—

द्रोणस्तु द्रोणकाकः स्यात् काकोलोऽरण्यवायसः ।
वनवासी महाप्राणः क्रूररावी फलप्रियः ॥ ११० ॥
( मं गूगी । गौ दाँड़काक । )

अथोलूकनामानि । ( पेचकः ) ।—

उलूकस्तामसो घूको दिवान्धः कौशिकः कुविः ।
नक्तञ्चरो निशाटश्च काकारिः क्रूरघोषकः ॥ १११ ॥

अथ वल्गुलीनामानि ।—

वल्गुली वक्त्रविष्ठा सा दिवान्धा च निशाचरी ।
खैरिणी च दिवास्वापा मांसेष्टा मातृवाहिनी ॥ ११२
( मं नचिलु । गौ वादुड़ । )

अथ चर्मकोनामानि।—

चर्मकी चर्मपत्ती च चर्माङ्गी चर्मगन्धिका।
जत्यागुकारिणी चर्मी चर्मपत्री च मेलिका।
दिनान्धा नक्तभोजी च भ्रामणी कर्णिकाह्वया॥ ११३॥

(मं चमेडी। गो चामृचिके।)

अथ मयूरनामानि।—

मयूरश्च--की वर्ही नीलकण्ठः शिखी ध्वजी।
मेघानन्दी कलापी च शिखण्डी चित्रपिच्छकः॥ ११४॥
बर्हिणः प्रचलाकी च शुक्लापाङ्गः शिखावलः।
केकी भुजङ्गभोजी च मेघनादानुलासकः॥ ११५॥

अथ मयूरपक्षादीनां तत्कूजनस्य च नामानि।—

बर्हभारः कलापः स्याद्बर्हनेत्राणि चन्द्रकाः।
प्रचलाकः शिखा ज्ञेया ध्वनिः केकेति कथ्यते॥ ११६॥

अथ क्रौञ्चनामानि।—

कुररः खरशब्दः क्रुङ् क्रौञ्चः पङ्क्तिचरः खरः॥ ११७॥

अथ नीलक्रौञ्चनामानि।—

नीलक्रौञ्चस्तु नीलाङ्गो दीर्घग्रीवोऽतिजागरः॥ ११८॥

( मं वेल्लकि। गो कोँच वक।)

अथ वकनामानि।—

वकः कङ्को वकोटश्च तीर्थसेवी च तापसः।
मीनघाती मृषाध्यानी निश्चलाङ्घ्रिश्च दाम्भिकः॥११९॥

अथ शकुनीनामानि ।—

शकुनी पीतकी श्यामा पाण्डवी श्वेतपक्षिणी ॥ १२० ॥

अथ दुर्गानामानि ।—

दुर्गा भगवती चैव सैवोक्ता सत्यपाण्डवी ॥ १२१ ॥

अथ बलाकानामानि ।—

बलाका विषकण्ठी स्यात् शुष्काङ्गी दीर्घकन्धरा ॥ १२२ ॥

अथ घर्मान्तकामुकीनाम ।—

घर्मान्तकामुकी श्वेता मेघनादा जलाश्रया ॥ १२३ ॥

( हिं बगुलीवक । )

[ इति प्रतुदाः । ]

अथ चक्रवाकनामानि ।—

चक्रः कोकश्चक्रवाको रथाङ्गी
भूरिप्रेमा द्वन्द्वचारी सहायः ।
कान्तः कामी रात्रिविश्लेषगामी
रामावक्षोजोपमः कामुकश्च ॥ १२४ ॥

( गौ चकाचकी, रामचका । )

अथ सारसनामानि ।—

सारसो रसिकः कामी नीलाङ्गो मणितारवः ।
नीलकण्ठो रक्तनेत्रः काकवाक् कामिवल्लभः ॥ १२५ ॥

अथ टिट्टिभीनामानि ।—

टिट्टिभी पीतपादश्च सदालूता नृजागरः ।
निशाचरी चित्रपक्षी जलशायी सुचेतना ॥ १२६ ॥

( मं टिटेड़ो । गौ टिटीपाखी । )

अथ जलकुक्कुटकनाम ।—

जलकुक्कुटकस्त्वान्यो जलशायी जलस्थितः ॥ १२७ ॥

( गौ पानकौड़ी । )

अथ ठिक्कनामानि ।—

ठिकः पाशगड़ो ठिक्को जलसार्यतिलाशयः ॥ १२८ ॥

जलपक्षी महापक्षी जलसाधतिवासकः ॥ १२९ ॥

अथ जलसर्पनामानि तद्विशेषकथनञ्च ।—

जलशायी मण्डलीनो मन्दगः श्लेष्मलोऽविषी ।

सराजी राजिमन्तश्च जलसर्पः स दुन्दुभिः ॥ १३० ॥

द्विविगोडो निसखैव चित्रो शल्यो च गोमुखः ॥ १३१ ॥

अथ क्षुद्रसारसलक्षणम् ।—

अन्ये च प्लवगा ये ये ते सर्वे क्षुद्रसारसाः ।

श्वेताश्चिताश्च धूम्राद्या नानावर्णानुगाह्वयाः ॥ १३२ ॥

अथ हंसनामानि ।—

हंसो धवलपक्षो स्यात् चक्राङ्गो मानसालयः ॥ १३३ ॥

अथ कलहंसनामानि ।—

कलहंसस्तु कादम्बः कलनादो मरालकः ॥ १३४ ॥

( हिं करवा । गो वालिहांस । )

अथ राजहंसादिनामानि ।—

एतेषु चञ्चुचरणेष्वरुणेषु राज-

हंसोऽपि धूसरतरेषु च मल्लिकाख्यः ।

कालेषु तेषु धवलो किल धार्त्तराष्ट्रः
सोऽप्येष धूसरतनुस्तु भवेदभव्यः ॥ १३५ ॥
( मं वक्लको । गौ राजहांस । )

अथ हंसीनाम ।—

हंसी तु वरटा ज्ञेया वरला वारला च सा ।
मराली मञ्जुगमना चक्राङ्गी मृदुगामिनी ॥ १३६ ॥
[ इति प्लवगाः । ]

अथ विष्किराः ।—

अथ कुक्कुटनामानि ।—

कुक्कुटस्ताम्रचूड़ः स्यात्कालज्ञश्चरणायुधः ।
नियोद्धा कृकवाकुश्च विष्किरो नखरायुधः ॥ १३७ ॥
( तें कोड़ो । कं कुक्क । हिं मुर्गा । गौ कुँक्ड़ा । )

अथ कपोतनामानि ।—

स्यात्कपोतः कोकदेवो * धूसरो धूम्रलोचनः ।
दहनोऽग्निसहायश्च भीषणो गृहनाशनः ॥ १३८ ॥
( मं घोगलापक्षो । गौ घुघु । "घोलापाखो" इति केचित् । )

अथ पारावतनामानि ; तद्भेदाश्च ।—

पारावतः कलरवोऽरुणलोचनश्च
पारापतो मदनकाकुरवश्च कामी ।
रक्तेक्षणो मदनमोहनवाग्विलासो
कण्ठीरवो गृहकपोतक एष उक्तः ॥ १३९ ॥

---

* कोकदेव इत्यत्र कौकुटिक इति पाठान्तरं दृश्यते ।

पारावतोऽन्यदेशीयः कामुको घुम्नुसारवः * ॥ १४० ॥
जलपारावतः कामी ज्ञेयो गलरवश्च सः ॥ १४१ ॥
( मं परेवा । तें पारुवापिट्ट । हिं कबुतर । गौ पायरा । )

अथ कोकिलनामानि ।—

कोकिलः परपुष्टः स्यात् कालः परभृतः पिकः ।
वसन्तदूतस्ताम्राक्षो गन्धर्वो मधुगायनः ॥ १४२ ॥
वासन्तः कलकण्ठश्च कामान्धः † काकलीरवः ।
कुहूरवोऽन्यपुष्टश्च मत्तो मदनपाठकः ॥ १४३ ॥
( हिं कोइला । गौ कोकिल । )

अथ कोकिलानामानि ।—

कोकिला त्वन्यपुष्टा स्यान्मत्ता परभृता च सा ।
सुकण्ठी मधुरालापा कलकण्ठी मधूदया ॥ १४४ ॥
वसन्तदूती ताम्राक्षी पिकी सा च कुहूरवा ।
वासन्ती कामगा चैव गन्धर्वा वनभूषणी ॥ १४५ ॥

अथ शुकनामानि ।—

शुकः कीरो रक्ततुण्डो मेधावी मञ्जुपाठकः ॥ १४६ ॥
( मं हैतिचि । हिं शुगा । गौ टेयापाखी । )

अथ राजशुकनामानि ।—

अन्यो राजशुकः प्राज्ञः शतपत्रो नृपप्रियः ॥ १४७ ॥
( मं हैगुणी । हिं राजशुगा । गौ मयना । )

---

* घुम्नुसारव इत्यत्र घुल्घुलारव इति पाठान्तरं दृश्यते ।
† कामान्ध इत्यत्र कामग इति पाठान्तरं विद्यते ।

अथ सारिकानामानि ; तद्भेदाश्च ।—

सारिका मधुरालापा दूती मेधाविनी च सा ।
कवरी कुत्सिताङ्गी च कष्कलाङ्गी च शारिका ॥ १४८ ॥

( मं कवरीसालङ्घा । गौ सालिकपाखी । )

अथ राजसारिकानामानि ।—

पीतपादाह्युज्ज्वलाक्षी रक्तचञ्चुश्च सारिका ।
पठन्ती पाठवार्त्ता च बुद्धिमती भूसारिका ॥ १४९ ॥
गोराटिका गोकिराटी गोरिका कलहप्रिया ॥ १५० ॥

अथ चातकनामानि ।—

चकोरश्चन्द्रिकापायी कौमुदीजीवनोऽपि सः ।
चातकस्तोककः सोऽपि सारङ्गो मेघजीवनः ॥ १५१ ॥

( हिं तोका । गौ फटिकजलपाखी । )

अथ हारीतनामानि ; ( गौरतित्तिरिः ) ।—

हारीतकस्तु हारीतस्तेजलश्च * कपिञ्जलः ॥ १५२ ॥

( गौ पाछानाड़ापाखी । )

अथ धूसरीनामानि । ।—

धूसरी पिङ्गला सूची भैरवी योगिनी जया ।
कुमारी सुविचित्रा च माता कोटरवासिनी ॥ १५३ ॥

( मं पिङ्गला । कं धूसरी । )

---

* तेजल इत्यत्र गञ्जलश्चेति पाठान्तरं दृश्यते

अथ तैलपानामानि ।—

तैलपा तु परोष्णी स्याज्जतुकाऽजिनपत्रिका ॥ १५४ ॥

( मं गौजगुलु । गो तैलापोका, आरशोला । )

अथ भृङ्गकाष्ठकुट्टकयोः नामानि ।—

भृङ्गः कुलिङ्गो धूम्याटो दार्वाघातः * शतच्छदः ॥ १५५ ॥

( मं वालियतु । गौ फिङ्गे । गौ दार्वाघाट, काठठोकरा । )

अथ भरद्वाजादिपक्षिविशेषाणां नामानि ।—

व्याघ्राटः स्याद्भरद्वाजः खञ्जनः खञ्जरीटकः ।

समन्तभद्रः कृष्णस्तु स्वल्पकृष्णः सुभद्रकः ॥ १५६ ॥

द्वीपवासी मुनिश्चैव चातुर्मास्यविदर्शनः ।

चाषः किकीदिविः प्रोक्तो नीलाङ्गः पुण्यदर्शनः ॥ १५७ ॥

अथ वर्त्तकनामानि ।—

वर्त्तको वर्त्तिको वर्त्तिर्गोञ्जिकायश्च कथ्यते ॥ १५८ ॥

( हिं वटेरिगुड़गुड़े । गौ भारुइपाखी । )

अथ चटकनामानि ।—

कलविङ्कस्तु चटकः कामुको नीलकण्ठकः ॥ १५९ ॥

( मं चिमणा । हिं चवुड़िया । गौ चड़ाइ । )

अथ चटका-बालचटकयोर्नाम ।—

चटका कलविङ्की स्यात् चाटकैरस्तु तत्सुतः ॥ १६० ॥

अथारण्यचटकनामानि ; तद्भेदश्च ।—

धूसरोऽरण्यचटकः कुजो भूमिशयश्च सः ।

---

* अत्र टान्तत्वमेव युक्तं वार्त्तिके संज्ञायां टाकारत्वस्यैव साधनात् ।

भारीटः श्यामचटकः शैशिरः कणभक्षकः ॥ १६१ ॥

( गो गुड़गुड़े, नागरभडुइ, छातार । )

धूसरोऽन्योऽतिसूक्ष्मः स्यात् चटको धान्यभक्षकः ।
गृहकृत्यक्षमो भीरुः कृषिद्विष्टः कणप्रियः ॥ १६२ ॥

अथ लावकनामानि ।—

लावा तु लावकः प्रोक्तो लावः स च लवः स्मृतः ॥ १६३ ॥

( मं लावुगे । कं लावुकपिट्ट । चिं लाओया । गौ वटेरपाखी । )

अथ तित्तिरिनामानि ; तद्भेदश्च ।—

तित्तिरिस्तित्तिरश्चैव तैत्तिरो याजुषो गिरिः ॥ १६४ ॥
कृष्णोऽन्यस्तित्तिरिः शूरः सुभूतिः परिपालकः ॥ १६५ ॥

( तें तोतुकपिट्ट । गौ तितिरपाखी । )

अथ क्षुद्रोलूकनाम ।—

गोत्रद्वेषी भूरिपक्षः शतायुः सिद्धिकारकः ।
क्षुद्रोलूकः शाकुनेयः पिङ्गलो डुण्डुलश्च सः ।
वृक्षाश्रयी वृहद्रावः पिङ्गलाक्षो भयङ्करः ॥ १६६ ॥

( गौ मिंडपेँचा । )

अथ श्यामानामानि ।—

श्यामा वराही शकुनी कुमारी
दुर्गा च देवी चटका च कृष्णा ।
स्यात्पोतकी पाण्डविका च वामा
सा काञ्चिका स्यात् सितविम्बिनी च ॥ १६७ ॥

अथ खद्योतनाम ।—

प्रभाकीटस्तु खद्योतः खज्योतिरुपसूर्य्यकः ॥ १६८ ॥

( हिं पटवीजना । गौ जोनाकीपोका । )

अथ तैलकीटनाम ।—

तैलिनी तैलकीटः स्यात् षड्विम्बा दद्रुनाशिनी ॥१६९॥

अथ इन्द्रगोपनाम ।—

शक्रगोपस्तु वर्षाभू रक्तवर्णेन्द्रगोपकौ ॥ १७० ॥

( हिं मखमली । गौ छोटकेन्नुर, आषाढ़े पोका । "तीज वीरबहुटी" इति ख्याते रक्तवर्णकीटे । )

अथ भ्रमरनामानि ।—

भ्रमरः षट्पदो भृङ्गः कलालापः शिलीमुखः ।
पुष्पन्धयो द्विरेफोऽलिर्मधुकृन्मधुपो द्विभः * ॥ १७१ ॥
भसरश्चञ्चरीकोऽलिः भृङ्गारी मधुलोलुपः ।
इन्दीन्दिरश्च मधुलिट् मत्तो घुमुघुमारवः ॥ १७२ ॥

( मं देननोश । गौ भोमरा । )

अथ मधुमक्षिकानामानि ।—

वर्वणा मक्षिका नीला सरघा मधुमक्षिका ॥ १७३ ॥

( मं अडवियनोश । गौ मौमाछि ।

अथ वरटानामानि ।—

गम्भोली वरटा क्षुद्रा क्रूरा स्यात् क्षुद्रवर्वणा ।

---

* द्विभः इत्यत्र द्विपः इति पाठान्तरं दृश्यते ।

रंरिकश्छत्रकारी च तीक्ष्णदंष्ट्रो महाविषः ।
पीतवर्णा दीर्घपादो मत्सर्य्यः क्रूरदंष्ट्रकः ॥ १७४ ॥
( मं टाण्टाच्याकाण्डर । गौ बोल्ता । )

अथ दंशनामानि ।—

दंशो दुष्टमुखः क्रूरः क्षुद्रिका वनमक्षिका ॥ १७५ ॥
( गौ डाँश । )

अथ मक्षिकानामानि ।—

मक्षिका वम्नतोत्पन्ना वमनी चापला च सा ॥ १७६ ॥
( मं नोरजु । )

अथ मशकनामानि ; तद्भेदश्च ।—

मशको वज्रतुण्डश्च सूच्यास्यः सूक्ष्ममक्षिका ।
रात्रिजागरदो धूम्रो नीलाभ्रस्त्वन्यजातयः ॥ १७७ ॥
अष्टाङ्घ्रिरष्टपादश्च गृहवासी च कृष्णकः ॥ १७८ ॥

अथ कालिकनामानि ।—

कालिकः कोकिलः प्रोक्तः कालुष्यः कृष्णदंष्ट्रकः ।
कसारिका दीर्घमूर्च्छा गृहवासा विलाशयी ॥ १७९ ॥
( मं कोलिया ; कं कसारी । तें द्देतु । )

अथ यूकानामानि ।—

यूका तु केशकीटः स्यात् स्वेदजः षट्पदः स्मृतः ॥ १८० ॥
( मं येवेयद्देतु । गौ उकुन । )

अथ पक्ष्मजानामानि ।—

पक्ष्मजा पक्ष्मयूका स्यात् सूक्ष्मा षट्चरणाऽपि सा ॥ १८१ ॥
( मं कूरे । )

अथ श्वेतयूकानामानि।—

श्वेतयूकाऽङ्गवस्त्रोत्था लिक्षा यूकाङ्गवस्त्रके ॥ १८२ ॥

( गौ निकि। )

अथ कीटसामान्यलक्षणम्।—

कश्चित्तेष्वेषु यो जीवः क्षोदीयान् वृश्चिकादिकः।
तत्र तत्र बुधैर्ज्ञेयः स सर्वः कीटसंज्ञकः ॥ १८३ ॥

अथ कीटिकानामानि।—

कीटिका चटिका प्रोक्ता वज्रदंष्ट्रा बहुप्रजा।
कृष्णाङ्गी तामसी शूरा कीरिभारा महाबला ॥ १८४ ॥

अथ मङ्कोरनामानि।—

मङ्कोरो मङ्कटः कृष्णस्तीक्ष्णदंष्ट्रो विशालुकः।
षट्पादकस्तु मात्सर्यो माकोटस्तूर्द्ध्वगुह्यकः ॥ १८५ ॥

( मं चिंउटा। कं माकोडा। )

अथ षड्बिन्दुकीटनामानि।—

षड्बिन्दुर्बिन्दुकीटस्तु दीर्घकीटस्तु पादतः ॥ १८६ ॥

[ इति कीटाः। ]

प्रसहन-विलम्बित-द्रुत-शय-प्रतुदाश्च विष्किरः।
कीटा इति कथिताः नवधाऽत्र तिर्य्यञ्चः ॥ १८७ ॥

इत्थं नानातिर्य्यगाख्याप्रपञ्चव्याख्यापूर्णं वर्गमेनं विदित्वा।
बुद्ध्या सम्यक्त्वाभिसन्धाय धीमान् वैद्यः कुर्य्यान्मांसवर्गप्रयोगम्
॥ १८८ ॥

येनेभास्यपिता मृगाङ्कमुकुटः शार्दूलचर्माम्बरः
सर्पालङ्करणः सुपुङ्गवगतिः पञ्चाननोऽभ्यर्च्यते।

तस्य श्रीनृहरीशितुः खलु कृतावेकोनविंशोऽभिधा-
चूडापीठमणावगादवसितिं सिंहादिवर्गो महान् ॥ १८९ ॥

इति श्रीनरहरिपण्डितविरचिते निघण्टुराजापरनाम्न्यभिधान-
चूडामणौ सिंहादिवर्ग एकोनविंशतिः ।

---

## अथ रोगादिवर्गः ।

अथ व्याधिसामान्यनाम ।—

गदो रुजा व्याधिरपाटवाम-रोगामयातङ्कभयोपघाताः ।
रुक्सान्ध्यभङ्गार्त्तितमोविकार-ग्लानिक्षयानार्जवमृत्युभृत्याः ॥१॥

अथ राजयक्ष्मनाम ।—

राजयक्ष्मा क्षयो यक्ष्मा रोगराजो गदाग्रणीः ।
उष्मा शोषोऽतिरोगश्च रोगाधीशो नृपामयः ॥ २ ॥

अथ पाण्डु-विसर्प शोफ-कासनाम ।—

पाण्डुरोगस्तु पाण्डुः स्यात् विसर्पः सचिवामयः ।
शोफः शोथस्तु श्वयथुः कासः क्षवथुरुच्यते ॥ ३ ॥

अथ क्षुत-प्रतिश्याय-नेत्रामय-मुखरोगनाम ।—

क्षुतन्तु क्षवथुः क्षुच्च प्रतिश्यायस्तु पीनसः ।
नेत्रामयो नेत्ररोगो मुखरोगो मुखामयः ॥ ४ ॥

अथ कुष्ठ-श्वित्रनाम ।—

दुश्चर्मा मण्डलं कोठस्त्वग्दोषश्चर्मदूषिका ।
कुष्ठन्तु पुण्डरीकः स्यात् श्वित्रन्तु चर्मचित्रकम् ॥ ५ ॥

अथ किलास-शिखी-पामा-कण्डूनाम।—

किलाससिध्मे च शिखी श्वासः पामा विचर्चिका।
कण्डूः कण्डूतिकण्डूया-खर्जूकण्डूयनानि च॥ ६॥

अथ सञ्चार्य्यादिनाम।—

सञ्चारी घुण्ठिकास्फोटे पामपामे * विचर्चिका।
पीतस्फोटे तु पामा च क्षुद्रस्फोटे † तु कच्छिका॥ ७॥

अथ पिटका-मसूरिका-विस्फोट-इन्द्रलुप्तनाम।—

पिटका पिटिका प्रोक्ता मसूराभा मसूरिका।
विस्फोटः स्फोटकः स्फोटः केशघ्नस्त्विन्द्रलुप्तकः॥ ८॥

अथ गलशुण्डी-गलगण्ड-दन्तार्बुदनाम।—

गलशुण्डी तु शुण्डा स्यात् गलगण्डो गलस्तनः।
दन्तार्बुदो दन्तमूलं दन्तशोथो द्विजव्रणः॥ ९॥

अथ गुल्म-पृष्ठग्रन्थि-(कुब्ज) परिणामशूलनाम।—

गुल्मस्तु जाठरग्रन्थिः पृष्ठग्रन्थौ गडुर्भवेत्।
पक्तिशूलन्तु शूलं स्यात् पाकजं परिणामजम्॥ १०॥

अथ लूता-नाड़ीव्रण-श्लीपदादिनाम।—

लूता चर्मव्रणो दुष्कं नाड़ी नाड़ीव्रणो भवेत्।
श्लीपदं पादवल्मीकं पादस्फोटो विपादिका॥ ११॥

अथ विष्टम्भानाहाद्यर्शोनाम।—

विष्टम्भस्तु विबन्धः स्यादानाहो मलरोधनम्।

---

* "पामपामे" इत्यत्र "सूक्ष्मस्फोटे" इति पाठान्तरं दृश्यते।

† "क्षुद्रस्फोटे तु कच्छिका" इत्यत्र "क्षुद्रस्फोटा विचर्चिका" इति पाठान्तरं दृश्यते।

अर्शांसि गुदकीलाः स्युर्दुर्नामानि गुदाङ्कुराः ॥ १२ ॥

अथ अतीसार-ग्रहणी-प्रवाहिका-वमिनाम ।—

मलवेगस्त्वतीसारो ग्रहणीरुक् प्रवाहिका ।
वमथुर्वान्तिरुद्गारश्छर्दिर्विच्छर्दिका वमिः ॥ १३ ॥

अथ हृद्रोग-श्वास-ज्वरनाम ।—

हृद्रोगो हृद्गदो हृद्रुगुत्प्राणः श्वास उच्यते ।
ज्वरस्तु स ज्वरातङ्को रोगश्रेष्ठो महागदः ॥ १४ ॥

अथ द्वन्द्वजादिनाम ।—

द्वन्द्वजा द्वन्द्वदोषोत्थाः शीताद्या विषमज्वराः ।
अतीत्यागन्तवस्ते द्वैरकाहिकत्र्याहिकादयः ॥ १५ ॥

अथ रक्तपित्तादिनाम ।—

रक्तपित्तं पित्तरक्तं पित्तास्रं पित्तशोणितम् ।
इत्येवं रक्तवातादि-द्वन्द्वदोषमुदाहरेत् ॥ १६ ॥

अथ तृष्णा-मदात्यय-मदनाम ।—

तृष्णोदन्या पिपासा तृष्मदातङ्को मदात्ययः ।
पानात्ययो मदव्याधिर्मदस्तूद्रिक्तचित्तता ॥ १७ ॥

अथ मूर्च्छा-स्वरभेदान्नाश्रद्धारोचकनाम ।—

मूर्च्छा तु मोहो मूढिश्च स्वरसादः स्वरक्षयः ।
अश्रद्धाऽनभिलाषः स्यादरुचिश्चाप्यरोचकः ॥ १८ ॥

अथ प्रमेह-मूत्रकृच्छ्राश्मरीनाम ।—

मूत्रदोषस्तु विज्ञेयः प्रमेहो मेह इत्यपि ।

कृच्छ्रं तु मूत्रकृच्छ्रं स्यात् मूत्ररोधोऽश्मरी च सा ॥१९॥

अथ वातव्याधि-कम्पनाम ।—

वातव्याधिश्चलातङ्को वातरोगोऽनिलामयः ।
कम्पस्तु वेपनं वेपः कम्पनं वेपथुस्तथा ॥ २० ॥

अथ जृम्भाऽऽलस्यनाम ।—

जृम्भा तु जृम्भिका जम्भा जृम्भणं जम्भिका च सा ।
आलस्यं मन्दता मान्द्यं कार्य्यप्रद्वेष इत्यपि ॥ २१ ॥

अथ तुन्द-जलोदराम-रक्तामयनाम ।—

तुन्दः स्थविष्ठ इत्युक्तो जठरश्चो जलोदरः ।
आमो मलस्य वैषम्याद्रक्तार्त्तिः शोणितामयः ॥ २२ ॥

अथ जालगर्दभकनाम ।—

जालगर्दभकः प्रोक्तो जालरासभकामयः ।
जालखरगदो ज्ञेयः स गर्दभगदस्तथा ॥ २३ ॥

अथ विद्रधि-हृद्ग्रन्थि-भगन्दरनाम ।—

विद्रधिः स्याद्विदरणं हृद्ग्रन्थिर्हृद्व्रणश्च सः ।
व्रणो भगप्रदेशे यः स भगन्दरनामकः ॥ २४ ॥

अथ शिरःशूलादिनाम ।—

शिरःशूलादयश्चैव ज्ञेयास्तत्तदङ्गाभिधानकाः ।
इत्यमन्येऽपि बोद्धव्या भिषग्भिर्देहतो गदाः ॥ २५ ॥

अथ सन्तापान्तर्दाहनाम ।—

सन्तापः संज्वरस्तापः शोष उष्मा च कथ्यते ।

यस्यापि कोष्ठसन्तापः सोऽन्तर्दाह इति स्मृतः ॥ २६ ॥

अथ अवयवविशेषे दाहस्य विशेषविशेषनाम ।—

स दाहो मुखताल्वोष्ठे दवथुसन्तुरादिषु ।
पाणिपादांसमूलेषु शाखापित्तं तदुच्यते ॥ २७ ॥

अथ तन्द्रा-प्रलयनामानि ।—

तन्द्रा तु विषयाज्ञानं प्रमीला तन्द्रिका च सा ।
प्रलयस्त्विन्द्रियस्वापश्चेष्टानाशः प्रलीनता ॥ २८ ॥

अथ उन्माद-भूतोन्मादनाम ।—

उन्मादो मतिविभ्रान्तिरुन्मनायितमित्यपि ।
आवेशो भूतसञ्चारो भूतक्रान्तिर्ग्रहागमः ॥ २९ ॥

अथ अपस्मार-स्तैमित्यनाम ।—

अपस्मारोऽङ्गविकृतिर्लीलाङ्गो भूतविक्रिया ।
स्तैमित्यं जड़ता जाड्यं शीतलत्वमपाटवम् ॥ ३० ॥

अथ वातजादिव्याधिनाम ।—

वातिको वातजो व्याधिः पैत्तिकः पित्तसम्भवः ।
श्लैष्मिकः श्लेष्मसम्भूतः समूहः सान्निपातिकः ॥ ३१ ॥

[ इति गदाः । ]

अथ रोगिनामानि ।—

व्याधितो विकृतो ग्लास्नुर्ग्लानो मन्दस्तथाऽऽतुरः ।
अभ्यान्तोऽभ्यमितो रुग्णश्चामयाव्यपटुश्च सः ॥ ३२ ॥

अथ रोगिविशेषनामानि ।—

तद्विशेषास्तु विज्ञेयास्तन्मत्वर्थीययोगतः ।

यथा ज्वरितकण्डूल-वातकक्षयदद्रुणाः ॥ २३ ॥

अथ रोगमुक्तौ आचारविशेषाः ।—

उत्साही द्विजदेवभेषजभिषग्भक्तोऽपि पथ्ये रतो
धीरो धर्मपरायणः प्रियवचा मानी मृदुर्मानदः ।
विश्वासी ऋजुरास्तिकः सुचरितो दाता दयालुः शुचि-
र्यः स्यात्काममवञ्चकः स विकृतो मुच्येत मृत्योरपि ॥ २४ ॥

अथ चिकित्सानाम ।—

उपचारस्तूपचर्य्या चिकित्सा रुक्प्रतिक्रिया ।
निग्रहो वेदनानिष्टा क्रिया चोपक्रमः समाः ॥ २५ ॥

अथ औषधनाम ।—

भैषज्यं भेषजं जैत्रमगदो जायुरौषधम् ।
आयुर्योगो गदारातिरमृतं च तदुच्यते ॥ २६ ॥

अथ औषधस्य रसादिपञ्चभेदाः ।—

तच्च पञ्चविधं प्रोक्तं स्वस्वयोगविशेषतः ।
रसश्चूर्णं कषायश्चावलेहः कल्क इत्यपि ॥ २७ ॥

अथ रसादीनां स्वरूपम् ।—

रसो दृषदि सम्भिन्नो * दिव्यद्रव्यसमन्वितः ।
चूर्णन्तु वस्तुभिः शुष्कैः कषायः क्वथितैस्तु तैः ॥ २८ ॥
तैः पक्वै † रवलेहः स्यात्कल्को मध्वादिमर्दितैः ॥ २९ ॥

---

* "दृषदि सम्भिन्नः" इत्यत्र "पारदसम्भिन्नः" इति पाठान्तरमस्ति ।

† तैः पक्वैरित्यत्रानिक्तैरिति पाठान्तरं दृश्यते ।

अथ सप्तविधक्वाथनाम ।—

पाचनः शोधनीयश्च क्लेदनश्च शमस्तथा ।
दीपनस्तर्पणः शोष इति सप्तविधाः स्मृताः ॥ ४० ॥

अथ सप्तविधक्वाथानां लक्षणम् ।—

पाचनोऽर्द्धावशेषश्च शोधनो द्वादशांशकः ।
क्लेदनश्चतुरंशस्तु शमश्चाष्टांशको मतः ॥ ४१ ॥
दीपनस्तु षडंशश्च तर्पणः पञ्चमांशकः ।
शोषणः षोड़शांशश्च क्वाथभेदा इतीरिताः ॥ ४२ ॥

अथ प्रयोगकालभेदे अनुपानस्य नामभेदः ।—

श्रेयं रसादिकथनादनन्तरं किलानुपानं कथयन्ति सूरयः ।
विलम्बय च क्वामणमेतदीरितं रात्रौ पुनः पाचनमेतदूचिरे॥४३॥

अथ पथ्यनाम ।—

आत्मनीनन्तु पथ्यं स्यादायुष्यं च हितञ्च तत् ॥ ४४ ॥

अथ आरोग्यनामानि ।—

किलपाटवमारोग्यमगदं स्यादनामयम् ।
कल्पस्तु पटुरुल्लाघो निरातङ्को निरामयः ॥ ४५ ॥
अगदो नीरुजो निरुगनातङ्कश्च कथ्यते ॥ ४६ ॥

अथ वैद्यनामानि ।—

वैद्यः श्रेष्ठोऽगदङ्कारो रोगहारी भिषग्विधिः ।
रोगघ्नो जीवनो विद्वान् आयुर्वेदी चिकित्सकः ॥ ४७ ॥

अथ सद्वैद्यलक्षणम् ।—

विप्रो वैद्यकपारगः शुचिरनूचानः कुलीनः कृती
धीरः कालकलाविदास्तिकमतिर्दक्षः सुधीर्धार्मिकः ।

स्वाचारः समदृग्दयालुरखलो यः सिद्धमन्त्रक्रमः
शान्तः काममलोलुपः कृतयशा वैद्यः स विद्योतते ॥ ४८ ॥

अथ कुवैद्यलक्षणम् ।—

अधीरः कर्कशो लुब्धः * सरोगो न्यूनशिक्षितः † ।
पञ्च वैद्या न युज्यन्ते धन्वन्तरिसमा अपि ॥ ४९ ॥

अथ वैद्यप्रशंसा ।—

[illegible]रः खलु [illegible]कसुभगा-
स्तदेतद्भैषज्यानवरतनिषेवैकवशगम् ।
तदप्येकायत्तं फलदमगदङ्कारकृपया
ततो लोके लोके न परमुपकर्त्तैवममुतः ॥ ५० ॥

राजानो विजिगीषया निजभुजप्रक्रान्तमोजोदयात्
शौर्य्यं सङ्गररङ्गसद्मनि यथा संबिभ्रते सङ्गताः ।
यस्मिन्नौषधयस्तथा समुदिताः सिध्यन्ति वीर्य्याधिका
विप्रोऽसौ भिषगुच्यते स्वयमिति श्रुत्याऽपि सत्यापितम् ॥५१॥

अथ ओषधिखननविधिः तत्र मन्त्रश्च ।—

यथावदुत्खाय शुचिप्रदेशजा द्विजेन [illegible]वेदिना ।
यथायथं चौषधयो गुणोत्तराः प्रत्याहरन्ते यमगोचरानपि ॥५२॥

"येन त्वां खनते ब्रह्मा येन त्वां खनते भृगुः ।
येनेन्द्रो येन वरुणः खनते येन केशवः ।
तेनाहं त्वां खनिष्यामि सिद्धिं कुरु महौषध !" ॥ ५३ ॥

---

* लुब्ध इत्यत्र लब्धेति पाठान्तरं दृश्यते ।

† न्यूनशिक्षित इत्यत्र नित्यशिक्षक इति पाठान्तरं दृश्यते

विप्रः पठन्निमं मन्त्रं प्रयतात्मा महौषधीम् ।
खात्वा खादिरकीलेन यथावत्तां प्रयोजयेत् ॥ ५४ ॥

अथ ओषधमहिमा ।—

वीर्य्यं प्रकाश्य निजमोषधयः किलोचु-
रन्योऽन्यमुर्व्यपि दिवो भुवमाव्रजन्त्यः ।
जीवं मुमूर्षुमपि यं हि वयं महिम्ना
स्वेन स्पृशोमहि स जात्वपि नैव नश्येत् ॥ ५५ ॥
प्रत्यायिताः प्रमुदिता मुदितेन राज्ञा
सोमेन साकमिदमोषधयः समूचुः ।
यस्मै द्विजो दिशति भेषजमाशु राजन् !
तं पालयाम इति च श्रुतिराह साक्षात् ॥ ५६ ॥

[ इति श्रुतिवाक्यम् ।]

आसामीशो लिखितपठितः स द्विजानां हि राजा
सिद्धैर्यास्तु द्विजमवृजिनं स्वाश्रयं कामयन्ते ।
तास्वेवान्यः प्रसरति मदादुयस्तु जात्या च गत्या
हीनः शून्यो जगति कुपिताः पातयन्त्येनमेताः ॥ ५७ ॥

अथ अष्टाङ्गकथनम् ।—

द्रव्याभिधानगदनिश्चयकायसौख्यं
शल्यादिभूतविषग्रहबालवैद्यम् ।
विद्याद्रसायनवरं दृढदेहहेतु-
मायुःश्रुतेर्हि चतुरङ्गमिहाह शम्भुः ॥ ५८ ॥

अन्यच्च ।—

अष्टाङ्गं शल्यशालाक्य-कायभूतविषं तथा ।

बालो रसायनं पथ्यमिति केश्चिदुदाहृतम् ॥ ५९ ॥

अथ अष्टाङ्गायुर्वेदाभिज्ञानभिज्ञयोः प्रशंसाप्रशंसे ।—

अष्टाङ्गज्ञः सुवैद्यो हि क्रियद्धीनो यथाऽङ्गतः ।
अङ्गहीनः स विज्ञेयो न श्लाघ्यो राजमन्दिरे ॥ ६० ॥

अथ पण्डितनामानि ।—

प्राज्ञो विज्ञः पण्डितो दीर्घदर्शी
धीरो धीमान् कोविदो लब्धवर्णः ।
दोषज्ञः सन्दूरदर्शी मनीषी
मेधावी ज्ञः सूरिविज्ञौ विपश्चित् ॥ ६१ ॥
वैज्ञानिकः कृतमुखः संख्यावान् मतिमान् कृती ।
कुशाग्रीयमतिः कृष्टिः कुशलो विदुरो बुधः ॥ ६२ ॥
निष्णातः शिक्षितो दक्षः सुदीक्षः कृतधीः सुधीः ।
अभिज्ञो निपुणो विद्वान् कृतकर्मा विचक्षणः ॥ ६३ ॥
विदग्धश्चतुरश्चैव प्रौढ़ो बोद्धा विशारदः ।
सुमेधाः सुमतिस्तीक्ष्णः प्रेक्षावान् विबुधो विदन् ॥ ६४ ॥

अथ बुद्धिनामानि ।—

मनीषा धिषणा प्रज्ञा धारणा शेमुषी मतिः ।
धीर्बुद्धिः प्रतिपत् प्रेक्षा प्रतिपत्तिश्च चेतना ॥ ६५ ॥
संविज्ज्ञप्तिश्चोपलब्धिश्चिन्मेधा मननं मनः ।
भानं बोधश्च हृल्लेखः संख्या च प्रतिभा च सा ॥ ६६ ॥

अथ रोगहेत्वादिनाम ।—

आदानं रोगहेतुः स्यान्निदानं रोगलक्षणम् ।

चिकित्सा तत्प्रतीकारः आरोग्यं रुङ्निवर्त्तनम् ॥ ६७ ॥

अथ पथ्यभेदास्तल्लक्षणाश्च ।—

मण्डः पेया विलेपी च यवागूः पथ्यभेदकाः ।
भक्तैर्विना द्रवो मण्डः पेया भक्तसमन्विता ॥
विलेपी बहुभक्ता स्याद्यवागूर्विरलद्रवा ॥ ६८ ॥

अथ विदलनाम ।—

विदलं माषमुद्गादि पक्वं सूपाभिधानकम् ॥ ६९ ॥

अथ पथ्यादिस्वरूपम् ।—

पादाहारं पथ्यमाहुश्च वैद्या विद्यादर्द्धाहारमाहारसंज्ञम् ।
पादोनं स्याद्भोजनं भोगमन्यद्विद्याच्छेषं वातदोषप्रसूत्यै ॥७०॥

अथान्ननामानि ।—

अन्नं जीवनमाहारः कूरं कशिपुरोदनम् ।
अन्धो भिस्साऽदनं भोज्यमन्नाद्यमशनं तथा ॥ ७१ ॥

अथान्नभेदाः ।—

भोज्यं पेयं तथा चोष्यं लेह्यं खाद्यञ्च चर्वणम् ।
निष्पेयं चैव भक्ष्यं स्यादन्नमष्टविधं स्मृतम् ॥ ७२ ॥

अथ व्यञ्जननामानि ।—

व्यञ्जनं सूपशाकादि मिष्टान्नं तेमनं स्मृतम् ।
उपदंशो विदंशः स्यात् सन्धानो रोचकश्च सः ॥ ७३ ॥

अथ भोजननामानि ।—

जेमनमभ्यवहारः प्रत्यवसानञ्च भोजनं जग्धिः ।
वल्भनमशनं स्वदनं निघसाहारौ च निगरणं न्यादः ॥ ७४ ॥

अथ भोजनभेदाः ।—

जक्षणं भक्षणं लेहः स्वादनं रसनस्वदौ ।
चर्वणं पानपीतौ च धयनं चूषणं भिदाः ॥ ७५ ॥

अथ षड्रसनाम ।—

मधुरो लवणस्तिक्तः कषायोऽम्लः कटुस्तथा ।
सन्तीति रसनीयत्वादन्नाद्ये षड़मी रसाः ॥७६॥

अथ मधुररसः ।—

मधुरं लौल्य*मित्याहुरिक्ष्वादौ च स लक्ष्यते ॥ ७७ ॥

अथ लवणरसः ।—

लवणस्तु पटुः† प्रोक्तः सैन्धवादौ स दृश्यते ॥ ७८ ॥

अथ तिक्तरसः ।—

तिक्तश्च पिचुमन्दादौ ‡ व्यक्तमास्वाद्यते रसः ॥ ७९ ॥

अथ कषायरसः ।—

कषायस्तुवरः प्रोक्तः स तु पूगीफलादिषु ॥ ८० ॥

अथ अम्लरसः ।—

अम्लस्तु चिञ्चाजम्बीर-मातुलुङ्गफलादिषु ॥ ८१ ॥

अथ कटुरसः ।—

कटुस्तु तीक्ष्णसंज्ञः स्यान्मरीचादौ स चेष्यते ॥ ८२ ॥

---

* अत्र गौल्य इत्येष पाठभेदः केषुचित् पुस्तकेषु दृश्यते ।

† पटु इत्यत्र वर इति पाठान्तरं दृश्यते, तत्तु चिन्त्यम् ।

‡ पिचुमन्दादौ पिचुमर्द्दादौ, निम्बादाविति स्फुटार्थः ।

अथ मधुररसगुणाः ।—

मधुरश्च रसश्चिनोति केशान् वपुषः स्थैर्य्यबलौजोवीर्य्यदायी ।
अतिसेवनतः प्रमेहशैत्यं जड़तामान्द्यमुखान् करोति दोषान् ॥८३॥

अथ लवणरसगुणाः ।—

लवणो रुचिकृद्रसोऽग्निदायी पचनः स्वादुकरश्च सारकश्च ।
अतिसेवनतो जराञ्च पित्तं शितिमानञ्च ददाति कुष्ठकारी ॥८४॥

अथ तिक्तरसगुणाः ।—

तिक्तो जन्तून् हन्ति कुष्ठं ज्वरार्त्तिं कासं दाहं दीपनो रोचनश्च ।
मर्त्यैर्गाढ़ं प्रत्यहं सेवितश्चेत्तीव्रं दत्ते राजयक्ष्माणमेषः ॥ ८५ ॥

अथ कषायरसगुणाः ।—

कषायनामा निरुणद्धि शोफं वर्णं तनोर्द्दीपनपाचनश्च ।
सस्वापश्लोऽसौ शिथिलत्वकारी निषेवितः पाण्डु करोति गात्रम् ॥८६॥

अथाम्लरसगुणाः ।—

अम्लाभिधः प्रीतिकरो रुचिप्रदः
प्रपाचनोऽग्नेः पटुताञ्च यच्छति ।
भ्रान्तिञ्च कुष्ठं कफपाण्डुताञ्च
कार्श्यञ्च कासं कुरुतेऽतिसेवितः ॥ ८७ ॥

अथ कटुरसगुणाः ।—

कटुः कफं कण्ठजदोषशोफमन्दानलश्वित्रगदान्निहन्ति ।
एषोऽपि दत्ते बहुसेवितश्चेत् क्षयावहो वीर्य्यबलक्षयश्च ॥ ८८ ॥

अथ वातादिदोषप्रवृद्धिहररसनिर्द्देशः ।—

कटुः कषायश्च कफापहारिणौ
माधुर्य्यतिक्तावपि पित्तनाशनौ ।

पटुम्लसंज्ञौ च रसौ मरुद्धरौ
इत्थं द्विशोऽमी सकलामयापहाः ॥ ८९ ॥
[ इति षड्रसवीर्य्योक्तिः । ]

अथ मिश्ररसनिर्देशः ।—

अन्योऽन्यं मधुराम्लौ लवणाम्लौ कटुतिक्तकौ च रसौ ।
कटुलवणौ च स्यातां मिश्ररसौ तिक्तलवणौ च ॥ ९० ॥

अथ परस्परविरुद्धरसाः ।—

लवणमधुरौ विरुद्धावथ कटुमधुरौ च तिक्तमधुरौ च ।
साधारणः कषायः सर्वत्र समानतां धत्ते ॥ ९१ ॥

अथ रसानां विपाकाः ।—

संधत्ते मधुरोऽम्लतां च लवणो धत्ते यथावत् स्थितिं
तिक्ताख्यः कटुतां तथा मधुरतां धत्ते कषायाह्वयः ।
अम्लस्तिक्तरुचिं ददाति कटुको यात्यन्ततस्तिक्तता-
मित्येषां स्वविपाकतोऽपि कथिता षण्णां रसानां स्थितिः ॥९२॥

मधुरोऽम्लः कटुस्तिक्तः पटुस्तुवर इत्यमी ।
क्रमादन्योऽन्यसङ्कीर्णा नानात्वं यान्ति षड्रसाः ॥ ९३ ॥

अथ त्रिषष्टिरसभेदाः ।—

आद्याद्यो मधुरादिर्वेदेकैकेनोत्तरेण युक् ।
द्विकभेदाः पञ्चदश पर्य्यायैः पञ्चभिस्तथा ॥ ९४ ॥
आद्यः सानन्तरः प्राग्वदुत्तरेण युतो यदा ।
चतुर्भिरपि पर्य्यायैराद्ये प्रोक्ता भिदा दश ॥ ९५ ॥
एवं द्वितीये षड्भेदास्तृतीये च त्रयः स्मृताः ।
चतुर्थे चैक इत्येते त्रिकभेदास्तु विंशतिः ॥ ९६ ॥

आद्यौ सानन्तरौ त्रिः षड़ेकैकाग्रिमयोगतः ।
त्यक्ते द्वितीये चत्वारः स्वाग्रिमैकैकसंयुते ॥ ९७ ॥
आद्ये त्यक्ते तु पञ्च स्युः स्वाग्रेमैकैकसंवृते ।
चतुष्कभेदा इत्येते क्रमात् पञ्चदशेरिताः ॥ ९८ ॥
ततः पञ्चकभेदाः षड़ेकैकत्यागतः स्मृताः ।
एकः सर्वसमासेन व्यासे षड़िति सप्त ते ॥ ९९ ॥
एवं त्रिषष्टिराख्याता रसभेदाः समासतः ।
तारतम्येष्वसंख्यातास्तान् वेत्ति यदि शङ्करः ॥ १०० ॥

अथ वृंहणादिनामानि ।—

वृंहणं पुष्टिदं पोष्यमुक्तं पोनत्वदञ्च तत् ।
वीर्य्यवृद्धिकरं वृष्यं वाजीकरणवीजकृत् ॥ १०१ ॥
आप्यायनं तर्पणञ्च प्रीणनं तोषणञ्च तत् ।
निष्यन्दनमभिष्यन्दि नेत्रद्रावं सरञ्च तत् ॥ १०२ ॥
इति बहुविधरोगव्याधितोपक्रमोऽत्र
प्रकृतभिषगनुज्ञाहारपथ्यप्रयोगम् ।
इममखिलमुदित्वा वर्गमुत्सर्गसिद्धान्
प्रवदतु स च विद्वानामयप्रत्ययांस्तान् ॥ १०३ ॥
येन व्याधिशतान्धकारपटलीनिष्कासनाभास्कर-
प्रायेणापि पुनस्तरां प्रविहिता हन्त ! द्विषां व्याधयः ।
तस्यायं कृतिवाचि विंशतितमः श्रीमन्नृसिंहेशितुः
शान्तिं नामकिरीटमण्डनमणौ वर्गो गदादिर्गतः ॥ १०४ ॥

इति श्रीमन्नरहरिपण्डितविरचिते निघण्टुराजापरनाम्न्यभिधान-
चूड़ामणौ रोगप्रकरणं नाम विंशो वर्गः ।

# अथ सत्त्वादिवर्गः ।

—०*०—

अथ सत्त्वादिगुणाः तदात्मकदोषाश्च ।—

सत्त्वं रजस्तमश्चेति पुंसामुक्तास्त्रयो गुणाः ।
तेषु क्रमादमी दोषाः कफपित्तानिलाः स्थिताः ॥ १ ॥
सत्त्वं श्लेष्मा रजः पित्तं तमश्चापि समीरणः ।
द्रव्यस्य मानमुद्रिक्तं पुंसि पुंस्यनुवर्त्तते ॥ २ ॥

अथ सत्त्वगुणस्वरूपम् ।—

सत्त्वं मनोविकाशः स्यात् सत्त्वायत्ता तथा स्थितिः ॥ ३ ॥

अथ रजोगुणस्वरूपम् ।—

रजो रूषणमुद्रेकः कालुष्यं मतिविभ्रमः ॥ ४ ॥

अथ तमोगुणस्वरूपम् ।—

तमस्तिमिरमान्ध्यञ्च चित्तोन्मादश्च मूढ़ता ।
हृदयावरणं ध्वान्तमन्धकारो विमोहनम् ॥ ५ ॥

अथ वायुनामानि ।—

वातो गन्धवहो वायुः पवमानो महाबलः ।
स्पर्शनो गन्धवाही च पवनो मरुदाशुगः ॥ ६ ॥
श्वसनो मातरिश्वा च नभस्वान्मारुतोऽनिलः ।
समीरणो जगत्प्राणः समीरश्च सदागतिः ॥ ७ ॥
जवनः पृषदश्वश्च तरस्वी च प्रभञ्जनः ।
प्रधावनोऽनवस्थानो धूननो मोटनः खगः ॥ ८ ॥

अन्येऽपि वायवो देहे नाड़ीचक्रप्रवाहकाः ।
मया वितत्य नोक्तास्ते ग्रन्थगौरवभीरुणा ॥ ९ ॥

अथ प्रकृतयः ।—

सत्त्वादिगुणसम्भिन्न-दोषत्रयवशात्मना ।
आभ्यन्तरञ्च वाह्यञ्च स्वरूपं सन्निरुच्यते ॥ १० ॥

अथ सात्त्विकलक्षणम् ।—

सत्त्वाढ्यः शुचिरास्तिकः स्थिरमतिः पुष्टाङ्गको धार्मिकः
कान्तः सोऽपि बहुप्रजः सुमधुरक्षीरादिभोज्यप्रियः ।
दाता पात्रगुणादृतो द्रुततमं वाग्मी कृपालुः समो
गौरः श्यामतनुर्घनाम्बुतुहिनस्वप्नेक्षणः श्लेष्मलः ॥ ११ ॥

अथ राजसिकलक्षणम् ।—

राजस्यो लवणाम्लतिक्तकटुकप्रायोष्णभोजी पटुः
प्रौढ़ो नातिकृशोऽप्यकालपलितो क्रोधप्रपञ्चान्वितः ।
द्राघीयान् महिलाशयो वितरिता सोपाधिकं याचितो
गौराङ्गः कनकादिदीप्तिललितः स्वप्नी च पित्तात्मकः ॥ १२ ॥

अथ तामसिकलक्षणम् ।—

निद्रालुर्बहुभाषकः सुकुटिलः क्रूराशयो नास्तिकः
प्रायः पर्य्युषितातिशीतविरसाहारैकनिष्ठोऽलसः ।
कार्य्येष्वत्यभिमानवानसमये दाता यथेच्छं कृशः
स्वप्ने व्योमगतिः सितेतरतनुर्वातूलकस्तामसः ॥ १३ ॥

अथ मिश्रप्रकृतिलक्षणम् ।—

सत्त्वादयो गुणा यत्र मिश्रिताः सन्ति भूयसा ।
मिश्रप्रकृतिकः सोऽयं विज्ञातव्यो मनीषिभिः ॥ १४ ॥

अपिच ।—

सत्त्वादिरजसा मिश्रे श्रेष्ठं सत्त्वादितामसे ।
मध्यमं रजसा मिश्रे कनीयो गुणमिश्रणम् ॥ १५ ॥

अथ गुणत्रयलक्षणम् ।—

सत्त्वं चित्तविकाशमाशु तनुते दत्ते प्रबोधं परं
कालुष्यं कुरुते रजस्तु मनसः प्रस्तौति चाव्याकृतिम् ।
आन्ध्यं हन्त हृदि प्रयच्छति तिरोधत्ते स्वतत्त्वे धियं
सन्धत्ते जड़तां च सन्ततमुपाधत्ते प्रमीलां तमः ॥ १६ ॥

अथ वातस्य स्वरूपं प्रकोपकालश्च ।—

वातः खैरः स्याल्लघुः शीतरूक्षः सूक्ष्मस्पर्शज्ञानकस्तोदकारी ।
माधुर्य्यान्ते * सोऽभ्रकालेऽपराह्णे प्रत्यूषेऽन्ने याति जीर्णे च कोपम्
॥ १७ ॥

अथ पित्तस्य स्वरूपं प्रकोपकालश्च ।—

पित्तञ्च तिक्ताम्लरसञ्च सारकं चोष्णं द्रवं तीक्ष्णमिदं मधौ बहु ।
वर्षान्तकाले भृशमर्द्धरात्रे मध्यन्दिनेऽन्नस्य जरे च कुप्यति ॥१८॥

अथ श्लेष्मणः स्वरूपं प्रकोपकालश्च ।—

श्लेष्मा गुरुः श्लक्ष्णमृदुः स्थिरस्तथा
स्निग्धः पटुः शीतजड़श्च गौल्यवान् ।
शीते वसन्ते च भृशं निशामुखे
पूर्वेऽह्नि भुक्तोपरि च प्रकुप्यति ॥ १९ ॥

---

* पाठस्यास्य काऽपि अर्थसङ्गतिर्न दृश्यते । "मेघाच्छन्ने" वा "शीते वाते" इति पाठकल्पनं सङ्गतार्थकमिति द्रष्टव्यम् ।

अथ दोषत्रयस्य त्रिषष्टिधा भेदनिरूपणम् ।—

दोषत्रयस्य ये भेदा वृद्धिक्षयविकल्पतः ।
तानतः सम्प्रवक्ष्यामि संक्षेपार्थं समञ्जसम् ॥ २० ॥
एकैकवृद्धौ स्युर्भेदास्त्रयो ये वृद्धिदास्त्रयः ।
तत्राप्येकतरा ह्यर्थे षड़ेवं द्वादशैव ते ॥ २१ ॥
वृद्धान्योऽन्यव्यत्ययाभ्यां षट् त्रिवृद्ध्या तु सप्तमः ।
वृद्धोऽन्योऽन्यो वृद्धतरः परो वृद्धतमस्त्विति ॥ २२ ॥
तारतम्येन षड्भेदास्त एवं पञ्चविंशतिः ;
एवं क्षयेऽपि तावन्तस्ततः पञ्चाशदीरिताः ॥ २३ ॥
वृद्धोऽन्योऽन्यः समोऽन्यश्च क्षीणस्त्विति पुनश्च षट् ।
द्विवृद्धैकक्षयादुक्त-व्यत्ययाच्च पुनश्च षट् ॥ २४ ॥
एते द्वादशतः सर्वे द्विषष्टिः समुदाहृताः ।
त्रिषष्टिस्त्वन्तिमो भेदस्त्रयाणां प्रकृतौ स्थितिः ॥ २५ ॥
एवं दोषत्रयस्यैतान् भेदान् विज्ञाय तत्त्वतः ।
ततो भिषक् प्रयुञ्जीत तदवस्थोचिताः क्रियाः ॥ २६ ॥

अथ कालस्य नाम भेदत्रयञ्च ।—

कालस्तु वेला समयोऽप्यनेहा दिष्टश्चलश्चावसरोऽस्थिरश्च ।
सोऽप्येष भूतः किल वर्त्तमानस्तथा भविष्यन्निति च त्रिधोक्तः॥२७॥

अतीतादिकालत्रयस्य नाम ।—

भूते वृत्तमतीतञ्च ह्यस्तनं निसृतं गतम् ।
वर्त्तमाने भवच्चाद्य-तनं स्यादधुनातनम् ॥ २८ ॥
अनागतं भविष्ये स्यात् श्वस्तनञ्च प्रगेतनम् ।

वर्त्स्यद्वर्त्तिष्यमाणं च स्यादागामि च भावि च ॥ २९ ॥

अथ साधारणादीनां चतुर्णां नाम ।—

साधारणन्तु सामान्यं तत्सर्वत्रानुवर्त्तते ।
विशेषणं विशेषस्य सकृत्स्थाने च वर्त्तते ।
तुर्य्यं पादं चतुर्थांशमीषत्किञ्चित्तथोच्यते ॥ ३० ॥

अथ शिवस्तुतिः ।—

भूषापीयुषांशुस्वच्छोद्योतप्रस्यन्दामन्द-
स्वच्छन्दापूराम्भःस्वर्गङ्गासङ्गोन्मीलनमौलिम् ।
मेरुश्रीकैलासक्रीड़ासङ्घाटीशोभनाभः-
श्लाघाजङ्घालश्रीगौरीरोगूढ़ाङ्गं वन्दे शम्भुम् ॥ ३१ ॥

अथ पलादिनिरूपणम् ।—

शब्दोच्चारे सकलगुरुके षष्टिवर्णप्रमाणे
मानं काले पलमिति दश स्यात् क्षणस्तानि तैस्तु ।
षड्भिर्नाड़ी प्रहर इति ताः सप्त सार्द्धास्तथाऽहो-
रात्रो ज्ञेयः सुमतिभिरसावष्टभिस्तैः प्रदिष्टः ॥ ३२ ॥

अथ पक्ष-मास-संवत्सरनिरूपणम् ।—

पक्षः स्यात्पञ्चदशभिरहोरात्रैरुभाविमौ ।
मासो द्वादशभिर्मासैः संवत्सर उदाहृतः ॥ ३३ ॥

अथर्तुनिरूपणम् ।—

द्विशश्चैत्रादिभिर्मासैर्विज्ञेया ऋतवश्च षट् ॥ ३४ ॥

अथायनादिनिरूपणम् ।—

त्रिभिस्त्रिभिः क्रमादेतैः स्याताञ्च विषुवायने ॥ ३५ ॥

अथ पलादिनाम ।—

पलं विघटिका प्रोक्ता नाड़ी तास्तु त्रिविंशतिः ।
नाड़ी तु घटिका प्रोक्ता तद्द्वयञ्च मुहूर्त्तकम् ॥ ३६ ॥

अथ प्रहरनाम ।—

यामः प्रहर इत्युक्तो दिनभागो दिनांशकः ॥ ३७ ॥

अथाहोरात्रनाम ।—

अहोरात्रदिवारात्राहर्दिवाऽहर्निशानि च ॥ ३८ ॥

अथ दिवानाम ।—

घस्रो दिनोऽपि दिवसो वासरो भास्वरो दिवा ॥ ३९

अथ दिनस्य अंशचतुष्टयम् ।—

प्राह्णापराह्णमध्याह्न-सायाह्नाः स्युस्तदंशकाः ॥ ४० ॥

अथ प्रातर्नाम ।—

प्रातर्दिनादिः प्रत्यूषो निशान्तः प्रत्युषोऽप्युषः ।
व्युष्टञ्चाहर्मुखं कल्यं प्रगे प्राह्णं प्रभातकम् ॥ ४१ ॥

अथातपनामानि ।—

आतपस्तु दिनज्योतिः सूर्य्यालोको दिनप्रभा * ।
रविप्रकाशः प्रद्योतस्तमोऽरिस्तपनद्युतिः ॥ ४२ ॥

अथ प्रभानामानि ।—

रोचिर्दीप्तिर्द्युतिः शोचिस्त्विडोजो भा रुचिः प्रभा ।
विभा लोकप्रकाशश्च तेज ओजायितञ्च रुक् ॥ ४३ ॥

---

* दिनप्रभा इत्यत्र प्रभाकरेति पाठान्तरं दृश्यते ।

अथ सन्ध्यानामानि ।—

सायंसन्ध्या दिनान्तश्च निशादिर्दिवसात्ययः ।
सायं पितृप्रसूश्चाथ प्रदोषः स्यान्निशामुखम् ॥ ४४ ॥

अथ छायानामानि ।—

छाया विभानुगा श्यामा तेजोभीरुरनातपः ।
अभीतिरातपाभावो भावालीना च सा स्मृता ॥ ४५ ॥

अथ रात्रिनामानि ।—

शर्व्वरी चणदा रात्रिर्निशा श्यामा तमस्विनी ।
तमी त्रियामा शयनी चपा यामवती तमा ॥ ४६ ॥
नक्तं निशीथिनी दोषा ताराभूषा विभावरी ।
ज्योतिष्मती तारकिणी काली साऽपि कलापिनी ॥ ४७ ॥

अथ ज्यौत्स्नी-तमिस्रारात्रिनाम ।—

सा ज्यौत्स्नी चन्द्रिकायुक्ता, तमिस्रा तु तमोऽन्विता ॥४८॥

अथार्द्धरात्रनाम ।—

अर्द्धरात्रो निशीथे स्यान्मध्यरात्रश्च स स्मृतः ॥ ४९ ॥

अथ ज्योत्स्नानाम ।—

ज्योत्स्ना तु चन्द्रिका चान्द्री कौमुदी कामवल्लभा ।
चन्द्रातपश्चन्द्रकान्ता शीताऽमृततरङ्गिणी ॥ ५० ॥

अथ कान्तिनाम ।—

कान्तिस्तु सुषमा शोभा छविश्छाया विभा शुभा ।
श्रीर्लक्ष्मीर्दंक्प्रियाऽभिख्या भानं भातिरुमा रमा ॥ ५१ ॥

अथान्धकारनाम ।—

तमस्तमिस्रं तिमिरं ध्वान्तं सन्तमसं तमः ।
अन्धकारश्च भूच्छायं तच्चान्धतमसं घनम् ॥ ५२ ॥

अथातपादिगुणाः ।—

आतपः कटुको रूक्षश्छाया मधुरशीतला ।
त्रिदोषशमनो ज्योत्स्ना सर्वव्याधिकरं तमः ॥ ५३ ॥

अथ प्रतिपन्नाम ।—

पक्षादिः प्रथमाऽऽद्या च पक्षतिः प्रतिपच्च सा ॥ ५४ ॥

अथ पञ्चदशीद्वय ( पूर्णिमा-अमावस्या ) नाम ।—

पक्षान्तोऽर्केन्दुविश्लेषः पर्व पञ्चदशी तथा ।
द्वितीयं तु भवेत्पर्व चन्द्रार्कात्यन्तसङ्गमः ॥ ५५ ॥

अथ पक्षस्य स्वरूपं तद्भेदश्च ।—

प्रतिपदमारभ्यैताः क्रमात् द्वितीयादिकाश्च पञ्चदश ।
पक्षे तिथयो ज्ञेयाः पक्षश्च सितोऽसितो द्विविधः ॥ ५६ ॥

अथ शुक्लपक्षनामानि ।—

सितश्चापूर्य्यमाणः स्यात् शुक्लश्च विशदः शुदि ॥ ५७ ॥

अथ कृष्णपक्षनामानि ।—

असितो मलिनः कृष्णो बहुलो वदि च स्मृतः ॥ ५८ ॥

अथ मण्डलनिरूपणम् ।—

दिवसैर्यत्र तत्रापि वसुसागरसम्मितैः ।
भिषक्क्रियोपयोगाय मण्डलं भिषजां मतम् ॥ ५९ ॥

अथ पूर्णिमानाम ।—

पूर्णिमा पौर्णमासी च ज्यौत्स्नी चेन्दुमती सिता ।
सा पूर्वाऽनुमतिर्ज्ञेयां राका स्यादुत्तरा च सा ॥ ६० ॥

अथामावस्यानाम ।—

दर्शस्तु स्यादमावास्याऽमावस्याऽर्केन्दुसङ्गमः ।
सा पूर्वा तु सिनीवाली द्वितीया तु कुहूर्मता ॥ ६१ ॥

अथ पक्षस्वरूपम् ।—

मासार्द्धस्तु भवेत्पक्षः स पञ्चदशरात्रकः ॥ ६२ ॥

अथ मासस्वरूपम् ।—

द्विपक्षस्तु भवेन्मासश्चैत्राद्या द्वादशाश्च ते ॥ ६३ ॥

अथ चैत्रनामानि ।—

चैत्रस्तु चैत्रिकश्चैत्री मधुः कालादिकश्च सः ॥ ६४ ॥

अथ वैशाख-ज्येष्ठनामानि ।—

वैशाखो माधवो राधो, ज्यैष्ठः शुक्रस्तपस्तथा ॥ ६५ ॥

अथ आषाढ़-श्रावणनामानि ।—

आषाढ़ः शुचिरुक्तः, श्रावणिकः श्रावणो नभाश्चापि ॥ ६६ ॥

अथ भाद्रपदनामानि ।—

भाद्रो भाद्रपदोऽपि प्रौष्ठपदः स्यान्नभो नभस्यश्च ॥ ६७ ॥

अथाश्विननामानि ।—

इषस्त्वाश्वयुजश्च स्यादाश्विनः शारदश्च सः ॥ ६८ ॥

अथ कार्त्तिकनामानि ।—

कार्त्तिको बाहुलोऽपि स्यादूर्जः कार्त्तिकिकश्च सः ॥ ६८ ॥

अथ मार्गशीर्षनामानि ।—

मार्गः सहा मार्गशीर्ष आग्रहायणिकोऽपि सः ॥ ७० ॥

अथ पौषनामानि ।—

पौषस्तु पौषिकस्तैषः सहस्यो हैमनोऽपि च ॥ ७१ ॥

अथ माघ-फाल्गुननामानि ।—

माघस्तपाः, तपस्यस्तु फाल्गुनो वत्सरान्तकः ॥ ७२ ॥

अथ ऋतूनां स्वरूपम् ।—

चैत्रादिमासौ द्वौ द्वौ स्युर्नाम्ना षडृतवः क्रमात् ॥ ७३ ॥

अथ वसन्तादिऋतूनां स्वरूपम् ।—

भवेद्वसन्तो मधुमाधवाभ्यां स्यातां तथा शुक्रशुचौ निदाघः ।
नभोनभस्यौ जलदागमः स्यादिषोर्जकाभ्यां शरदं वदन्ति ॥७४
हेमन्तकालस्तु सहःसहस्यौ तपस्तपस्यौ शिशिरः क्रमेण ।
मासद्विकेनेति वसन्तकाद्या धीमद्भिरुक्ता ऋतवः षडेते ॥ ७५

अथ वसन्तनामानि ।—

ऋतुराजो वसन्तः स्यात् सुरभिर्माधवो मधुः ।
पुष्पमासः पिकानन्दः कान्तः कामरसश्च सः ॥ ७६ ॥

अथ निदाघनामानि ।—

निदाघस्तूष्मको घर्मो ग्रीष्म ऊष्मागमस्तपः ।
तापनश्चोष्णकालः स्यादुष्णश्चोष्णागमश्च सः ॥ ७७ ॥

अथ वर्षानामानि ।—

वर्षाः प्रावृड्वर्षकालो घर्मान्तो जलदागमः ।
मयूरोल्लासकः कान्तश्चातकाह्लादनोऽपि सः ॥ ७८ ॥

अथ शरत्-नामानि ।—

शरद्वर्षावसायः स्यान्मेघान्तः प्रावृड़त्ययः ॥ ७९ ॥

अथ हेमन्तनामानि ।—

ऊष्मापहस्तु हेमन्तः शरदन्तो हिमागमः ॥ ८० ॥

अथ शिशिरनामानि ।—

शिशिरः कम्पनः शीतो हिमकूटश्च कीटनः ।
इत्येतन्नामतः प्रोक्तमृतुषट्कं यथाक्रमम् ॥ ८१ ॥

अथ प्रात्यह्निकमृतुषट्कम् ।—

इह सुरभिनिदाघमेघकालाः
शरद्धिमशिशिरह्रायनाः क्रमेण ।
प्रतिदिनमृतवः स्युरूर्द्ध्वमर्को-
दयसमयाद्दशकेन नाड़िकानाम् ॥ ८२॥

अथोत्तरायणस्वरूपम् ।—

मकरक्रान्तिमारभ्य भानोः स्यादुत्तरायणम् ॥ ८३ ॥

अथ दक्षिणायनस्वरूपम् ।—

कर्कटक्रमणादूर्द्ध्वं दक्षिणायनमुच्यते ॥ ८४ ॥

अथ विषुवस्य स्वरूपं नाम च ।—

यदा तुलायां मेषे च सूर्य्यसंक्रमणं क्रमात् ।

तदा विषुवती स्यातां विषुवे अपि ते स्मृते ॥ ८५ ॥

अथ वत्सरस्य भेदो नामानि च ।—

कालज्ञैः षष्टिराख्याता वत्सराः प्रभवादयः ।
शरत्संवत्सरोऽब्दश्च हायनो वत्सरः समाः ॥ ८६ ॥

अथ ऋतुविशेषे वायुप्रवहणस्य दिग्विशेषः ।—

वसन्ते दक्षिणो वातो भवेद्वर्षासु पश्चिमः ।
उत्तरः शारदे काले पूर्वो हैमन्तशैशिरे ॥ ८७ ॥

अथ पूर्वादिप्रवाहितवायुगुणाः ।—

पूर्वस्तु मधुरो वातः स्निग्धः कटुरसान्वितः ।
गुरुर्विदाहशमनो वातदः पित्तनाशनः ॥ ८८
दक्षिणः षड्रसो वायुश्चक्षुष्यो बलवर्द्धनः ।
रक्तपित्तप्रशमनः सौख्यकान्तिबलप्रदः ॥ ८९ ॥
पश्चिमो मारुतस्तीक्ष्णः कफमेदोविशोषणः ।
सद्यः प्राणापहो दुष्टः शोषकारी शरीरिणाम् ॥ ९० ॥
उत्तरः पवनः स्निग्धो मृदुर्मधुर एव च ।
सकषायरसः शीतो दोषाणाञ्च प्रकोपणः ॥ ९१ ॥

अथ दिग्लक्षणम् ।—

कृत्वैकमवधिं तस्मादिदं पूर्वञ्च पश्चिमम् ।
इति देशो निर्दिश्येते यया सा दिगिति स्मृता ॥ ९२ ॥

अथ दिङ्नाम तस्या भेदश्च ।—

दिगाशा च हरित्काष्ठा ककुभा च निदेशिनि ।
सा च देशविभागेन दशधा परिकल्प्यते ॥ ९३ ॥

अथ पूर्व्वदिक्परिचयः ।—

ज्योतींषि तपनादीनि ज्योतिश्चक्रभ्रमीक्रमात् ।
यतो नित्यमुदीयन्ते सा पूर्वाख्या दिगुच्यते ॥ ८४ ॥

अथ दिक्चतुष्टयस्य सामान्यनाम ।—

पूर्वा च दक्षिणा चैव पश्चिमा चोत्तराऽपि च ।
प्रादक्षिण्यक्रमेणैताश्चतस्रः स्युर्महादिशः ॥ ८५ ॥

अथ पूर्व्वदक्षिणयोर्नामानि ।—

पूर्वा प्राची पुरो मघोन्यैन्द्री माघवती च सा ।
शमनी दक्षिणाऽवाची यामी वैवस्वती च सा ॥ ८६ ॥

अथ पश्चिमोत्तरयोर्नामानि ।—

पश्चिमा तु प्रतीची स्याद्वारुणी प्रत्यगित्यपि ।
उत्तरा दिक् तु कौबेरी दैवी सा स्यादुदीच्यपि ॥ ८७ ॥

अथ विदिशः ।—

दिशोर्द्वयोर्द्वयोर्मध्ये यो भागः कोणसंज्ञकः ।
विदिशस्ताश्चतस्रश्च प्रोक्ता उपदिशस्तथा ॥ ८८ ॥

अथ विदिक्चतुष्टयस्य परिचयः ।—

आग्नेयी स्यात्प्राच्यवाच्योस्तु मध्ये
नैर्ऋत्याख्या स्यादवाचीप्रतीच्योः ।
वायव्याऽपि स्यादुदीचीप्रतीच्यो-
रैशानी स्यादन्तरा प्राच्युदीच्योः ॥ ८९ ॥

अथोर्ध्वाधोमध्यदिशां परिचयः ।—

उपरिष्टाद्दिगूर्ध्वं स्यादधस्तादधरा स्मृता ।
अन्तस्त्वभ्यन्तरं प्रोक्तमन्तरं चान्तरालकम् ॥ १०० ॥

अथाङ्गुलादिक्रमेण मार्गपरिमाणम् ।—

स्पष्टस्त्वष्टयवैर्देशो मितो ज्ञेयोऽङ्गुलाह्वयः ।
स्याच्चतुर्विंशकैस्तैस्तु हस्तो हस्तचतुष्टयम् ॥ १०१ ॥
दण्डो दण्डैर्द्विसाहस्रैः क्रोशस्तेषां चतुष्टयम् ।
योजनं स्यादिति ह्येष देशस्योक्तो मिति-क्रमः ॥ १०२ ॥

अथ धान्यमानम् ।—

इति प्रस्तावतो वैद्यस्योपयुक्ततया मया ।
परिमाणं तथोन्मानमिति द्वितयमोच्यते ॥ १०३ ॥
धान्ये सा निष्टिका पुंसो यत्तु मुष्टिचतुष्टयम् ।
तद्द्वयेनाष्टिका ज्ञेया कुड़वस्तद्द्वयेन तु ॥ १०४ ॥
प्रस्थस्तु तच्चतुष्केण तच्चतुष्केण चाढ़को ।
ताश्चतस्रो भवेद्द्रोणः खारी तेषान्तु विंशतिः ॥ १०५ ॥

अथौषधपरिमाणम् ।—

गोधूमद्वितयोन्मितिस्तु कथिता गुञ्जा तया सार्द्धया
वल्लो वल्लचतुष्टयेन भिषजां माषो मतस्तच्चतुः ।
निष्को निष्कयुगं तु सार्द्धमुदितः कर्षः पलं तच्चतु-
स्तद्दत्तच्छतकेन चाथ च तुला भारस्तुलाविंशतिः ॥ १०६ ॥

[ इति नूकक्रमः । ]

इत्थं सत्त्वरजस्तमस्त्रिगुणिकानुक्रान्तदोषत्रय-
प्रक्रान्ताचितकालदेशकलनाभिख्यानसुख्यापितम्।
वर्गं स्वर्गसभासु भास्वरभिषग्वर्य्यातिवीर्य्यामय-
ध्वंसाश्चर्य्यकरीं प्रयाति मतिमानेनं पठित्वा प्रथाम्॥ १०७॥

संग्रामोत्सङ्गरिङ्गत्तुरगखुरपटोद्धूतधात्रीरजोभिः
संरम्भं याति सान्द्रे तमसि किल शमं यद्द्विषां याति सत्त्वम्।
तस्यैषोऽप्येकविंशः श्रयति खलु कृतौ नामनिर्माणचूड़ा-
रत्नापीड़े प्रशान्तिं नरहरिकृतिनः कोऽपि सत्त्वादिवर्गः॥१०८॥

इति श्रीनरहरिपण्डितविरचिते राजनिघण्टौ
सत्त्वादिरेकविंशो वर्गः।

---

## अथ मिश्रकादिवर्गः।

—०*०—

अथ वर्गपरिचयः।—

यान्यौषधानि मिलितानि परस्परेण
संज्ञान्तरैर्व्यवहृतानि च योगकृद्भिः।
तेषां स्वरूपकथनाय विमिश्रकाख्यं
वर्गं महागुणमुदारमुदीरयामः॥ १

अथ त्रिकटुनाम ।—

पिप्पली मरिचं शुण्ठी त्रयमेतद्विमिश्रितम् ।
त्रिकटु त्र्यूषणं त्र्यूषं * कटुत्रयकटुत्रिकम् ॥ २ ॥

अथ त्रिफलानाम ।—

हरीतकी चामलकं विभीतकमिति त्रयम् ।
त्रिफला त्रिफली चैव फलत्रयफलत्रिके ॥ ३ ॥ †

अथ मधुरत्रिफलानाम ।—

द्राक्षाकाश्मर्य्य ‡ खर्जूरी-फलानि मिलितानि तु ।
मधुरत्रिफला ज्ञेया मधुरादिफलत्रयम् ॥ ४ ॥

अथ सुगन्धित्रिफलानाम ।—

जातीफलं पूगफलं लवङ्गकलिकाफलम् ।
सुगन्धित्रिफला प्रोक्ता सुरभित्रिफला च सा ॥ ५ ॥

अथ वरार्द्धकम् आद्यपुष्पञ्च —

चन्दनं कुङ्कुमं वारि ¶ त्रयमेतद्वरार्द्धकम् ।
त्रिभागकुङ्कुमोपेतं तदुक्तं चाद्यपुष्पकम् ॥ ६ ॥

---

* त्र्यूषम् इत्यत्र व्योषम् इति पाठान्तरं वर्त्तते ।

† ग्रन्थान्तरे त्वेवमाह । तथाहि,—
"एका हरीतकी योज्या द्वौ च योज्यौ विभीतकौ ।
चौथि चामलकान्याहुस्त्रिफलेषा प्रकीर्त्तिता ॥"

‡ काश्मर्य्यः गाम्भारीफलम्, "गामारफल" इति भाषा ।

¶ वारि ह्रीवेरकम् ; सुगन्धबाला इति पश्चिमादौ ; करम्बाल मुष्टिबालेति महाराष्ट्रकर्णाटादौ प्रसिद्धम् । अस्मद्देशे गन्धबालेति ख्यातम् ।

अथ लवणत्रयनाम।—

सैन्धवञ्च विड़ञ्चैव रुचकं * चेति मिश्रितम्।
लवणत्रयमाख्यातं तच्च त्रिलवणं तथा ॥ ७ ॥

अथ क्षारत्रयनाम।—

सर्जिक्षारं यवक्षारं टङ्कणक्षारमेव च।
क्षारत्रयं समाख्यातं त्रिक्षारञ्च प्रकीर्त्तितम् ॥ ८ ॥

अथ समत्रितयनाम।—

हरीतकी नागरञ्च गुड़श्चेति त्रयं समम्।
समत्रितयमित्युक्तं त्रिसमञ्च समत्रयम् ॥ ९ ॥

अथ मधुरत्रयनाम।—

सितामाक्षिकसर्पींषि मिलितानि यदा तदा।
मधुरत्रयमाख्यातं त्रिमधु स्यान्मधुत्रयम् ॥ १० ॥ †

अथ त्रिशर्करानाम।—

गुड़ोत्पन्ना हिमोत्पन्ना मधुजातेति मिश्रितम्।
त्रिशर्करा च त्रिसिता सितात्रयसितात्रिके ॥ ११ ॥

---

* रुचकम् सौवर्चललवणम्; सचललवण इति भाषा; चोहारकोड़ा इति पश्चिमादौ।

† सिता शर्करा। माक्षिकः कपिलवर्णोऽतिस्थूलवनमक्षिकाभिः नानापुष्पेभ्यः समाहृत्योत्पादितः तैलवर्णमधुविशेषः। सर्पिः (सृप् गतौ, इत्यस्य रूपम्) संस्कारात् सर्पणात् सर्पिः, दुग्धसम्भूतस्नेहे, घृतेति पदार्थे।

अथ अञ्जनत्रितयनाम ।—

कालाञ्जनसमायुक्ते पुष्पाञ्जनरसाञ्जने ।
अञ्जनत्रितयं प्राहुस्त्र्यञ्जनं चाञ्जनत्रयम् ॥ १२ ॥

अथ त्रिदोषनाम ।—

वातः पित्तं कफश्चेति त्रयमेकत्र संयुतम् ।
दोषत्रयं त्रिदोषं स्याद्दोषत्रितयमित्यपि ॥ १३ ॥

अथ समत्रिदोषनाम ।—

वातपित्तकफा यत्र समतां यान्ति नित्यशः ।
त्रिदोषसममित्येतत्समदोषत्रयं तथा ॥ १४ ॥

अथ त्रिकण्टकनाम ।—

बृहती चाग्निदमनी दुःस्पर्शा चेति तु त्रयम् ।
कण्टकारीत्रयं प्रोक्तं त्रिकण्टं कण्टकत्रयम् ॥ १५ ॥ *

अथ त्रिकार्षिकम् ।—

नागरातिविषा मुस्ता त्रयमेतत्त्रिकार्षिकम् ॥ १६ ॥

अथ चातुर्भद्रकम् ।—

गुडूच्या मिलितं तच्च चातुर्भद्रकमुच्यते ॥ १७ ॥

अथ त्रिजातकं चातुर्जातकञ्च ।—

त्वगेलापत्रकैस्तुल्यैस्त्रिसुगन्धि त्रिजातकम् ।
नागकेशरसंयुक्तं चातुर्जातकमुच्यते ॥ १८ ॥ †

---

* कण्टकत्रयेषु बृहती, गन्धिकारी, दुरालभेति च बोद्धव्या ।

† समभागत्वगेलापत्रकेशराणां यथाक्रमं—"दारुचिनि, एलाच, तेजपत्र, नागेश्वर" इति भाषा ।

अथ कटुचातुर्जातकम् ।—

एलात्वक्पत्रकैस्तुल्यैर्मरिचेन समन्वितैः ।
कटुपूर्वमिदं चान्यच्चातुर्जातकमुच्यते ॥ १९ ॥

अथ देवकर्दमः ।—

श्रीखण्डागुरुकर्पूर-काश्मीरैस्तु समांशकैः ।
मृगाङ्कमुकुटाह्वोऽयं मिलितैर्देवकर्दमः ॥ २० ॥

अथ यक्षकर्दमः ।—

कर्पूरागुरुकस्तूरी-कक्कोलैर्यक्षधूपकः ।
एकीकृतमिदं सर्वं यक्षकर्दम इष्यते ॥ २१ ॥

अन्यच्च ।—

कुङ्कुमागुरुकुरङ्गनाभिकाचन्द्रचन्दनसमांशसम्भृतम् ।
त्र्यम्बपूजनपरैकगोचरं यक्षकर्दममिमं प्रचक्षते ॥ २२ ॥

अथ पञ्चसुगन्धिकम् ।—

कर्पूर-कक्कोल-लवङ्गपुष्प-गुवाक-जातीफल-पञ्चकेन ।
समांशभागेन च योजितेन मनोहरं पञ्चसुगन्धिकं स्यात् ॥२३॥

अथ पञ्चकोलकम् ।—

पिप्पलीपिप्पलीमूल-चव्यचित्रकनागरैः ।
सर्वैरेकत्र मिलितैः पञ्चकोलकमुच्यते ॥ २४ ॥

अथ पञ्चवेतसम् ( पञ्चवल्कलम् ) ।—

न्यग्रोधोदुम्बराश्वत्थ-[illegible]वेतसवल्कलैः ।
सर्वैरेकत्र मिलितैः पञ्चवेतसमुच्यते ॥ २५ ॥ *

---

* न्यग्रोधः वटः, उदुम्बरः यज्ञाङ्गकः, अश्वत्थः [illegible]

अथ लघुपञ्चमूलकम् ।—

शालिपर्णी पृश्निपर्णी वृहती कण्टकारिका ।
तथा गोक्षुरकश्चेति लघ्विदं पञ्चमूलकम् ॥ २६ ॥

अथ महापञ्चमूलकम् ।—

विल्वोऽग्निमन्थः श्योनाकः काश्मर्य्यः पाटला तथा ।
सर्वैस्तु मिलितैरेतैः स्यान्महापञ्चमूलकम् ॥ २७ ॥
पञ्चमूलकयोरेतद्द्वयञ्च मिलितं यदा ।
तदा भिषग्भिराख्यातं गुणाढ्यं दशमूलकम् ॥ २८ ॥

अथ मध्यमपञ्चमूलकम् ।—

बलापुनर्नवैरण्ड-सूप्यपर्णीद्वयेन * च ।
एकत्र योजितैनैतन्मध्यमं पञ्चमूलकम् ॥ २९ ॥

अथ पञ्चामृतयोगः † ।—

गुडूची गोक्षुरश्चैव मूषली मुण्डिका तथा ।
शतावरीति पञ्चानां योगः पञ्चामृताभिधः ॥ ३० ॥

---

महाराष्ट्रकर्णाटतैलङ्गेषु पिप्पल, रात्रिचेट्टु, कुलुजुव्विचेट्टु इति प्रसिद्धः । प्लक्षः पर्कटीवृक्षः, पाकुड़ इति भाषा । वेतसः स्वनामख्यातः पत्रशाक-लतायाम् ; "वेतस शाक" इति भाषा ।

* सूप्यपर्णीद्वयशब्देन मुद्गपर्णीमाषपर्ण्याविव ग्राह्यौ ।

† "गुलुञ्च, गोक्षुर, तालमूली, मुण्डीरी, शतमूली," इत्येषां पञ्चद्रव्याणां मिलितसमभागः ।

अथ दिव्यपञ्चामृतम्।—

गव्यमाज्यं दधि क्षीरं माक्षिकं शर्करान्वितम्।
एकत्र मिलितं ज्ञेयं दिव्यं पञ्चामृतं परम्॥ ३१॥

अथ पञ्चगव्यम्।—

गोमूत्रं गोमयं क्षीरं गव्यमाज्यं दधीति च।
युक्तमेतद्यथायोगं पञ्चगव्यमुदाहृतम्॥ ३२॥

अथ पञ्चनिम्बम्।—

निम्बस्य पत्रत्वक्पुष्प-फलमूलैर्विमिश्रितैः।
पञ्चनिम्बं समाख्यातं तत्तिक्तं निम्बपञ्चकम्॥ ३३॥

अथ पञ्चाम्लफलम्।—

कोल-दाड़िम-वृक्षाम्लं चुक्रकी साम्लवेतसा।
फलं पञ्चाम्लमुद्दिष्टमम्लपञ्चफलं स्मृतम्॥ ३४॥ *

अथ फलाम्लपञ्चकम्।—

जम्बीर-नारङ्ग-सहाम्लवेतसैः सतिन्तिड़ीकैश्च सवीजपूरकैः।
समांशभागेन तु मेलितैरिदं द्वितीयमुक्तञ्च फलाम्लपञ्चकम्॥३५॥†

* "कुल, दाड़िम, तेँतुल, चुक्रक, अम्लवेतस।" इति च यथाक्रममेतेषां वङ्गभाषा। एतानि समभागमिश्रितपञ्चद्रव्याणि। "चुक्रकी" इत्यत्र "चुक्रिका" इति पाठान्तरं दृश्यते।

† "गोँड़ालेबु, नाराङ्गालेबु, अम्लवेतस, तेँतुल, टाबालेबु।" इति च यथाक्रममेतेषां भाषाः; तेषां भाषान्तरं च स्वस्वपर्य्याये मृग्यम्।

अथाम्लवर्गः ।—

चाङ्गेरी लिकुचाम्लवेतसयुतं जम्बीरकं पूरकं
नारङ्गं फलषाड़वस्त्विति तु पिण्डाम्लञ्च वीजाम्लकम् ।
अम्बष्ठासहितं द्विरेतदुदितं पञ्चाम्लकं तद्द्वयं
विज्ञेयं करमर्दनिम्बुकयुतं स्यादम्लवर्गाह्वयम् ॥ ३६ ॥ *

अथ पञ्चसिद्धौषधिकम् ।—

तैलकन्दः सुधाकन्दः क्रोड़कन्दो रुदन्तिका ।
सर्पनेत्रयुताः पञ्च सिद्धौषधिकसंज्ञकाः ॥ ३७ ॥

अथ पञ्चशैरीषम् ।—

शैरीषं कुसुमं मूलं फलं पत्रं त्वगित्ययम् ।

* चाङ्गेरी अम्ललोणिका, आमरुल इति वङ्गभाषा ; हिं चौपतिया ; मं आम्बवती ; कं पुलुम्बुणिसे । लिकुचम् चुक्रम् ; चुकापालङ् इति वङ्गभाषा ; ( लिकुच इत्यत्र लकुचेति पाठान्तरं दृश्यते ; मतान्तरे डहुकवृक्षः ; हिं वड़हर ; डेलो इति वङ्गभाषा । ) अम्लवेतस हिं आमलटास ; "थैकल" इति लोके । जम्बीरकः जामीर इति वङ्गभाषा ; हिं निम्बू ; मं इड़ ; कं कञ्चिले ; तें निम्मचेट्टु । पूरकः वीजपूरकः ; टावालेवु इति वङ्गभाषा ; हिं विजौरा ; मं माहुलिङ्ग ; कं मावला ; तें मादीफलपुचेट्टु ; उत्० कलम्बा । नारङ्गं नागरङ्गम् ; हिं सन्त्रा, नारङ्गी ; तें गञ्जनिम्म ; नारंजिचेट्टु ; तां किचिलिचेट्टु । फलषाड़वः दाड़िमः ; हिं अनार ; तें डानिम्मचेट्टु ; तां मादलइचेडि । पिण्डाम्लं कपित्थाम्लम् । वीजाम्लं वृक्षाम्लम् । अम्बष्ठा आम्रातकम् । करमर्दकं स्वनामख्यातम् ; "करमचा" इति वङ्गभाषा ; हिं करौंदा ; मं करवन्दे ; कं करिजिगे । निम्बूकम् अम्लजम्बीरम् ; "कागजीलेवु" इति वङ्गभाषा ; मं निम्बे ; कं निम्बू ।

कीटारिः कथितो योगः पञ्चशैरीषकाभिधः ॥ ३८ ॥

अथ पञ्चाङ्गम् ।—

त्वक्पत्रकुसुमं मूलं फलमेकस्य शाखिनः ।
एकत्र मिलितं तच्चेत् पञ्चाङ्गमिति संज्ञितम् ॥ ३९ ॥

अथ पञ्चगणः ।—

विदारिगन्धा वृहती पृश्निपर्णी निदिग्धिका ।
श्वदंष्ट्रा चेति संप्रोक्तो योगः पञ्चगणाभिधः ॥ ४० ॥ *

अथ पञ्चशूरणम् ।—

अत्यम्लपर्णी-काण्डीर-मालाकन्द-द्विशूरणैः ।
प्रोक्तो भवति योगोऽयं पञ्चशूरणसंज्ञकः ॥ ४१ ॥

अथ महापञ्चविषम् ।—

शृङ्गिकः कालकूटश्च मुस्तको वत्सनाभकः ।
सक्तुकश्चेति योगोऽयं महापञ्चविषाभिधः ॥ ४२ ॥ †

अथ उपविषाणि ।—

स्नुह्यर्ककरवीराणि लाङ्गली विषमुष्टिका ।
एतान्युपविषाण्याहुः पञ्च पाण्डित्यशालिनः ॥ ४३ ॥ ‡

---

* शालिपाणि, वृहती, चाकुले, कण्टकारी, गोक्षुर ; इति च यथाक्रममेतेषां वङ्गभाषाः ।

† शृङ्गिकः स्थावरविषभेदः । शृङ्गिक इत्यत्र शृङ्गी चेति पाठान्तरमस्ति । सक्तुक इत्यत्र शौक्तिकेयः शङ्खकर्णीति च पाठभेदो दृश्यते । सक्तुकः "छातारविष" इति वङ्गभाषा ।

‡ स्नुही, "मनसा" इति वङ्गभाषा ; हिं थुहर, तिधार, आकुनिया ; तें चेमुडुचेट्टु ; वम्० निवडुंग । अर्कः "आकन्द" इति वङ्गभाषा ; हिं

अथ मूत्रपञ्चकम् ।—

गवामजानां मेषीणां महिषीणां च मिश्रितम् ।
मूत्रेण गर्दभीनां यत्तन्मूत्रं मूत्रपञ्चकम् ॥ ४४ ॥

अथ त्रिलोहं पञ्चलोहकञ्च ।—

सुवर्णं रजतं ताम्रं त्रयमेतत्त्रिलोहकम् ॥ ४५ ॥
वङ्गनागसमायुक्तं तत्प्राहुः पञ्चलोहकम् ॥ ४६ ॥

अथ ग्रहाङ्गपञ्चलोहकम् ।—

सुवर्णं रजतं ताम्रं त्रपु कृष्णायसं समम् ।
ग्रहाङ्गमिति बोद्धव्यं द्वितीयं पञ्चलोहकम् ॥ ४७ ॥

अथ क्षारपञ्चकम् ।—

यव-मुष्कक-सर्जानां पलाश-तिलयोस्तथा ।
क्षारैस्तु पञ्चभिः प्रोक्तः पञ्चक्षाराभिधो गणः ॥ ४८ ॥

अथ लवणपञ्चकं लवणषट्कञ्च ।—

काच-सैन्धव-सामुद्र-विड्-सौवर्चलैः समैः ॥ ४९ ॥
स्यात् पञ्चलवणं तच्च रम्भोपेतं षडाह्वयम् ॥ ५० ॥

अथ क्षारषट्कम् ।—

धवापामार्गकुटज-लाङ्गलीतिल-मुष्ककैः ।
क्षारैरेतैस्तु मिलितैः क्षारषट्कमुदाहृतम् ॥ ५१ ॥

---

मान्दार ; मं रुइ ; कं अक्के ; तें जिल्लेटु चेट्टु । करवीरः करवी इति वङ्गभाषा ; हिं कणेली ; मं कणेर, कह्लेर ; कं वाफणलिङ्गे ; तें गन्नेरु । लाङ्गलिः विषलाङ्गलिया इति वङ्गभाषा । विषमुष्टिका कोश-मुष्टिः, "विषदोड़ि" इति लोके ।

अथ सप्तधातवः ।—

रसासृङ्मांसमेदोऽस्थि-मज्जाशुक्रसमाह्वयैः ।
शरीरस्थैर्य्यदैरेतैः सप्तधातुमयो गणः ॥ ५२ ॥

अथ महारसाष्टकम् ।—

दरदः पारदं सस्यो * वैक्रान्तं कान्तमभ्रकम् ।
माक्षिकं विमलश्चेति स्युरेतेऽष्टौ महारसाः ॥ ५३ ॥

अथोपरसाः ।—

खेचराञ्जन-कङ्कुष्ठ-गन्धाल-गैरिक-चितीः ।
शैलेयाञ्जनसंमिश्राः शंसन्त्युपरसान् बुधाः ॥ ५४ ॥

अथ सामान्यरसाः ।—

कम्पिल्ल-गौरी-चपला-कपर्द-सशैल-सिन्दूरक-वह्निजारान् ।
पाषाणिनो वोदरशृङ्गयुक्तानित्यष्ट सामान्यरसानि चाहुः ॥ ५५ ॥

अथाष्टलोहकम् ।—

पञ्चलोहसमायुक्तैः कान्तमुण्डकतीक्ष्णकैः ।
कल्पितः कथितो धीरैरष्टलोहाभिधो गणः ॥ ५६ ॥

अथ क्षारदशकम् ।—

शिग्रु-मूलक-पलाश-चुक्रिका-चित्रकार्द्रक-सनिम्बसम्भवैः ।
इक्षु-शेखरिक-मोचकोद्भवैः क्षारपूर्वदशकं प्रकीर्त्तितम् ॥ ५७ ॥†

---

* सस्यो इत्यत्र शङ्खः सौसश्चेति पाठभेदो दृश्यते ।

† सजिना, मूला, पलाश, तिन्तिड़ी, चिता, आदा, निम्ब, इक्षु, अपामार्ग, कदली इति च यथाक्रममेतेषां बङ्गभाषा।

अथ मूत्रदशकम् ।—

मूत्राणि हस्ति-महिषोष्ट्र-गवाजकानां
मेषाश्व-रासभक-मानुष-मानुषीणाम् ।
यत्नेन यत्र मिलितानि दशेति तानि
शास्त्रेषु मूत्रदशकाह्वयभाञ्जि भान्ति ॥ ५८ ॥

अथ मधुरजीवकादिगणः ।—

स्याज्जीवकर्षभक-युग्मयुग-द्विमेदा-
काकोलिकाद्वययुतद्विकसूप्यपर्ण्यौ ।
जीव्या मधूकयुतया मधुराह्वयोऽयं
योगो महानिह विराजति जीवकादिः ॥ ५९ ॥ *

अथाष्टवर्गः ।—

जीवकर्षभकौ मेदे काकोल्यावृद्धिवृद्धिके ।
एकत्र मिलितैरेतैरष्टवर्गः प्रकीर्त्तितः ॥ ६० ॥

अथ सर्वौषधिगणः ।—

कुष्ठ-मांसी-हरिद्राभिर्वचा-शैलेय-चन्दनैः ।
मुरा-कर्चूर-मुस्ताभिः सर्वौषधमुदाहृतम् ॥ ६१ ॥

अथ वेशवारः ।—

अजाजी मरिचं शुण्ठी ग्रन्थि धान्यं निशाद्वयम् ।

---

* जीवक, ऋषभक, ऋद्धि, वृद्धि, मेदा, महामेदा, काकोली, क्षीरकाकोलि, मुद्गपर्णी, माषपर्णी, जीवन्ती, यष्टिमधु इति च यथाक्रम-मेतेषां वङ्गभाषा।

पिप्पली मरिचश्चेति * वेशवारगणो मतः ॥ ६२ ॥

अथ सुगन्धामलकः।—

सर्वौषधिसमायुक्ताः शुष्काश्चामलकत्वचः।
यदा तदाऽयं योगः स्यात् सुगन्धामलकाभिधः ॥ ६३ ॥

अथ सन्तर्पणम्।—

द्राक्षादाडिमखर्जूर-कदलीशर्करान्वितम्।
लाजाचूर्णं समध्वाज्यं सन्तर्पणमुदाहृतम् ॥ ६४ ॥

अथ मन्थः।—

सक्तुभिः सर्पिषाऽभ्यक्तैः शीतवारिपरिप्लुतैः।
नात्यच्छो नातिसान्द्रश्च मन्थः इत्यभिधीयते ॥ ६५ ॥

अथ रक्तवर्गः।—

दाडिमं किंशुकं लाक्षा बन्धूकञ्च निशाद्वयम्।
कुसुम्भपुष्पं मञ्जिष्ठा इत्येते रक्तवर्गकः ॥ ६६ ॥ †

अथ शुक्लवर्गः।—

खटिनीश्वेतसंयुक्ताः शङ्खशुक्तिवराटिकाः।
भृष्टाश्मशर्करा चेति शुक्लवर्ग उदाहृतः ॥ ६७ ॥

अथ भार्ग्यादिः किरातादिः द्विविधाष्टादशाङ्गश्च।—

भार्गीशटीपुष्करवत्सबीजदुरालभाशृङ्गिपटोलतिक्ताः।
किरातविश्वेन्द्रकणीन्द्रबीजधान्यानि तिक्तं सुरदारुकञ्च ॥६८॥

---

* द्वितीयमरिचशब्देन सितमरिचं ग्राह्यम्। केचित्तु अत्र लङ्केति ख्यातं कुमरीचकं गृह्णन्ति।

† निशाद्वयम् इत्यत्र निशाह्वयम् इति तथा रक्तवर्गकः इत्यत्र रक्तवर्णक इति च पाठान्तरं दृश्यते।

अष्टादशाङ्गाभिध एष योगः समागमे स्याद्दशमूलकेन ।
द्विधा च भार्ग्यादिक एक एष ज्ञेयो द्वितीयस्तु किरातकादिः ॥६८॥

अथ शिखरिणीसन्धानम् ।—

द्वात्रिंशत्पलसम्मितं दधि पलान्यष्टौ च खण्डं पल-
स्यार्द्धं चेन्मरिचस्य तेन तुलितं युग्मं त्वगेलाह्वयम् ।
मध्वाज्यं च युतं * तदर्द्धमिलितं संशोधितैर्योजिता
भाण्डे स्याद्धिमवासिते शिखरिणी श्रीकण्ठभोग्या गुणैः ॥७०॥

इत्थं नानामिश्रयोगाभिधानादेनं वर्गं मिश्रकाख्यं विदित्वा ।
वैद्यः कुर्य्याद्योगमत्रत्यसंज्ञाप्रज्ञासंज्ञो बन्धुभिर्येन धीरः ॥ ७१ ॥

शौर्य्यासङ्गरता रमा स्वयमुमा शश्वच्छिवासङ्गिनी
सा वाणी चतुराननप्रणयिनी श्रीसम्मिता यं श्रिता ।
तस्यागादभिधानशेखरमणौ वर्गो नृसिंहेशितु-
र्द्वाविंशोऽवसितिं कृतौ कृतधियां यो मिश्रकाख्यो मतः ॥७२॥

इति श्रीनरहरिपण्डितविरचिते निघण्टुराजापरपर्य्याय-
वत्यभिधानचूडामणौ मिश्रकाख्यो वर्गो द्वाविंशः ।

---

## अथैकार्थादिवर्गः ।

—०*०—

तत्रैकार्थाः ।—

श्रीश्च लक्ष्मीफले ज्ञेया त्वशनो वीजवृक्षकः ।
शालूकं पद्मकन्दे स्यात् सदापुष्पो रविद्रुमे ॥ १

---

* युतम् इत्यत्र घृटेति पाठान्तरं लक्ष्यते ।

कुबेरको नन्दिवृक्षे गोकण्टो गोक्षुरे तथा।
दन्तफलस्तु पिप्पल्यां कसेरुर्भद्रमुस्तके ॥ २ ॥
नागरोत्था कच्छुरुहा अङ्कोले दीर्घकीलके।
वल्लकी सल्लकीवृक्षे मातुलुङ्गे तु पूरकः ॥ ३ ॥
अश्मघ्नी तु कुमारी स्यादङ्कोले गूढमल्लिका।
अतिविषा श्वेतवचोपकुञ्ची स्थूलजीरके ॥ ४ ॥
कवचः स्यात्पर्पटके लवणं तु पयोधिजम्।
वृक्षत्वक् सप्तपर्णे स्यात्काम्भोजी वाकुची तथा ॥ ५ ॥
कीटपादी हंसपाद्यां कुनटी तु मनःशिला।
वैकुण्ठमर्जके प्रावृड्भूधात्रयान्तु तमालिनी ॥ ६ ॥
शतकुन्दः शरीरे * स्यादग्निकाष्ठं तथाऽगुरौ।
सूक्ष्मपत्री शतावर्य्यां क्षीरपर्ण्यर्कसंज्ञके ॥ ७ ॥
शौण्डी तु पिप्पली ज्ञेया कस्तूर्य्यां मदनी तथा।
ब्रह्मपर्णी पृश्निपर्ण्यां चित्रपर्णी च सा स्मृता ॥ ८ ॥
छत्रपर्णः सप्तपर्णे पीलुपर्णी तु तुण्डिका।
शाकश्रेष्ठस्तु वृन्ताके शङ्करः † शमिरुच्यते ॥ ९ ॥
गोरटः ‡ स्याद्विट्खदिरे तुण्डिश्चारण्यविम्बिका।
विष्णुगुप्तं तु चाणक्य-मूलेऽनन्ता यवासके ॥ १० ॥
कपिकच्छुरात्मगुप्ता वातपोथस्तु किंशुके।
पीता तु रजनी ज्ञेया बोधिवृक्षस्तु पिप्पलः ॥ ११ ॥

---

* शरीर इत्यत्र करीर इति पाठान्तरम्।

† शङ्कर इत्यत्र शङ्खर इत्यन्यतरः पाठः।

‡ गोरट इत्यत्र भरट इत्यपरः पाठः।

उशीरे समगन्धिः स्याद्धिङ्गुले चूर्णपारदः । *
हिङ्गावगूढ़गन्धः स्याद्गोदन्ते विस्रगन्धिके ॥ १२ ॥
शम्यामीशान इत्याहुर्दिवान्धो घूक उच्यते ।
पयस्या चीरकाकोल्यां शतवेध्यम्लवेतसे ॥ १३ ॥
रोचनी नारिकेले च भूधात्र्यां चारुहा स्मृता ।
प्रियां प्रियङ्गुके प्राहुः खराह्वा चाजमोदके ॥ १४ ॥
तगरं दण्डहस्ती स्याद्रसोनो लशुने स्मृतः ।
तपस्विनी जटामांस्यां मेषपुष्पेऽजशृङ्गिका ॥ १५ ॥
ज्ञेयं मातुलपुष्पं तु धुस्तूरे चीरके रिपुः ।
शष्पं बालतृणं प्रोक्तं शैलेयं चाश्मपुष्पके ॥ १६ ॥
श्रीपुष्पं तु लवङ्गे स्याद्बालपुष्पी तु यूथिका ।
स्थूलपुष्पं तु झिण्डूके चित्रके दारुणः स्मृतः ॥ १७ ॥
अथ स्याद्विषपुष्पं तु पुष्पं श्यामदलान्वितम् ।
बलभद्रः कदम्बोऽन्यः † शाखोटे भूतवृक्षकः ॥ १८ ॥
रामा तमालपत्रे स्याद्भूर्जे चर्मदलो मतः ।
आत्मशल्या शतावर्य्यां पिक्यां कलभवल्लभा ‡ ॥ १९ ॥
विप्रप्रिया पलाशे च ज्वरारिस्तु गुड़ूचिका ।
कण्टकार्य्यां तु श्वेतायां ज्ञेया तु कपटेश्वरी ॥ २० ॥

---

* चूर्णपारद इत्यत्र जीर्णपारद इत्यमपि पठ्यते ।

† बलभद्रः कदम्बोऽन्य इत्यत्र बलभद्रे कदम्बेऽन्य इति पाठः साधुतरं ज्ञेयम् ।

‡ पिक्यां कलभवल्लभा इत्यत्र पीलौ कलभवल्लभेति पाठान्तरमस्ति ।

पाण्डुफलं पटोले स्याच्छालिपर्ण्यां स्थिरा मता।
गायत्री खदिरे प्रोक्ता स्यादेर्वारुस्तु कर्कटी॥ २१॥
नीवारेऽरण्यशालिः स्यात्पार्वत्यां गजपिप्पली।
सूक्ष्मायां देवपुत्री स्यादङ्कोले देवदारु च॥ २२॥
रीठां प्रकीर्य्यके प्राहुर्दन्त्यां केशरुहा स्मृता।
आम्रस्तु सहकारे स्यात् श्रेयस्ताले द्रुमेश्वरः॥ २३॥
दुष्पुत्रश्चोरके प्रोक्तो माड़े चैव वितानकः।
माचिषा मण्डके प्रोक्ता मार्जारी मृगनाभिजा॥ २४॥
तिन्तिड़ीके तु बीजाम्लः कदल्यां तु सकृत्फला।
जर्त्तिलश्चारण्यतिले तार्च्यशैलं रसाञ्जने॥ २५॥
विभीतके कलिन्दः स्याच्छालिपर्ण्या तु पाटला।
रङ्गमाता तु लाक्षायामग्निज्वाला तु धातकी॥ २६॥
तिनिशे स्याद्भस्मगर्भा मधूल्यां मधुकर्कटी।
सितगुञ्जा काकपीली चन्द्रायान्तु गुड़ूचिका॥ २७॥
नटश्चाशोकवृक्षे स्याद्दाड़िमे फलषाड़वः।
निष्पावे तु पलङ्कः स्यात्कलशी पृश्निपर्णिका॥ २८॥
राजान्ने दीर्घशूकः स्याज्जरणः कृष्णजीरके।
पिङ्गा चैव हरिद्रायां श्वेतशूके यवः स्मृतः॥ २९॥
श्यामाके तु त्रिवीजः स्यादाढ़क्यां तुवरी स्मृता।
गोधूमेऽथं मृदुः प्रोक्तः करला त्रिपुटा तथा॥ ३०॥
सूपश्रेष्ठो हरिन्मुद्गे राजान्ने ह्रस्वतण्डुलः।
मकुष्टो वनमुद्गे स्यान्मकुष्ठे च क्रमोलकः॥ ३१॥
कृष्णः काश्मीरवृक्षे स्यात् विषतिन्दुर्विषद्रुमे।

पलाशे पत्रकः प्रोक्तो न्यग्रोधो रोहिणः स्मृतः ॥ ३२ ॥
नारिकेले रसफलस्तथा ताले तु शम्बरः ।
विकङ्कतो मृदुफले केसरे वकुलः स्मृतः ॥ ३३ ॥
शेफाली सिन्धुवारे च मत्स्याक्षे हिलमोचिका ।
वास्तुके श्वेतचिल्ली स्यात् वेल्लिका स्यादुपोदकी ॥ ३४ ॥
आरामवल्लिकायां तु मूलपोती तु विश्रुता ।
मकरन्दः पुष्परसे जात्यां तु सुमना स्मृता ॥ ३५ ॥
आम्रातके पीतनकः क्षौद्रे पुष्पासवः स्मृतः ।
मृदुः कन्या तु सम्प्रोक्ता जीवा स्याज्जीवके तथा ॥ ३६
छिन्नायां तु गुडूची स्यान्नारायण्यां शतावरी ।
सर्जे तु बस्तकर्णी च शलाटुर्विल्वके तथा ॥ ३७ ॥
सर्जान्तरे चाश्वकर्णी गोकर्णी समधौ रसे ।
कृष्णं नीलाञ्जने प्राहुराखुकर्णी तु शम्बरी ॥ ३८ ॥
दुर्गा तु श्यामयष्टी स्याद्भूतो मुस्ताऽथ दुर्ग्रहः ।
अपामार्गोऽथ रक्ता तु मञ्जिष्ठायां शटस्तथा ॥ ३९ ॥
धुस्तूरे ब्रह्मजा ब्राह्मी गन्धर्वः कोकिले स्मृतः ।
सरटी तु दुरारोहा वाहुल्यां तर्वटः स्मृतः ॥ ४० ॥
सर्षपं तु दुराधर्षो ह्रीवेरं बालके तथा ।
हैमवती चाल्परसा भिषङ्मातोऽटरूषके ॥ ४१ ॥
ब्रह्मपुत्री तु भार्गी स्याद्धस्तिपर्णी तु कर्कटी ।
तुलसी बहुमञ्जर्य्यां कटभ्यां गर्दभी स्मृता ॥ ४२ ॥
कच्छुघ्नी हवुषायाञ्च शाल्मली च यमद्रुमे ।
सूक्ष्मैला चैव कोरङ्ग्यां गन्धाढ्यां धूम्रपत्रिका ॥ ४३ ॥

शैलजा गजपिप्पल्यां चोरिणी तु कुटुम्बिनी ।
देवबलायां त्रायन्ती कटी च खदिरे स्मृता ॥ ४४ ॥
इन्दीवरा करम्भायां कन्दे चेन्दीवरं स्मृतम् ।
पुष्पान्तरे राजकन्या पार्थिवे तगरं तथा ॥ ४५ ॥
सागरे रत्नगर्भश्च रत्नगर्भा तु मेदिनी ।
सुवर्णं काञ्चनं ज्ञेयं हेमदुग्धा तु काञ्चनी ॥ ४६ ॥
प्रसारिण्यां राजबला कर्पूरे हिमबालुकः ।
हिमं कर्पूरके प्राहुर्गोशीर्षं चन्दनं स्मृतम् ॥ ४७ ॥
ब्रह्मदारुः स्मृतः फञ्जर्यां पर्णगन्धा पर्णधा स्मृता ।
वत्सादनी गुडूच्याञ्च सोमवल्लयम्लवल्लिका ॥ ४८ ॥
नद्याम्रे च समष्ठिलोऽथ रजनी स्यात् कालमेष्यां बुधैः
दुग्धार्हस्तिलके पलाण्डुरिति च स्याद्दीपने चोन्नतः ।
मोचा हस्तिविषाणके च कथिता भार्ग्यां तु पद्मा स्मृता
निम्बे शीर्णदलस्तथाऽत्र कथितः स्याद्धान्यराजो यवे ॥ ४९

इत्येकार्थाः ।

## अथ द्व्यर्थाः ।

-०००-

सौराष्ट्रां रुचिदे चैव सन्धानश्च प्रचक्षते ।
पलाशिके शटी लाक्षा कितवश्चोरके शठे ॥ १ ॥
बलाका बर्हिणश्चैव मेघानन्दः प्रकीर्त्तितः ।
आकाशेऽभ्रके गगनं जलूका मत्कुणास्त्रपो: ॥ २ ॥

नासा-नचत्रयोर्नाड़ी कोलायां शुण्डिके कणा ।
ज्वरघ्नश्छिन्नवास्तूके ललना चारसर्जयोः ॥ ३ ॥
मञ्जिष्ठायां गुडूच्यान्तु कुमारी नागपूर्विका ।
मुद्गरे सप्तपर्णी स्यात् सप्तच्छदमुदाहृतम् ॥ ४ ॥
कृत्रिमकं विड़े काचे पाक्यञ्च यवजे विड़े ।
सर्पान्तरे पटोले च कुलकः समुदाहृतः ॥ ५ ॥
जन्तुकायान्तु वास्तुके विज्ञेया चक्रवर्त्तिनी ।
मधुरा जीवके प्रोक्ता मेदायाञ्च तथा स्मृता ॥ ६ ॥
कर्कन्धूश्चेति सम्प्रोक्तो बदरे पूतिमारुते ।
वासन्ती कोकिलायान्तु दन्त्यापुष्पं * प्रचक्षते ॥ ७ ॥
चन्द्राब्जे चोत्पलं कुष्ठे क्रकरश्चव्य-वातयोः ।
चपला मद्य-मागध्योर्धरण्यां खदिरे क्षमा ॥ ८ ॥
सिन्धुपुष्पं कदम्बे च वकुले चाथ लोमशा ।
काकोल्याञ्च वचायाञ्च सूक्ष्मैला चेन्द्रवारुणी ॥ ९ ॥
ऐन्द्र्यां गोदावरी चैव गौतम्यां रोचना तथा ।
कुसुम्भेऽरण्यजे चैव कौसुम्भं कुसुमाञ्जने ॥ १० ॥
शटी गन्धनिशायाञ्च चोरके चाथ कर्कटी ।
देवदाल्यां त्रपुस्याञ्च शताह्वायां शतावरी ॥ ११ ॥
स्मिशिस्तु तुत्थनीलिन्यां सूक्ष्मैलायां तथा स्मृता ।
वितुन्नकन्तु भूधात्र्यां ख्याता कुस्तुम्बरी तथा ॥ १२ ॥
वर्हिर्दर्भे मयूरे च प्लव-मर्कटयोः प्लवः ।

---

* दन्त्यापुष्पमित्यत्र पुष्पजात्यामिति पाठान्तरं वर्त्तते ।

आखुपर्णी सुतश्रेण्यां प्रत्यक्श्रेण्यां तथा स्मृता ॥ १३ ॥
वस्त्रे तमालपत्रे च अंशुकः समुदाहृतः ।
दर्भे च कुशिके वज्रं कङ्गुधान्ये प्रियङ्गुके ॥ १४ ॥
कङ्गुरङ्गारवल्ली तु फञ्जी-हस्तिकरञ्जयोः ।
वक्रपुष्पमगस्त्ये च पलाशे च खपुच्छकम् ॥ १५ ॥
माषपर्ण्यां शुनः पुच्छे चिल्लो स्याच्छाकलोध्रयोः ।
अथवा चेन्द्रवारुण्यां शक्राह्वेन्द्रयवं तथा ॥ १६ ॥
काकभाण्डी काकतुण्ड्यां ख्याता हस्तिकरञ्जके ।
दीर्घाङ्घ्र्यां पलाशे च याज्ञिकोऽथ विदारिका ॥ १७ ॥
काश्मर्य्याञ्च शृगाल्याञ्च टेण्टो च मृगधूर्त्तके ।
भल्लकोऽथ रुदन्त्याञ्च गोक्षुरे चणपत्रकः ।
कटुका-गजपिप्पल्योः ख्याता च शकुलादनी ॥ १८ ॥
मन्थानके समाख्यातो राजवृक्षस्तृणाधिपे ।
मदने कुटिले चैव तगरं चाथ रक्तिका ॥ १९ ॥
गुञ्जायां राजिकायाञ्च पिशुनञ्चापि कुङ्कुमे ।
तगरेऽथ यवाह्वायां यवक्षारं यवासिका ॥ २० ॥
अङ्कुरौदनयोः कूरो दन्ती-मधुकपुष्पयोः ।
मधुपुष्पञ्च शोफघ्नो शालिपर्णी-पुनर्नवे ।
बालपत्रो यवासे च खदिरे चाथ बालके ॥ २१ ॥
उदीच्यमुत्तरे देशे कपिः कोश-तुरुष्कयोः ।
लाङ्गली-दर्भयोः सीरो प्रग्रहे जलवेतसे ।
व्याधिघातो लवङ्गञ्च श्रीगन्धे दिव्यचन्दने ॥ २२ ॥
स्वादुकण्टकमाचख्युर्गोक्षुरे च विकङ्कते ।

वंशवीजे यवफलो वल्कके धान्यमार्कवे ॥ २३ ॥
देवप्रियः अगस्त्यः स्याद्दचाश्वेतादिपिच्छरी । *
गोलोम्यां गृञ्जनं प्रोक्तं लशुने वृत्तमूलके ॥ २४ ॥
कुङ्कुमे रामठे वाह्लिर्वलायामोदनी भवेत् ।
महासमङ्गा चैश्वर्य्यां जटामांस्यां जटा स्मृता ॥ २५ ॥
कस्तूरी मृगनाभी च धुस्तूरे परिकीर्त्तिता ।
हंसपाद्यां मुसल्याञ्च ख्याता गोधापदी बुधैः ॥ २६ ॥
तपस्वी हिङ्गुपत्राञ्च प्रकीर्य्यं रौप्य-मुक्तयोः ।
तारं स्यान्माषपर्ण्यां तु लिङ्ग्याञ्चाहुः स्वयम्भुवम् ॥ २७ ॥
सहस्रवेधी कस्तूर्य्यां रामठेऽथाब्जकेसरे ।
पुन्नागे तुङ्गमाचख्युस्त्रिवृद्धान्यविशेषयोः ॥ २८ ॥
मसूरोऽप्यथ विश्वायां शुण्ठी प्रतिविषा तथा ।
श्रीगन्धं गन्धपाषाणे गन्धसारेऽथ पिच्छिले ॥ २९ ॥
शाल्मली शिंशपे वासा-वृहत्यौ हिंस्रिकाभिधे ।
मर्कटस्त्वजमोदायां वनौकसि च विश्रुतः ॥ ३० ॥
स्याल्लाङ्गली गुडूच्यां तु विशल्यामथ तेजिनी ।
तेजोवत्यां तु मूर्व्वायां चाङ्गेरी-लोणशाकयोः ॥ ३१ ॥
लोणिका चापि पिण्याकं तिलकिट्ट-तुरुष्कयोः ।
वृहत्यां चैव वृन्ताके वार्त्ताकी च सदाफलम् ॥ ३२ ॥
उदुम्बरे विल्ववृक्षे लज्जा-खदिरवृक्षयोः ।
खदिरे चाथ सामुद्रं लवणे चाब्धिफेनके ॥ ३३ ॥

* दिपिच्छरीत्यत्र दिपिच्छदीति पाठान्तरम् ।

ग्रन्थिलो गोक्षुरे विल्वे कटुका-मीनपित्तयोः ।
मत्स्यपित्ताऽथ रजनी हरिद्रा-नीलिकाख्ययोः ॥ ३४ ॥
मिश्रेयके मुरस्याश्च वातपत्रोऽथ मुस्तके ।
अब्दोऽभ्रके श्वेतपद्मे पुष्करं पुष्करे मतम् ॥ ३५ ॥
तुण्डिकेर्य्यां च कार्पासे तुण्डिका च प्रशस्यते ।
धुस्तूरे च विड़े धूर्त्तः श्रीवेष्टे सूचिपत्रके ॥ ३६ ॥
वृक्षधूपो हिमांशौ स्यात्कर्पूरे च प्रकीर्त्तितः । *
जातीफलं तु शैलूषे श्रीफले च सितावरी ॥ ३७ ॥
सूचिपत्रे तु वाकुच्यां शर्करा-गण्डदूर्वयोः ।
मत्स्यण्डिका तु द्राक्षायां चराब्दे तापसप्रिया ॥ ३८ ॥
फञ्जी तु वोकड़ी चैव अजान्त्र्यान्तु प्रचक्षते ।
अर्कावर्त्तं रवौ सूर्य्यः पेयं क्षीरे जले स्मृतम् ॥ ३९ ॥
कर्पूरे शुक्रके चन्द्रः क्षौद्रे ताप्ये च माक्षिकम् ।
मञ्जिष्ठा-तगरे भण्डी तूक्षटा गुञ्ज-मुस्तयोः ॥ ४० ॥
सुवर्चलं मातुलिङ्गे रुचके च सुवर्चला ।
अर्कावर्त्ते तु मण्डूक्यां क्षीवेर-पिचुमर्दयोः ॥ ४१ ॥
निम्बोऽथ सप्तलायान्तु सप्तला नवमल्लिका ।
लाङ्गल्यां गजपिप्पल्यां ख्याता वह्निशिखा तथा ॥ ४२ ॥
ज्योतिष्मत्यां काकजङ्घा पारावतपदी तथा ।
दुरालभा यवासे च यासे च क्षुरको मतः ॥ ४३ ॥
गोक्षुरे कोकिलाक्षे च क्षुरे गोकण्टके क्षुरः ।

* "च प्रकीर्त्तितः" इत्यत्र "त्विन्दुरीरितः" इति पाठान्तरमस्ति ।

पुष्करञ्च पलाशे च चोरश्रेष्ठः प्रकीर्त्तितः ॥ ४४ ॥
सोमो धान्याभ्रके सोमे प्रिया मद्येऽङ्गनान्तरे ।
मुनिद्रुर्वण्टकेऽगस्त्येऽथामृणालमुशीरके ॥ ४५ ॥
लामज्जके ब्रह्मत्वचो रक्तागस्त्ये पलाशके ।
वटे प्लक्षे च शृङ्गो स्यात् कान्तारो वनवंशयोः ॥ ४६ ॥
भूतृणे धान्यके छत्रं मूलके शिग्रुमूलके ।
मूलकञ्च यमानी तु दीपिका-वस्तमोदयोः ॥ ४७ ॥
एलबालुककर्कट्योर्वालुकं चोरभूरुहम् ।
ताम्रं चोदुम्बरे चाथ भूजम्बूः श्रवणो तथा ॥ ४८ ॥
रीत्यां पुष्पाञ्जने रीतिः सचिवो मन्त्रि-धूर्त्तयोः ।
चाणका मूलके मिश्रे शालयोऽथार्कसारिवे ॥ ४९ ॥
आस्फोतायान्तु पर्जन्यो वृष्टि-दारुहरिद्रयोः ।
लकुचं शुक्रवास्तुके लिकुचेऽथ गुणा मता ॥ ५० ॥
दूर्वायां मांसरोहिण्यां सातला मांसरोहिणी ।
उभे चर्मकषायन्तु नीवारे पिण्डकर्बुरे * ॥ ५१ ॥
मुनिप्रियो वरायान्तु गुडूची तु विडङ्गके ।
रसन्तु पारदे बोले रसः पारद-चर्मणोः ॥ ५२ ।
भल्लुकः शुनके ऋक्षे पद्मिन्यां नलिनीष्विभो ।
किंशुके प्रवरौ ख्यातौ आरुके परिकीर्त्तिताः ॥ ५३ ॥
चित्रके मेथिकावीजे ज्योतिष्कश्चाथ वार्षिके ।
त्रायमाणाऽन्यपुष्याञ्च मेथिका-चित्रमूलयोः ॥ ५४ ॥

---

* पिण्डकर्बुर इत्यत्र पिण्डखर्जुर इति पाठभेदः ।

वल्लरी चाथ कलभो धुस्तूरे च गजार्भके ।
त्रुटि-नोलिकयोरेला शिखण्डो च मयूरके ॥ ५५ ॥
सुवर्णयूथिकायाञ्च कारवे रुचके तथा ।
तत्प्रोक्तं कृष्णलवणं दाड़िमे च कपित्थके ॥ ५६ ॥
स्मृतं कुचफलं शाक-श्रेष्ठः कुष्माण्डके तथा ।
कलिङ्गे च स्मृतश्चाथ खगो वायौ च पक्षिणि ॥ ५७ ॥
धनुर्वच्चो धन्वनागे स स्याद्गन्धात इत्यपि ।
घेटुके खड्गशिम्बग्राञ्च पृथुशिम्बग्रथ चेतना ॥ ५८ ॥
पथ्यारुष्कस्तु निचुले अशोके वञ्जुलः स्मृतः ।
कपिकच्छ्वां त्वपामार्गे मर्कटो चान्यपक्षिणी ॥ ५९ ॥
भारद्वाजो भवेदन्य-कार्पासे चाथ गुग्गुलौ ।
दहनागुरौ पुरश्च प्रोक्ताऽथ जतुपत्रिका ॥ ६० ॥
क्षुद्राश्मभेदे चाङ्गेर्य्यामतसो शालिपर्णिका ।
एकमूला तु कुम्भी स्यात्पाटली-द्रोणपुष्पयोः ॥ ६१ ॥
वाराही च हरिक्रान्ता विष्णुक्रान्ताऽभिधा मता ।
सारङ्गश्चातके रङ्गे शङ्खो वारिभवे नखे ॥ ६२ ॥
मांसलं तु फले प्रोक्तं वृन्ताके तु कलिङ्गके ।
निष्पत्रिकायां वंशाग्रे करीरं सम्प्रकीर्त्तितम् ॥ ६३ ॥
माषपर्ण्यान्तु गुञ्जायां काम्भोजी चाथ पूतना ।
गन्धमांस्यां हरीतक्यां चित्राङ्गं म्लेच्छतालयोः ॥ ६४ ॥
अङ्कोलके तु मदनं ख्यातं गन्धोत्कटे बुधैः ।
तिनिशे शिंशपायान्तु भस्मगर्भः प्रकीर्त्तितः ॥ ६५ ॥
वाते मरुद्रदे चैव ख्यातो वैद्यैः समीरणः ।

चोरं दुग्धे तवक्षीरे * क्षवथुः क्षुतकासयोः ॥ ६६ ॥
सितमन्दारके पुष्प-विशेषे कुरवः स्मृतः ।
सुषवी कटुहुञ्चायाञ्च विश्रुता स्थूलजीरके ॥ ६७ ॥
कण्टकी खदिरे प्रोक्ता हृस्ताके चाथ नीलिका ।
सिन्दुवारे तु नीलिन्यां पिके चैवाथ कोकिला ॥ ६८ ॥
कोकिलाक्षे च गान्धार्य्यां पत्नी स्यात्सा यवासके ।
चक्राङ्गी चैव रोहिण्यां मञ्जिष्ठायां प्रकीर्त्तिता ॥ ६९ ॥
मसूरा त्रिवृतायाञ्च प्रोक्ता धान्यविशेषके ।
गिरिजं गैरिकं प्रोक्तं शिलाजतु प्रशस्यते ॥ ७० ॥
चन्द्रिका चन्द्रकान्तौ च निर्गुण्ड्याञ्च प्रकीर्त्तिता ।
फञ्जी योजनवल्ल्यां तु भार्ग्यां चैवाथ नीलिका ॥ ७१ ॥
मृगाक्षी श्रीफलीकायां मृगाक्षी धात्रिकाफलम् ।
ख्याताऽमृतफले चाथ श्यामेक्षुः कोकिलाक्षकः ॥ ७२ ॥
इक्षुरके वक्रशल्यां कटुबिम्बी प्रचक्षते ।
दन्त्यन्तरे विभाण्ड्यां च प्रख्याता कर्त्तरी बुधैः ॥ ७३ ॥
अभया च समाख्याता हरीतक्यमृणालयोः ।
जन्तुकायां जनन्यान्तु भ्रामरी च भिषग्वरैः ॥ ७४ ॥
गोरसे रोचने गव्यं कार्पास्यां चव्यचव्यके ।
गोरोचना-रोचनायां ख्याता स्याद्वंशरोचना ॥ ७५ ॥
ज्योतिष्मत्यां पक्षिभेदे पिङ्गला च प्रकीर्त्तिता ।
अमृते शालपर्ण्यां सुधा च परिकीर्त्तिता ।
रसराजः समाख्यातः पारदे च रसाञ्जने ॥ ७६ ॥

---

* तवक्षीर इत्यत्र नवक्षीर इत्यपि पठ्यते ।

वल्लीकरञ्जे सितपाटलायां
कुबेरनेत्राऽथ जटादिमांस्याम् ।
मांसी रुदन्त्यां लवणे महौजि
कान्तायसाश्मे तु हि रोमकाख्यम् ॥ ७७ ॥

इति द्व्यर्थाः ।

---

## अथ त्र्यर्थाः ।

सितजे शतपत्रे च वासन्त्यां माधवी भवेत् ।
ज्योतिष्मत्यां किणिह्याञ्च सुपुष्प्यां कटभी स्मृता ॥ १ ॥
पुनर्नवेन्द्रगोपौ तु वर्षाभूर्दर्दुराः स्मृताः ।
सुकुमारस्तु श्यामाके चम्पके चवके तथा ॥ २ ॥
स्पृक्का तु सुकुमारायां नेपाली मालती स्मृता ।
महाबला गवाक्षी च गिरिकर्णी गवादनी ॥ ३ ॥
[illegible]भेदे च निम्बे च लशुने तथा ।
कटुका वंशदूर्वास्तु शतपर्वा च किंशुकः ॥ ४ ॥
ज्योतिष्मत्यां पलाशे च नन्दीवृक्षेऽथ लाङ्गली ।
हलिन्यां गजपिप्पल्यां नारिकेले प्रशस्यते ॥ ५ ॥
कदम्बे मल्लिकाख्ये च शिरीषे वृत्तपुष्पकः ।
गिरिकर्ण्यीन्द्रवारुण्यां पिण्डिन्याञ्च गवादनी ॥ ६ ॥

शिरीषे मधुके दन्त्यां मधुपुष्पन्तु वञ्जुलः ।
अशोके चैव भेरिण्यां निचले चाथ नाकुली ॥ ७ ॥
सर्पाक्ष्यां सितक्षुद्रायां यवतिक्तेऽथ दर्दुरः ।
भल्लातके ऋषभकेऽनडुहि च प्रशस्यते ॥ ८ ॥
मयूरके मेथिकायां चित्रके च भवेच्छिखी ।
कदल्यामजमोदायां गजे हस्तीति संज्ञका ॥ ६ ॥
अमोघा पद्मभेदे स्यात् पाटल्याञ्च विलङ्गके ॥
कुल्माषः काञ्जिके वंशे गन्धमाल्यां सुविश्रुतः ॥ १० ॥
सोमायां महिषीवल्ली-ब्राह्मी-हेमलताः स्मृताः ।
वंशे स्यान्नारिकेले च ताले च तृणराजकः ॥ ११ ॥
मुस्तायामभ्रके मेघे घनश्चाथ पितृप्रियः ।
अगस्त्ये भृङ्गराजे च कालशाके च विश्रुतः ॥ १२ ॥
दन्तशठस्तु चाङ्गेर्यां जम्बीरेऽथ कपित्थके ।
दहनोऽरुष्करे प्रोक्तो वृश्चिकाल्याञ्च चित्रके ॥ १३ ॥
विड़ङ्गे च जयन्त्याञ्च मोटायां च बला स्मृता ।
आम्रातके शिरीषे च प्लक्षे चैव कपीतनः ॥ १४ ॥
कुङ्कुमायां कारवल्ली काण्डीरे चौरपद्मके ।
यवासे क्षुद्रखदिरे कार्पासे च मरुद्भवा ॥ १५ ॥
समुद्रान्ता च स्पृक्कायां कार्पासे च यवासके ।
मण्डूकपर्णी मण्डूक्यां मञ्जिष्ठाऽऽदित्यकान्तयोः ॥ १६ ॥
ऋषभके तु वासायां बलीवर्दे वृषः स्मृतः ।
चाम्पेयं चम्पके प्रोक्तं किञ्जल्के नागकेसरे ॥ १७ ॥
उशीरे च लवङ्गे च शोखण्डे वारिसम्भवः ।

पलितं शैलजे श्यामे शुभ्रकेशे च विश्रुतम् ॥ १८ ॥
कुन्दुरुको धूपभेदे शल्लक्याञ्च तृणान्तरे।
पृथ्वीकायां हिङ्गुपत्री स्थूलैला कलिका स्मृता ॥ १९ ॥
शतपत्रो राजकीरे कमले पुष्पभेदके।
न्यग्रोधस्त्वाखुपर्ण्याञ्च विषपर्ण्यां वटे स्मृतः ॥ २० ॥
क्षुद्राग्निमन्थे तर्कारी जीमूते चाग्निमन्थके।
श्वेते रौप्ये च मीनाण्ड्यां सिता च परिकीर्त्तिता ॥ २१ ॥
सोमवल्कस्तु रीठायां कदरे कृष्णगर्भके।
शैलेयके शिलाह्वा च कुनव्याञ्च शिलाजतौ ॥ २२ ॥
पाटलायां माषपर्ण्यां काश्मर्य्यां कृष्णवृन्तिका।
जटामांस्याञ्च मांसे च लाक्षायाञ्च पलं स्मृतम् ॥ २३ ॥
समङ्गायां रक्तपादी मञ्जिष्ठा च बला स्मृता।
भल्लातके विल्वतरौ पार्थे वीरतरुः स्मृतः ॥ २४ ॥
दुःस्पर्शायां कण्टकारी कपिकच्छुर्दुरालभा।
वत्सादन्यां गुडूची च तार्क्ष्यी च गजपिप्पली ॥ २५ ॥
आमण्डे पुष्करे कञ्जे पद्मपर्णं प्रचक्षते।
कालेयकं तु दार्व्याञ्च कुङ्कुमे हरिचन्दने ॥ २६ ॥
श्रीखण्डे चाजगन्धे स्याच्छ्रीवेष्टे तिलपर्णिका।
लोध्रे पूगीफले चैव तूले च क्रमुकः स्मृतः ॥ २७ ॥
पिप्पल्यां यूथिकायाञ्च जीरके माधवी भवेत्।
अजमोदा शताह्वायां मिश्रिश्चैव शतावरी ॥ २८ ॥
त्रपुस्यां कर्कटी तौसी तथा स्याद्वनकर्कटी।
कुस्तुम्बर्य्याञ्च भूम्यवयां धान्यं व्रीह्यादिकं स्मृतम् ॥ २९ ॥

त्रपुसी देवदाली च घोटिके शफले स्मृता ।
तण्डुल्यां यवतिक्ता च शशाण्डुल्यब्दनादयोः ॥ ३० ॥
सुरदारुर्गन्धवध्वोश्चण्डायां गन्धमादिनी ।
श्यामेक्षुके क्षुरकेऽपि काकाक्षि कोकिलाक्षकः ॥ ३१ ॥
वराङ्गं मस्तके गुह्ये त्वचायाञ्च प्रशस्यते ।
कण्यां श्वेतकिणिह्याञ्च कटभ्यां गिरिकर्णिका ॥ ३२ ॥
पतङ्गोऽर्के मधूके च पट्टरञ्जनके तथा ।
द्राक्षा च शतवीर्य्यायां दूर्वा चैव शतावरी ॥ ३३ ॥
शुण्ठी प्रतिविषा चैव विश्वायाञ्च शतावरी ।
जया हरिद्रा विजया जयन्त्याञ्च प्रशस्यते ॥ ३४ ॥
कच्छुरायां दुरालभा स्वयंगुप्ता यवासकः ।
पुण्ड्रेक्षौ चाथ गोधूमे रसाले च प्रचक्षते ॥ ३५ ॥
द्राक्षायान्तु रसाला स्याद्दृश्यते च भिषग्वरैः ।
हैमवत्यां वचा श्वेत-क्षीरिणी लोमशा स्मृता ॥ ३६ ॥
विल्वे धात्रीफले चैव श्रीफलं चार्द्रचिक्कणी ।
जात्यां पक्षिविशेषे च कमलं सारसं स्मृतम् ।
तिलके च छिन्नरुहा सुपवी केतकी भवेत् ॥ ३७ ॥
वंशः सर्जद्रुमे वेणौ कुलाम्नाये च कीर्त्तितः ।
सलिले वत्सनाभे च व्याले चैव विषं स्मृतम् ॥ ३८ ॥
स्थूलकन्दो मुखालुः स्यात् शूरणं हस्तिकन्दकम् ।
आम्रातके पीतनकेऽप्यम्लिका च पलाशिका ॥ ३९ ॥
विषदोष्यां महानिम्बे मदने विषमुष्टिकः ।
तगरे कुङ्कुमे प्रोक्तो धुस्तूरे च शठः स्मृतः ॥ ४० ॥

कपित्थः स्वर्णयूथ्याञ्च कुष्माण्डे नागपुष्पके ।
तिलके चातिमुक्ते च इक्षुभेदे च पुण्ड्रकः ॥ ४१ ॥
आखोटे वारुणी चैव गवाक्ष्यां चर्मवादिनी ।
तोयवल्ल्याञ्च काण्डीरो महादुग्धाऽमृतस्रवा ॥ ४२ ॥
पृथ्व्यां पुनर्नवा मेदा धारिणी च प्रशस्यते ।
मुचुकुन्दे जयापुष्पे गणिर्य्यां हरिवल्लभा ॥ ४३ ॥
कामुके लघुकाश्मर्य्यां कैडर्य्योऽन्यकरञ्जके ।
द्राक्षाऽन्तरे शिखरिणी नेवाल्यां दधिभेदके ॥ ४४ ॥
कुटजेन्द्रयवौ प्रोक्तौ पुष्पकासीसवत्सके ।
क्षौद्रे मद्यान्तरे प्रोक्तो मधुयष्ट्यां मधुः स्मृतः ॥ ४५ ॥
चटके खरसे चैव नीलकण्ठो मयूरके ।
शोणितं कुङ्कुमे रक्ते रक्तगन्ध इति स्मृतम् ॥ ४६ ॥
तर्कारी देवदाल्याञ्च अरण्यां वह्निमण्डले ।
वसर्य्यां वृश्चिके चैव काकवन्ध्या सकृत्प्रजा ॥ ४७ ॥
कटुङ्ग्याञ्च कटभ्याञ्च पटोल्यां दधिपुष्पिका ।
धुस्तूरे केसरे हेम्नि सुवर्णं सम्प्रचक्षते ॥ ४८ ॥
सुवर्णायां हरिद्रायां वारुणी कणगुग्गुलुः ।
वाराह्यां शिशुमार्य्याञ्च कन्दभेदे च शूकरी ॥ ४९ ॥
पलाण्ड्वन्तरे लसुने मूले चाणक्यसंज्ञके ।
महाकन्दः समाख्यातो वैद्य-शास्त्रार्थ-कोविदैः ॥ ५० ॥
लोहे च वनरम्भायां लघुपाषाणभेदके ।
त्रिष्वेतेषु च गिरिजा प्रोक्ता यत्र भिषग्वरैः ॥ ५१ ॥
जरणः कासमर्दे तु रामठे कृष्णजीरके ।

स श्रमं जायते तीक्ष्णां तगरे च प्रशस्यते ॥ ५२ ॥

दुरालभायां कपिकच्छुके स्यात्
तथा शिखर्य्यां दुरभिग्रहा च ।
महासमङ्गा बहुपुत्रिका च
सा सारिवा स्यात् फणिजिह्विकायाम् ॥ ५३ ॥

इति त्र्यर्थाः ।

---

## अथ चतुरर्थाः ।

—○○—

अम्लिकायान्तु चाङ्गेर्य्यां मोचिका चाम्रचिश्चके ।
वयःस्थायाञ्च काकोल्यौ दार्वी च सोमवल्लरी ॥ १ ॥
जन्तुकायां पुत्रदात्र्यां षट्पद्यां भ्रमरी त्वचौ ।
भ्रमरो चारको वैद्य-शास्त्रमायुष्मते स्मृतः ॥ २ ॥
अभया चिर्भिटा बन्ध्या कर्कोटी च मृगादनी ।
पथ्यायां संप्रवच्यन्ते चतस्रश्च भिषग्वरैः ॥ ३ ॥
कुष्ठे कुन्दुरुके निम्बे राजके राजभद्रकः ।
कटके काचके लोहे तिलके गन्धभेदकः ॥ ४ ॥
मौञ्जाख्यायां महाराष्ट्र्यां काकमाच्यां ततः परम् ।
ब्रह्ममण्डूकिकायान्तु मत्स्याची च प्रचक्षते ॥ ५ ॥
नलाम्बरः कौशिके स्याद्वलुजे दुण्डुभे पुरे ।
शिफाऽजगन्धाकारव्यौ मेथिका चाजमोदिका ॥ ६ ॥

पञ्चास्ये मर्कटे चाश्वे मण्डूके च हरिः स्मृतः।
श्यामालङ्का त्रिपूटायां स्थूलैला वृत्तमल्लिका ॥ ७ ॥
लोहश्च लोहजे कांस्ये कृष्णलोहे तथाऽगुरौ।
खर्जूर्य्यां नारिकेले च ताले वंशे दुरारुहा ॥ ८ ॥
शुण्ठीमरिचपिप्पल्यां कणामूले षडूषणम्।
अग्निस्त्वरुष्करे जारे निम्बुके चित्रके तथा ॥ ९ ॥
भूताङ्कुशस्त्वपामार्गे सुकुमारश्च राजिका।
त्वचे चाम्लबले चैव प्रोक्तस्तत्र भिषग्वरैः ॥ १० ॥
शमी हरिद्रा वृद्धिश्च लक्ष्मी स्यात्पद्मचारिणी।
जम्बूकी सोममत्स्याची क्रोड़ी ब्राह्मी च कीर्त्तिता ॥ ११ ॥
मार्कवे भ्रामरे भृङ्गस्त्वचे पक्षिविशेषके।
रोचनं स्याद्दाड़िमके जम्भे निम्बे च पूरके ॥ १२ ॥
सिताब्जे दमने व्याघ्रे रुग्भेदे पुण्डरीकक:।
जलजं मौक्तिके शङ्खे लोणक्षारे लवङ्गके ॥ १३ ॥
बन्ध्याककौटकी चैव वृहत्यन्या च लक्ष्मणा।
सुतदा पुत्रदायान्तु चतस्रः परिकीर्त्तिताः ॥ १४ ॥
उशीरं शञ्जनश्चैव मधुपुष्पश्च वञ्जुलः।
दीर्घपत्रे च केतक्यां कन्यायां दीर्घपत्रिका ॥ १५ ॥
वासन्ते रुचके प्लक्षः कलिङ्गे देवसर्षपः।
लामज्जके दीर्घमूलं यासे वेल्लन्तरे शठे ॥ १६ ॥
तथा स्याच्छालिपर्ण्याञ्च दीर्घमूला स्मृता बुधैः।
रामायां त्रायमाणायां कन्याऽशोकश्च सातला ॥ १७ ॥
अमृतं वेदनक्षारे सुधायाञ्च तथा विषे।

वराहः शिशुमारे च वाराह्यां शूकरे घने ॥ १८ ॥
वाराहे वञ्जुले कासे नादेयो जलवेतसे ।
शारदो वकुले राष्ट्र्यां सारिवाकृष्णमुद्गयोः ॥ १९ ॥
कुब्जके वार्षिकायाश्च फलिन्यां योषिति प्रिया ।
काश्मीरं कुङ्कुमे देशे पौष्करे मृगनाभिजे ॥ २० ॥
केसरो वकुले हेम्नि किञ्जल्के च कसीसके ।
जम्बीरः स्यान्मरुवके गुच्छे चार्जुनयुग्मके ॥ २१ ॥
वसुके वसुराजार्क-कृष्णागुरुपुनर्नवाः ।
जपान्तकन्दान्यरुद्रा-मुचुकुन्देषु लक्ष्मणा * ॥ २२ ॥
हर्षणो सारसे कामी चक्रे पारावते तथा ।
मूषके कुक्कुटे क्रौञ्च्यां वृश्चिके च बहुप्रजः ॥ २३ ॥
अजशृङ्गी च मञ्जिष्ठा-युक्ता कर्कटशृङ्गिका ।
प्रतिविषासमायुक्ता शृङ्गयाश्चैव प्रशस्यते ॥ २४ ॥
सुरसे तुलसी ब्राह्मी निर्गुण्डी कणगुग्गुलुः ।
चीनायां क्षारवल्याश्च वचायां लवणे पटुः ॥ २५ ॥
पाटल्यां श्यामकिण्हो ताम्रवर्णो तथाऽपरम् ।
जीवन्तिका ताम्रपुष्पा कथिताः शास्त्रकोविदैः ॥ २६ ॥
हिङ्गुले कुङ्कुमे रक्तमस्त्रे चोक्तश्च पद्मके ।
दुग्धी गोडुम्बूपलाशे काकोल्यां दुग्धफेनके ॥ २७ ॥
मुसली स्वर्णली चैव कण्टकारीन्द्रवारुणी ।
आख्याता हेमपुष्पश्च नानार्थज्ञविशारदैः ॥ २८ ॥

---

* अधिकोऽयं श्लोकः पुस्तकान्तरे दृश्यते ।

निशायाञ्चैव नीलिन्यां हरिद्रायामलक्तके ।
रजनीति समाख्याता आयुर्वेदेषु धीमता ॥ २९ ॥

इति चतुरर्था: ।

---

## अथ पञ्चार्था: ।

—०:◌*◌:०—

अजमोदाऽजगन्धा च शिखण्डी कोकिलाक्षक: ।
अपामार्गस्तु पञ्चैते मयूर इति शब्दिता: ॥ १ ॥
कदली शाल्मली मोचा नीली शोभाञ्जनं तथा ।
पञ्चस्वेतेषु मोचाख्यां प्रयुञ्जन्ति भिषग्वरा: ॥ २ ॥
सुरभि: शल्लकी वोकं कदम्बश्चम्पक: सुरा ।
यवो दर्भो हरिद्रा च पवित्रे हिज्जलस्तिल: ॥ ३ ॥
यमानी जीरकश्चैव मोदाऽजा रक्तचित्रक: ।
निम्बुश्चेति च पञ्चैवं दीप्यका: समुदाहृता: ॥ ४ ॥
कपिकच्छू: कोविदार: पन्नग: कृतमालक: ।
तथा छिन्नरुहा चेति कुण्डलीपञ्चकं स्मृतम् ॥ ५ ॥
शलाटुरग्निमन्थश्च क्षुद्राग्निमथनं तथा ।
काश्मीरी शिंशपा चैव श्रीपर्णी पञ्चधा स्मृता ॥ ६ ॥
महासमङ्गा वन्दाका जतुका चामृतस्रवा ।
महामेदा च पञ्चैता ज्ञेया वृक्षरुहा बुधै: ॥ ७ ॥
गोविशेषे मृगादन्यां शिंशपारेणुकाह्वयो: ।
रीत्यन्तरे च विबुधै: कपिला पञ्चसु स्मृता ॥ ८ ॥

कायस्थायाञ्च काकोल्यौ पथ्यैला बहुमञ्जरी ।
व्यालस्तु चित्रक-व्याघ्र-सिंह-दुष्टद्विपादिषु ॥ ९ ॥
वृन्ताके चान्यवारुण्यां क्षुद्रायां चिर्भिटाह्वये ।
लिङ्गिन्याञ्चेति पञ्चसु ज्ञेया चित्रफला बुधैः ॥ १० ॥
बर्बरी हिङ्गुले बाले भारङ्ग्यां हरिचन्दने ।
असिते चार्जके चैव कथितः शास्त्रकोविदैः ॥ ११ ॥
यमान्यामजमोदायां वचायां दीप्यके तथा ।
अरक्तलशुने चैव ह्युग्रगन्धा तु पञ्चसु ॥ १२ ॥
महाबलायां सम्प्रोक्ता सहदेवी तु नीलिनी ।
वत्सादनी देवसहा पिप्पली पञ्चसु स्मृता ॥ १३ ॥
ज्योतिष्मत्यां काकतुण्ड्यां काकमाच्यां तथैव च :
वायसी काकजङ्घायां काक्याञ्चैव तु पञ्चधा ॥ १४ ॥
लिङ्गिनी स्वर्णजीवन्ती रौद्री स्यान्नाकुली तथा ।
वन्ध्याकर्कोटकी चैव ईश्वर्य्यां सम्प्रचक्षते ॥ १५ ॥
वसन्तदूत्यां गणिकारिकाऽऽम्रवासन्तिकापाटलकोकिलाश्च ।
वत्सादनी वाकुचिका गुडूची सोमा समण्डूकिकसोमवल्ल्याम्॥१६॥
चक्री नखान्तरे कोके दद्रुघ्ने तिनिशे खरे ।
सिन्धुजे तिलके धात्र्यां पारदे टङ्कणे शिवम् ॥ १७ ॥
जाती सुरीरी कटुतुम्बिनी च छुछुन्दरी रेणुरसाऽजपुत्री ।
स्वर्णेऽप्यथो गुग्गुलुकेसराख्य-ग्रन्थिषु धीराः कनकं वदन्ति ॥ १८ ॥

इति पञ्चार्थाः ।

# अथ षडर्थाः।

—०*०-

वृहल्ला वरी ताली कटुकाऽतिविषा तथा।
काकोली चैव षड् वर्गं वीरायाश्च प्रचक्षते॥ १॥
सातला क्षीरकाकोली विभाण्डी चाजशृङ्गिका।
कुञ्जरी दर्दुरश्चैव षड् विषाणीति कीर्त्तिता॥ २॥
नीलदूर्वा निशाऽऽढ्यश्च रोचना च हरीतकी।
बहुपुष्पी भिषग्वर्य्यैः शिवायां षड्मी स्मृताः॥ ३॥
निम्ब-खर्जूरि-तालीसं मरिचं वृक्तमूलकम्।
पलाण्डुश्चेति षड्मी निम्बसंज्ञाः प्रकीर्त्तिताः॥ ४॥
मूर्वा स्रक्का सहदेवा देवद्रोणी च केसरम्।
आदित्यभक्ताः षड़िति देवीसंज्ञाः प्रकीर्त्तिताः॥ ५॥
ब्राह्मणः क्षत्रियो वैश्यो दन्तः सर्पः खगस्तथा।
द्विज-द्विजन्मशब्दाभ्यामीरिताः सूरिभिः सदा॥ ६॥
गवादनी चैव दूर्वा गण्डदूर्वा च हस्तिनी।
प्रतीची मदिरा चेति वारुण्यां षट् सुसम्मताः॥ ७॥
हपुषा पीतनिर्गुण्डी विष्णुक्रान्ता जयन्तिका।
शिताद्रिकर्णी-शङ्खिन्यौ षड़ेता अपराजिताः॥ ८॥
कुमारी च वराही च वन्ध्याकर्कोटकी मृदुः।
स्थूलैला स्थलपर्णी च षट्कन्याश्च कुमारिका॥ ९॥

वीजद्रुमे गजे चैव सीसके नागकेसरे ।
विषे च पन्नगे चैव षट्सूक्तो नाग इत्यपि ॥ १० ॥
सूक्ष्मैला च महाराष्ट्री मत्स्याक्षी काकमाचिका ।
गण्डदूर्वा च गण्डूकी मत्स्यादन्यां षडीरिताः ॥ ११ ॥
माणि कलिङ्गे कोशाम्ने शल्ये काके च धूर्त्तके ।
मदनश्च समाख्यातः षड्मी समुदाहृताः ॥ १२ ॥
दोडी गुडूची मेदा च काकोली हरिणी तथा ।
जीवन्ती चैव षट् प्रोक्ता जीवन्त्याश्च भिषग्वरैः ॥ १३ ॥
धूम्राट-भृङ्गौः खलु मांसले च प्लक्षे शिरीषे कुटजे कुलिङ्गः ।
द्राक्षा च दूर्वा जरणा कणा च कृष्णाभिधा वाकुचिका कटुश्च ॥१४

इति षडर्थाः ।

## अथ सप्तार्थाः ।

—:*:—

भद्रायान्तु बला नीली दन्ती काश्मरी सारिवा ।
श्वेताद्रिकर्णी गौरी च सप्त प्रोक्ता भिषग्वरैः ॥ १ ॥
मञ्जिष्ठा कटुका पथ्या काश्मरी चन्द्रवल्लभा ।
वन्दाकी रजनी चैव रोहिण्यां सप्त च स्मृताः ॥ २ ॥
धात्री बहुफलायां स्याच्छर्दिनी काकमाचिका ।
काम्भोजी च गशाण्डली कटुतुम्बी च वालुकी ॥ ३ ॥

मण्डूकी ब्रह्मजा शङ्ख-पुष्पी ज्योतिष्मती मुनिः ।
विष्णुक्रान्ता वचा श्वेता मेध्यायां सप्त सम्मताः ॥ ४ ॥
आखुकर्णी सुतश्रेणी इन्द्राह्वा च कलिङ्गकः ।
गण्डदूर्वा गवाक्षी च चित्रायामृक्षमेकतः ॥ ५ ॥
रास्ना पाठा प्रियङ्गुश्च सितक्षुद्रा हरीतकी ।
श्रेयस्याश्चेति सम्प्रोक्ता अम्बष्ठा गजपिप्पली ॥ ६ ॥

इति सप्तार्थाः ।

---

## अथ अष्टार्थाः ।

—०*०—

विजया काञ्चनद्वन्द्वं मञ्जिष्ठा च वचा तथा ।
स्यात्तथा श्वेतनिर्गुण्डी जयन्ती काञ्जिकाऽभया ॥ १ ॥
एरण्डनद्याम्रलताकरञ्जाः स्याद्ब्रह्मदण्डी पनसः कुसुम्भः ।
स्याद्गोक्षुरः कण्टफले च धूर्त्तौ भिषग्भिरष्टाविति सम्प्रदिष्टाः ॥२॥
स्वर्णौ कपित्थे दधिनारिकेलयोः स्याज्जीवके चेत् स्थलपद्मके तथा ।
मयूरकेतौ समधूकके तथा माङ्गल्यमष्टाविति सम्प्रचक्षते ॥ ३ ॥

इत्यष्टार्थाः ।

---

## अथ नवार्थाः ।

-०*०-

वातारिर्जंतुकायाश्च भल्लयां नीलदवज्ञयोः ।
टेन्दुकामण्डयोर्भार्ग्यां निर्गुण्ड्यां शूरणे स्मृतः ॥ १ ॥
धात्री गुडूची रास्ना च द्विधा दूर्वा हरीतकी ।
लिङ्गिनी तुवरी मद्यं धीमतायां नवौषधी ॥ २ ॥
ब्राह्मी वराही लशुनी विषञ्च शुक्लादिकन्दः सितकण्टकारी ।
भूम्याहुली चेदपराजिता च शुण्ठीति चैतासु महौषधी स्यात् ॥३॥

इति नवार्थाः ।

---

## अथ दशार्थाः ।

—००—

सितायां वाकुची दूर्वा मद्यं धात्री कुटुम्बिनी ।
चन्द्रिका च प्रिया पिङ्गा त्रायमाणा च तेजिनी ॥ १ ॥

इति दशार्थाः ।

---

## अथैकादशार्थाः ।

—००*००—

स्यादभ्रमांसी तुलसी हरिद्रा
तालस्तथा रोचनहेमम
जनप्रिया योजनवल्लिका स्यात्
समल्लिका चन्द्रशशी च गौर्य्याम् ॥ १ ॥

दूर्वा निशा ऋद्धिवचा प्रिया च
सा माषपर्णी श्रिमिरोचना त्वथ ।
त्रायन्तिका जीवनिका महाबला
मङ्गल्यकायामिति चन्द्रमाह्वयाः ॥ २ ॥
प्रियङ्गुच्छिन्ना त्रिवृता कणाह्वया
वन्दाकदूर्वा तुलसी च नीलिनी ।
दुर्गा खगः कस्तुरिकृष्णसारिवा
श्यामा महीन्दुः कथिता भिषग्वरैः ॥ ३ ॥

इत्येकादशार्थाः ।

इत्थं विचिन्त्य विनिवेशिततत्तदेका-
नेकार्थनाम-गण-संग्रह पूर्णमेनम् ।
वर्गं विचार्य्य भिषजा बहुभक्तिभाजा
ज्ञेया स्वयं प्रकरणानुगुणाः प्रयोगाः ॥ ४ ॥

एको यस्य मनस्विनामचतुरो यस्य द्वयोरश्विनो-
स्त्यचाश्वाचतुरो नृपश्चवदनो नाम्नाऽरिषष्ठां जयी ।
एकार्थादिरमुष्य नाम-रचना-चूडामणौ यस्त्रयो-
विंशोऽसौ समपूरि सार्द्धममुना ग्रन्थेन वर्गो महान् ॥ ५ ॥

इति श्रीनरहरिपण्डितविरचिते निघण्टुराजापरपर्य्यायवत्यभि-
धानचूडामणावेकार्थाद्यभिधानस्त्रयोविंशो वर्गः ।

सम्पूर्णोऽयं ग्रन्थः ।